आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०५

नारायणकृतवृत्ति-गृह्यपरिशिष्ट-भट्टकुमारिलकारिकासहितम्

# आश्वलायनगृह्यसूत्रम् ।

एतत्पुस्तकं

वे० शा० सं० रानडे इत्युपाह्वगोविन्दात्मजपुरुषोत्तमशास्त्रिभिः

संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५८ ।

खिस्ताब्दाः १९३६ ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्याऽऽश्वलायनगृह्यसूत्रस्य पुस्तकानि यैः परहितैकपरतया प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते—

( क. ) इति संज्ञितम्—आनन्दाश्रमसंस्थास्थम् । अस्य लेखनकालः शाके १७०२ शार्वरीनामसंवत्सरः ।

( ख. ) इति संज्ञितम्—वे० शा० सं० पुण्यपुरनिवासिनां खाडिलकरदत्तात्रेयशास्त्रिणाम् । मुद्रितम् । मुद्रणकालः शाके १८११ ।

( ग. ) इति संज्ञितम्—पुण्यपत्तनवास्तव्यानां वे० शा० सं० प्रभुणे रामचन्द्रात्मजकृष्णशास्त्रिणाम् । अस्य लेखनकालः शाके १७१२ प्रमोदनामसंवत्सरः ।

( घ. ) इति संज्ञितम्—पुण्यपुरीस्थानां वे० शा० सं० भाटवडेकरत्र्यम्बकभट्टानाम् ।

( ङ. ) इति संज्ञितम्—पुण्यनगरीकृतनिवासानां वे० शा० सं० करंबेळकरगोपाळभट्टानाम् । अस्य लेखनकालः शाके ११८७ ।

## गृह्यपरिशिष्टादर्शोल्लेखः ।

( क. ) इति संज्ञितम्—वे० शा० सं० प्रभुणेकृष्णशास्त्रिणाम् । लेखनकालः ११७८ धातृनामसंवत्सरः ।

( ख. ) संज्ञितम्—श्री० 'गदाधरत्र्यम्बकभाटवडेकर' इत्येतेषाम् । अस्य लेखनकालः ११७९ ।

## कारिकादर्शोल्लेखः ।

( क. ) इति संज्ञितम्—'श्री० ग० त्र्य० भाटवडेकर' इत्येतेषाम् । मुद्रितमेतत्पुस्तकम् ।

# प्रास्ताविकं किंचित् ।

अयि विद्वांस आनन्दाश्रमप्रणयिनो जानन्त्येव श्रीमन्तो यत्संस्थयाऽनया शालिवा-
हनस्य १८३९ तमेऽब्दे श्रीमदाश्वलायनाचार्यप्रणीतस्य सूत्रस्य द्वादशाध्यायात्मको
नारायणवृत्तिसमेतः श्रौतसूत्राख्यो विभागः श्रीमतां करकिसलये सादरं समर्पित
इति । तस्यैव सूत्रस्यावशिष्टश्चतुरध्यायात्मको गृह्यसूत्रविभागाख्योऽद्य भवत्संनिधौ
समायातीति महदेतत्प्रमोदस्थानम् ।

मानवप्रवरा अखिलेऽप्यस्मिन्धरणीतलाभोगे विकीर्यतां क्वापि लोचनयुगुलं तत्रत्यं
यत्किमपि श्रीमतः प्रक्षोभयेत्प्रमोदयेद्वा तत्सकलमपि महीयसा प्रयत्नेन सुसंस्कारयु-
क्तमेव स्यादित्यत्र नास्ति खलु मनागपि संशीतिः । यो वा को वा भवतु सत्सं-
स्कारविशिष्ट एव शोभते नासंस्कृतः । अनर्घ्यमपि हीरकादिरत्नं शाणोत्कर्षणादिसं-
स्कारैरेवाऽऽसेचनकतामाप्नोति । शब्दादिपाठनेन समीचीनतया सुशिक्षित एव
शुको मञ्जुलालापैः श्रोतॄणां हर्षनिर्भरमान्दोलयति सोत्कण्ठमुत्तमाङ्गानि । गजाश्व-
वृषभादयोऽपि तिर्यञ्चः प्राणिनः संस्कारेणैव महनीयतामापद्यन्ते । अयोऽपि हि
सम्यक्कृतं यन्त्रीभूतं घटचालनादिवस्तुप्रयुक्तं मूल्येन सुवर्णमप्यधरयति, भिष-
क्प्रवरैरग्निदाहादिना भस्मीकृतं सत्तदेवाति हि महत्त्वाय कल्पते । अलं भूयसा
कस्कोऽपि वा संस्कारैरेव शोभमानः कार्यक्षमश्च जायते इति तु निश्चप्रचम् ।

ते च संस्कारा द्वेधा भवितुमर्हन्ति, दृश्या अदृश्याश्चेति । शास्त्रीया व्यावहा-
रिका वा । व्यावहारिकसंस्काराणां दृश्यफलत्वात्तेषां संपादनाय यथा साहजिक्येव
लौकिकी प्रवृत्तिर्दरीदृश्यते न तथा शास्त्रीयेषु संस्कारेषु तेषां दृष्टफलविधुरत्वात् ।
तथापि मातृशतादपि गरीयस्या श्रुतिमात्रा कथिता विप्रादीनां वैदिककर्मार्हत्व-
प्रयोजका गर्भाधानादिक्रियाकलापात्मकाः संस्कारा नावश्यतया कर्तव्यताकोटिमाटी-
कन्ते । एतावता नैकविधैश्वर्यरूपं स्वर्गादिवस्त्वात्मकमनुभवानिशापि केवलान-
न्दानुभवस्वरूपं मोक्षरूपं सुखं वा लिप्सुभिर्नूनं विधेयास्ते संस्काराः । नैतद्विषये
कस्यापि विसंवादः ।

यद्यपि संस्काराः श्रुति(प्रति)पादितास्तथाऽपि श्रुतीनामानन्त्यात्, कतिपयानां श्रुति-
शाखानां लुप्तत्वात्, सतीनां पुन. श्रुतिशाखानामनन्तरान्तरास्थितसंस्कारान्वेषणाति-
मात्रकष्टसाध्यत्वाच्च मा नाम क्लिश्यन्तेऽस्मदनुयायिनोऽपि जना इति सकलनि-
गमागमपारदृश्वा करुणावरुणालयो भगवानाश्वलायनाचार्योऽनायासं संस्कारावबोधाय
चतुरध्यायात्मकं गृह्यसूत्रं विरचयामास । षोडशाध्यायात्मकमिदमाश्वलायनीयं नाम

* सूत्रम् । प्राक्तनेषु द्वादशाध्यायेषु यज्ञविषयकं हौत्रं प्रकथयामासाऽऽचार्यः । विवाहकाले स्वीकृतेऽग्नौ नाम गृह्याग्नौ कर्तव्यानि कर्माणि बाहुल्येनास्मिन्गृह्यसूत्रे निर्दिष्टान्यत एवास्य गृह्यसूत्रमिति नामधेयम् । तत्र चतुर्विंशतिकण्डिकात्मके प्रथमेऽध्याये प्रायो वैश्वदेवहोमपद्धर्मनीलादिकर्मकालकन्यापरीक्षाविवाहप्रकारादष्टकपायप्रातर्होमस्थालीपाकपशुकल्पचैत्ययज्ञगर्भाधानपुंसवनानवलोभनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलगोदानव्रतोपनयनमेधाजननपुनरुपनयनस्विष्टकरणमधुपर्कादयो विषया व्याहृताः । द्वितीयेऽध्याये दशकण्डिकात्मके श्रवणाकर्मसर्पबल्याश्वयुजीकर्मप्रत्यवरोहणाष्टकाप्रयोगान्वष्टकामासिश्राद्धवृद्धिश्राद्धादिनिर्णयरथारोहणशकटारोहणनौकारोहणवास्तुपरीक्षाभूपरीक्षावास्तुशान्तिगृहप्रवेशगवानुमन्त्रणादि विषया उक्ताः । तृतीयेऽध्याये द्वादशकण्डिकात्मके पञ्चमहायज्ञलक्षणब्रह्मयज्ञदेवतादितर्पणोपाकरणोत्सर्जनस्वाध्यायाकरणदुःस्वप्नादिशान्त्यगम्यागमनप्रायश्चित्तदिवास्वापप्रायश्चित्तादिसमावर्तनप्रयोगस्नातकधर्मदुःशब्दसूचितभयपरिहारविधानादयो विषया निगदिताः । नवकण्डिकात्मके तुरीयेऽध्यायेऽन्त्येष्टिप्रयोगामावस्याशान्तिकर्मनीलो + द्वाहपार्वणश्राद्धादिप्रयोगशूलगवादयो विषयाः कथिताः ।

गौतमधर्मसूत्रे चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्चोक्ता । ते च यथा—गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मिणीसंयोगः पञ्च महायज्ञा अष्टकाः पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्काराः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेत्येतेऽष्टा आत्मगुणाः । एभिः संस्कारैर्गुणैश्च संस्कृतो ब्राह्मणो ब्रह्मणः सायुज्यमाप्नोतीति तेषां संस्काराणामावश्यकत्वं स्फुटं भवति ।

स्मृतिसंग्रहे संस्काराणां फलान्यप्युक्तानि तानि चेत्थम्—

निषेकाद्बैजिकं चैनो गार्भिकं चापमृज्यते ।<br>
क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥

---

* 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।' इति सूत्रलक्षणम् । 'संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ।' इति सूत्रलक्षणं तु शाब्दिकानाम् । + 'पिङ्गलोऽनड्वान्' ( ४ । ६ । ११ ) इत्यादिकं चेत ।

गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम् ।
निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः ॥
गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति ।
आयुर्वर्चोभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥
नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः ।
सूर्यावलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा ॥
निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टा मनीषिभिः ।
अन्नाशनान्मातृगर्भमलाशादपि शुध्यति ॥
बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम् ।
उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥
वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता ।
देवपित्र्यनृणापगमो विवाहस्य फलं स्मृतम् ॥

उपरितनस्मृतिसंग्रहोक्तवचनैः संस्कारैः कथं सिद्धिर्भवति तद्व्यक्तीभूतम् । यथा किमपि यन्त्रं भिन्नभिन्नावयवैः पूर्णतां प्राप्नोति तथैव खलु मानवोऽपि विशेषतः ब्राह्मणोऽनेकैः संस्कारैरेव संस्कृतो जायते ऐहिकं पारलौकिकं चोभयविधमपि संस्कारजन्यफलम् ।

'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ।

इत्यादिभूयोभिर्वचोभिर्मनुनाऽप्युक्तम् । संस्काराकरणे दोषमप्याहतुरप्याश्वलायनौ—

'स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥'
'संस्काररहिता ये तु तेषां जन्म निरर्थकम् ॥'

इत्यादिभिर्वचोभिः । यद्यपि भिन्नभिन्नस्मृतिग्रन्थेषु संस्कारविषयिणी मनागिव विभिन्नता दृग्गोचरी भवति तथाऽपि भूतिकामेन स्वस्वगृह्योक्ता एव संस्कारा विधेयाः।

अस्य पुनराश्वलायनीयसूत्रस्य सुखमनागऽवबोधार्थं देवत्रातापरनामधेयो देवस्वामी भाष्यं × चकार । देवस्वामिकृतभाष्यानुसारेण गृह्यसूत्रेऽस्मिन्नैनुवृत्तेण दिवाकरात्मजे-

---

×'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥' इति आश्वलायनगृह्यादिसंग्रहसमाप्यन्दस्य टीकायां महेश्वरः ।

न नारायणेन वृत्तिरारचिता । श्रौतसूत्रेऽपि नारायणस्यैव वृत्तिः प्रथितैव । परं श्रौत-सूत्रवृत्तिप्रणेता गार्ग्यगोत्रोत्पन्नो नृसिंहसूनुर्नारायणो गृह्यसूत्रवृत्तिकृतो दिवाकरात्मज-नैध्रुवगोत्रजनारायणादभिन्न एवेति प्रतीयते । केवलनारायणेतिनामधेयसाम्यात्, उभयोर्नारायणयोः पितृनामगोत्रे निपुणमविचार्यैव रभसात्, श्रौतसूत्रवृत्तिकारं गृह्य-सूत्रवृत्तिप्रणेतारं च केचनाभिन्नमेवावगच्छन्ति । परं

> 'आश्वलायनसूत्रस्य भाष्यं भगवता कृतम् ।
> देवस्वामिसमाख्येन विस्तीर्णं सदनाकुलम् ॥
> तत्प्रसादान्मयेदानीं क्रियते वृत्तिरीदृशी ।
> नारायणेन गार्ग्येण नरसिंहस्य सूनुना ॥'

इति श्रौतसूत्रवृत्तिप्रस्तावे गार्ग्यनारायणो व्यलिखत् । गृह्यसूत्रवृत्तिसमापनावसरे च

> 'आश्वलायनगृह्यस्य भाष्यं भगवता कृतम् ।
> देवस्वामिसमाख्येन विस्तीर्णं तत्प्रसादतः ॥
> दिवाकरद्विजवर्यसूनुना नैध्रुवेण वै ।
> नारायणेन विप्रेण कृतेयं वृत्तिरीदृशी ॥'

इति नैध्रुवनारायणेनोदलेखि । अनेनान्तःप्रमाणेनैव द्वयोः श्रौतगृह्यसूत्रवृत्तिकृतोः पार्थक्यं स्फुटीभूतमिति निभालयन्तु सारासारविमर्शपटीयांसश्चतुरशेमुषीकाः सुधियः ।

अयं गृह्यसूत्रवृत्तिकृन्नारायणः कतमं जनपदं स्वकीयेन जन्मनाऽलंचकार कतमं च कुलं विभूषयामासेति याथातथ्येन विवेक्तुमैतिह्यज्ञाननैपुर्याभावात् खलु शक्नुमो वयम् । तथाऽपि षट्शताब्द्याः प्राक्तनोऽयं नैध्रुवो नारायण इति तु निश्चप्रचम् । यतः—प्रायेण पञ्चशताब्द्याः प्राचीनः प्रयोगपारिजातप्रणेता श्रीनृसिंह एनं दैवा-कीर्ति तत्र तत्र नारायणमुल्लिखति, तेन च प्रतीयतेऽयं वृत्तिकृन्नहि षट्शताब्द्या अर्वाचीन इति ।

सूत्रकारहृदयाकूताविष्करणे पटीयसीयं नारायणी नाम वृत्तिः गृह्यसूत्रार्थयाथा-तथ्यप्रणयिनां याज्ञिकधुरीणानां चेतसि प्रमोदातिशयं विदध्यादिति निर्विचिकि-त्सम् । नैतत्परोक्षं अन्यमेनं साक्षात्कुर्वतो चिकित्सारमकशेमुषीजुषाम् । आश्व-लायनीयगृह्यसूत्रस्यास्य 'गृह्यपरिशिष्टम्' इति नामधेयं पूरणं विद्यते । तत्र प्रायः सूत्रानुक्ता भूयांसो विषयाः संगृहीताः परिशिष्टप्रणेत्रा । परं कदा केन च तत्प्रणीतं तद्विषयकं किमप्युट्टङ्कयितुं न प्रवर्ततेऽस्मदीयाऽन्तःकर्णिका । कुमारिलभट्टेन प्रकृत-सूत्रवृत्त्यनुरोधेनैकदूननवशतसंख्याकाः कारिका व्यधायिषत । तासामपि याज्ञिक-मण्डलीशौण्डानां महानुपयोगः स्यादिति गरीयान्विश्वासः । सूत्रवृत्तिगतरहस्यस्य

कण्ठस्थीकरणार्थं कारिकाणामासां सविशेषमुपयोगो भवेदित्यपि वाढं विश्वसिमः। गृह्यपरिशिष्टं कौमारिलकारिकाश्च ग्रन्थेऽस्मिन्नेतदुभयमपि समग्रं हि। अयं कारिकारचयिता कुमारिलो मीमांसावार्तिक+कृतो भिन्न उत स एवेति निर्देष्टुं न किमप्यसाधारणं विनिगमकमुत्पश्यामः। परं गृह्यसूत्रवृत्तिकृतो देवाकरेर्नैध्रुवनारायणात्।

मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु।

इति तत्कृतोल्लेखेन अर्वाचीन इति प्रतिभाति। एतासु कारिकास्वपि भाष्यं विद्यत इति कर्णोपकर्णिकया श्रवणसरणिमायाति। आश्वलायनसूत्रोपर्यपि हरदत्तस्य भाष्यं जयन्तादीनां कारिकाश्च विद्यन्त इति अन्यत्रेतरग्रन्थकृदुल्लेखात्स्फुटी भवति।

अत्र केचन संशयीरन् 'भगवताऽऽश्वलायनाचार्येण स्वकीये गृह्यसूत्रे विवाहाद्यौर्ध्वदेहिकान्ताः संस्कारा व्यरचिषत तत्र षोडशसंस्कारान्तःपातिनां महानाम्नीमहाव्रतोपनिषद्व्रताख्यसंस्काराणां कथं नु नाम संग्रहो नाकारि' इति। अत्रेदं बोद्धव्यम्। आश्वलायनाचार्येण श्रौतसूत्रस्याष्टमेऽध्याये चतुर्दशेऽन्त्ये 'एतद्विदं ब्रह्मचारिणमनिराकृतिनं० 'तेष्वाद्यधीनपूर्वाणामधीतपूर्वाणाम्' इत्याद्यन्तात्मके खण्डे सत्रेषु प्राकथितमिति न पुनराम्रेडितमिया तत्संस्कारत्रयमवाचि।

आश्वलायनाचार्येण तृतीयाध्याये चतुर्थखण्डे देवतादितर्पणप्रकरणमुक्तम्। तत्र सुमन्तुजैमिनि० 'इत्यारभ्य 'ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति' इत्यन्ते चतुर्थे सूत्र आचार्यतर्पणप्रसङ्गे स्वकीयं नामधेयमप्यवाचि। तेन प्रश्नद्वितयं पुरतः समुदेति। आश्वलायनकाले जीवतोऽपि तर्पणमथाऽऽसंदुताऽऽश्वलायनानन्तरं केनचित्सदन्तेवासिना स्वकीयगुरुगौरवार्थं तन्नामधेयमाश्वलायनसूत्रे समावेशितमिति। अत्रेत्थं प्रतिभाति—जीवतस्तर्पणं न संभवति। स्वगुरुगौरवभावनयाऽऽश्वलायनच्छात्रेणैव तर्पणे स्वगुरुनामधेयग्रहणं प्राक्सं तदेव सामर्थ्यमेतत्तं कालक्रमानुपूर्वपरम्परया प्रचलति। एवमेव सत्याषाढगृह्यसूत्रेऽपि तर्पणदेवतोल्लेखे 'सत्याषाढं तर्पयामि' इति सत्याषाढवदं तदीयसूत्रे दृश्यते, तदपि पुनरेवमेवेत्यवगन्तव्यम्। इत्थमेव सर्वत्राप्यूह्यम्। आहोस्विदाश्वलायनाचार्येणैव स्वसूत्रानुयायिनां कृते स्वीयमपि नामधेयं सप्रमाहीत्यपि संभाव्येत। यथा कथं वाऽस्तु। आचार्यानन्तरं केनचिदस्य सूत्रस्य कियदंशः एतत्सूत्रे प्रक्षिप्त इति न भ्रमितव्यम्।

श्रौतसूत्रे गार्ग्यनारायणस्य वृत्तिर्गृह्यसूत्रे च नैध्रुवनारायणीया वृत्तिरिति भिन्नवृत्तिकृतोर्वृत्तिद्वयं विद्यते तथैव श्रौतं गृह्यं सूत्रमपि विभिन्नयोरेवाऽऽश्वलायनयोः

---

+ उत्पातुलेकदुर्दरकार्येचिन्ताकारि सु वार्तिकम्। के एतच्चतुर्दशं कर्म्म परिशिष्टकर्पेणामे निवेदितम्।

त्स्यादिति न संदेग्धव्यम् । 'तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ' 'अथाग्नौ जुहोति यथोक्तं पुरस्तात्' 'पिण्डैर्व्याख्यातम्' 'उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः' इत्याद्यतिदेशपरिभाषासादृश्यादिभिस्तदेककर्तृकत्वं निर्विचिकित्सं सिध्यति । श्रुतिसूत्रयोरुपजीव्योपजीवकभावसंबन्धेन सूत्राणामपि श्रुतितुल्यत्वं मन्तव्यं न पुनर्मनागपि ततो न्यूनत्वम् । भगवत आश्वलायनाचार्यस्यापि सूत्रकर्तृत्वं स्वकीयाम्नायमूलकमेवेति तत्र तत्र विशदी भवति । यथा—'यज्ञोपवीती नित्योदकः संध्यामुपासीत वाग्यत । सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मण्डल आ नक्षत्रदर्शनात् । एवं प्रातः । प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात् ।' ( आ० गृ० सू० ३।७।३–७ ) इति सूत्रपञ्चकेनाऽऽचार्येण संध्योक्ता । एतस्याः मूलं तु तैत्तिरीयारण्यके संदृश्यते । 'रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्० ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद,' ( तै. आ. प्र. २ अ. २ ) एवमेव सूत्रकारेण ये खलु पञ्चमहायज्ञा निगदिताः 'अथातः पञ्च यज्ञाः' इत्यादिना सूत्रचतुष्टयेन तत्रापि 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति संतिष्ठन्ते' (तै. आ. प्र. २ अ. १०) इत्यारण्यकं मूलमिति बोद्धव्यम् । इत्थमेव च 'अथातः स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो० नमो विष्णवे महते करोमि' इति ग्रन्थेन तत्रापि 'ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि० प्रज्ञायैव प्रतिपदा छन्दाꣳसि प्रतिपद्यते' (तै. आ. प्र. २ अ. ११ ) इत्यारण्यकमेव निदानम् । एवमेवान्यत्रापि ज्ञेयम् । यथा—अन्त्येष्टिप्रकरणे 'अनुस्तरण्या वपामुत्खिद्य शिरोमुखं०' ( आ. गृ. ४।३।१९ ) एवमादिभिः सूत्रैः कथितमनुस्तरणीकर्म 'अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च । नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ॥' (ऋ. सं. ७. ६ । २१) अयमेव मन्त्रस्तैत्तिरीयारण्यके मन्त्रान्तरैव मिश्रतया दृश्यते । तै. आ. ६ । १ । १ इत्यादिभिर्मन्त्रैराचार्येणोक्तम् । इदमेवात्रास्य विवक्षितं यत्, सूत्रकारेण सकलमपि सूत्रं वेदमूलकमेव रचितं अतः खलु सूत्राण्यपि श्रुतितुल्यत्वमेव प्रयान्ति । एवमेवान्यैरपि सूत्रकारैविरचितानां सत्याषाढभरद्वाजापस्तम्बबौधायनवैखानसादिकृष्णयजुर्वेदीयसूत्राणां कात्यायनपारस्करादिशुक्लयजुर्वेदीयसूत्राणां सांख्यायनादिऋग्वेदीयानां लाट्यायनद्राह्यायणगोभिलखादिरजैमिनीयादिसामवेदीयानां कौशिकाद्यथर्ववेदीयानां च सूत्राणां विषये बोद्धव्यम् । सवृत्तिकस्यापि सूत्रस्यार्थं बोधयितुं येषांचिच्छब्दानां चिरमार्यव्यवहारादृष्टेरध्ययनेन सुखावगमो न जायते । अतस्तेषां शब्दानां सुगमतयोद्बोधार्थं परिशिष्टरूपेणाग्रे कोशो न्यस्तोऽस्ति । स कोशः पाठकानस्यादिसाऽस्ते-

नापि खलूपकुर्यादिति बलीयसी न प्रत्याशा । ग्रन्थस्यास्य संशोधनावसरेऽङ्कनावसरे च संशोधकस्यानवधानादज्ञानाद्वा तथा च सीसाक्षरयोजकानां प्रमादात्, प्रबलतरवेगवत्सौदामनीप्रचाल्यमानस्य मुद्रणयन्त्रस्य बम्भ्रम्यमाणगतिप्रकर्षप्रसरेण केषांचिदक्षरावयवानां स्थानभ्रंशादिना वा स्खलितानि लब्धावसराणि वर्तन्त एव । तानि तु 'गच्छतस्स्खलनं क्वापि' इति न्यायेनेति समवगम्य सोढव्यानि सानुकम्पान्तःकरणैर्विद्वद्भिरिति हार्दी विज्ञप्तिः । एकोनत्रिंशत्तमे पृष्ठे चतुर्विंशपङ्क्तौ 'प्राप्नुः' इत्यत्र प्राप्नुत इति ज्ञेयम् । एवमेव पञ्चनवतितमे पृष्ठे द्वाविंशावल्या 'बध्नीत' इत्यत्र बध्नीतेति बोद्धव्यम् । इत्थं चैकसप्ततितमे पृष्ठे तृतीयश्रेण्यां, 'अपसले(व्ये)रम०' इत्यत्रापसलव्यम० इत्थंकारं मन्तव्यम् । अपि च 'लौकिका (पृ० ११ पं० २९) इत्यत्र लौकिकाः । 'ऊर्वोः' (१०९ । १९) ऊर्वोः । एवमादयः कतिचन दोषा अभूवन्, ते सर्वे प्रागुक्तविज्ञप्त्यनुरोधेन सह्यकोटिमारोक्ष्यन्तीति विश्वासः । ग्रन्थस्यास्य संशोधनकाले च वृत्तिस्थश्रौतसूत्रगतप्रतीकस्थलनिर्देशादिविषयेऽस्मत्स्यैः प्रगुणेकुलसंभूतै रामचन्द्रात्मजकृष्णशास्त्रिभिर्निरभिलाषं निरलसं च भूयिष्ठं साहाय्यमन्वष्ठायि, अतः खलु महाभागास्ते धन्यवादार्हाः ।

अन्ततश्चेदमेवैकं नो विज्ञाप्यं यत्, विविधग्रन्थरत्नप्रकाशनैकधुरन्धरतया, आनन्दाश्रमसंस्थया प्राकाश्यं प्रापितेनानेन ग्रन्थरत्नेनानुदिवसं कालेयकालमहिम्ना पङ्कावमर्दं संमृद्यमाना तपस्विनी क्वापि कोणे भीतभीतेव निहुत्य संतिष्ठमाना संस्कारपरम्परा पुनरुज्जीवतु, विलसतु चाऽऽर्याणां चेतःकुहरे निःश्रेयसकरी श्रद्धावल्लरी शोभन्तु वैदिककर्मविस्ताराः संवर्धतामास्तिक्यं जायतां च निरुपमकल्याणं प्रमोमुद्यतां च ब्राह्मणसमितिरिति सकलचराचरगुरुं शशिखण्डमण्डनं भक्तकामकल्पद्रुमं सकलग्रामदेवतासार्वभौमं लिङ्गेश्वरं साञ्जलिबन्धपुरःसरं सप्रणयं सभक्त्युन्मेषं च मुहुर्मुहुः संप्रार्थ्य विश्रमयति लेखनी—

| | |
|---|---|
| आ० व० १०–१८९८ | विद्वज्जनानुकम्पाकाङ्क्षकः— |
| पुण्यपुरम् । | रानडेकुलोत्पन्नगोविन्दात्मजपुरुषोत्तमशर्मा । |

# आश्वलायनीयगृह्यसूत्राणां विषयानुक्रमणिका ।

## प्रथमोऽध्यायः ।

इत्याश्वलायनगृह्यसूत्राणामनुक्रमणी समाप्ता ॥

# अथ गृह्यपरिशिष्टविषयानुक्रमः ।

इति गृह्यपरिशिष्टविषयानुक्रमः ॥

अथाऽऽश्वलायनगृह्यकारिकाविषयानुक्रमः ।



ॐ तत्सद्ब्रह्मणे नमः ।

नारायणकृतवृत्तिसमेतम्—

# आश्वलायनगृह्यसूत्रम् ।

## अथ प्रथमोऽध्यायः ।

**उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः ॥ १ ॥**

आश्वलायनमा+चार्यं प्रणिपत्य जगद्गुरुम् ।
देवस्वामिप्रसादेन क्रियते वृत्तिरीदृशी ॥ १ ॥

वैतानिकान्युक्तानि । अतः परं गृह्याणि वक्ष्यामः । वितानोऽग्नीनां विस्तारः । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायां च वर्तते । यथा ‘ सगृहो गृहमागतः ’ इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः । उत्तरस्तु शालावचनः । येषां भार्यासंयोगादुत्पन्नाग्ना इमानि कर्माणि प्रवर्तन्ते तेषामयं गृहशब्दो भार्यावचनः । येषां तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः । ‘ भार्यादिरग्निर्दायादिर्वा तस्मिन्गृह्याणि ’ इति गौतमः । उक्तानुकीर्तनं संबन्धकरणार्थम् । संबन्धकरणे प्रयोजनं कथं सौ^1^त्यः परिभाषाः प्राप्नुयुरिति । कथं वा न प्राप्नुयुः । शास्त्रान्तरत्वात् । कथं शास्त्रान्तरत्वम् । सूत्रसमाप्तावाचार्यनमस्कारात् । शास्त्रान्त एवाऽऽचार्यनमस्कार उपपद्यते । इदं प्रतिज्ञासूत्रम् ॥ १ ॥

**त्रयः पाकयज्ञाः ॥ २ ॥**

पाकयज्ञास्त्रयः । त्रिविधा इत्यर्थः । कुतः । हुताः प्रहुता ब्राह्मणिहुता इत्येकैकस्मिन्बहुवचननिर्देशात् । यदि हि त्रिविधत्वं न स्यादेकवचनेन निर्देशं कुर्यात् । तस्मात्त्रिविधत्वमिति । पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा । इष्टश्चोभयत्र पाकशब्दः । ‘ योऽस्मत्पाकतरः ’ इत्यत्राल्पत्वे पाकशब्दः । ‘ तं पाकेन मनसाऽपश्यम् ’ इति ‘ यो मा पाकेन मनसा ’ इति च प्रशंसायाम् । तेनाऽऽज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति । यदि हि पाकशब्दः पक्वे वर्तेत तह्याज्यहोमेषु तन्त्रं न स्यात् । इष्यते च । तस्मान्न तत्र वर्तते । प्रशस्तयज्ञा इत्युक्तम् । कथं प्रशस्त-

---

\+ मन्त्रव्याख्याकृदाचार्यः ।

---

१ श्रौतः ।

स्वम् । उच्यते । यस्मादेतेषु संस्कारा आम्नातास्तैश्च ब्राह्मण्यमवाप्यते । के पुनस्ते संस्काराः । गर्भाधानादयः । तस्मात्सर्वेषां पाकयज्ञत्वमिति यदुक्तं तत्सम्यक् ॥२॥

कथं त्रिविधत्वमित्यत आह—

हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणिहुताः ॥ ३ ॥

अग्नौ हूयमानाः 'हविष्यस्य जुहुयात्' ( गृ० १ । २ । १ ) इत्येवमादयो हुताः । अनग्नौ क्रियमाणाः 'अथ बलिहरणम्' ( गृ० १ । २ । ३ ) इत्येवमादयः प्रहुताः । ब्राह्मणभोजनं यत्रास्ति ब्राह्मणान्भोजयित्वेति ते ब्रह्मणिहुताः । अग्नाविति वचनमनग्नौ हूयमानस्य सर्वबलेः प्रहुतत्वार्थम् । सोऽपि हि जुहोतिशब्दचोदितः । हुतादिसंज्ञाविधानं कर्मोपदेशार्थं शब्दतश्चार्थतश्च +मृगतीर्थसंज्ञावत् । अथवा त्रैविध्योपदेशार्थम् । पाकयज्ञानामेतत्तन्त्रमिति वक्ष्यति । अत्र त्रैविध्योपदेशे सति, त्रिविधाना च पाकयज्ञत्वे सति तत्र पाकयज्ञग्रहणमपार्थकं सत्तत्समानजातीयानामेव हुताना पाकयज्ञाना तन्त्रं यथा स्यादित्येवमर्थं त्रैविध्योपदेशः । प्रहुतब्रह्मणिहुताना मा भूत्तन्त्रमिति । तेन सर्वबलस्याद्यावदानधर्मो निवृत्तो ब्राह्मणभोजने च निर्वापादि निवृत्तम् ॥ ३ ॥

अथाप्यृच उदाहरन्ति यः समिधा य आहुती यो वेदेनेति ॥ ४ ॥

अधिकपादग्रहणमृचोऽधिकस्य द्व्यृचस्य ग्रहणार्थम् । न तृचस्य । तृतीयायामर्थविरोधात् । बहुवचनं तु 'अग्नोरुधाय' 'आ ते अग्ने' 'यः समिधा' इति द्व्यृचावभिप्रेत्योपपन्नम् । ऋचामुदाहरणं कथम् । एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यान्याहिताग्नेरपि स्युरित्येवमर्थम् ॥ ४ ॥

समिधमेवापि श्रद्दधान आदधन्मन्येत यजे इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्ययैवाप्यस्ति प्रीतिस्तदेतदृष्यृषिरुवाच । अग्नोरुधाय गविषे द्युक्षा यदस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचतेति । वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्त्विति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह । आ ते अग्न ऋचा हविर्हृदा तष्टं

+ आ. श्रौ. सूत्रे अ. ५ क. ११ सू. २ द्रष्टव्यम् ।

१ क. 'बलाव' । २ ख. 'तीयस्यामप्यर्थ

भरामसि। ते ते भवन्तूक्षण ऋषभासो वशा उतेति। एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति। य इमं स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति ॥ ५ ॥ ख० १ ॥

' समिधमेवापि श्रद्दधान आदधन्मन्येत ' इत्यारभ्य ' यज्ञो वै नमः ' इत्यन्तं ब्राह्मणं भवति। तत्र समिधेत्यस्य तात्पर्यकथनं ब्राह्मणं समिधमेवापीति। समिधमेवापि श्रद्दधान आदधद्यजन इदं दैवतमिति मन्येतैव। कुतः। नमस्तस्मै। अत्र नमःशब्देनान्नमुच्यते। निघण्टुषु नम.शब्दोऽन्ननामसु पठितः। समिदपि तस्मै दैवताय नमो भवति। अन्नं भवति। प्रीतिहेतुर्भवतीत्यर्थः। श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधिकार इति ज्ञाप्यते। य आहुतीत्यस्य विवरणं ब्राह्मणं य आहुत्येति। तत्र ' सुपां सुलुक् , इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णादेशः। यो वेदेनेत्यस्य पादस्य तात्पर्यकथनं ब्राह्मणं यो वेदेनेति विद्ययैवेत्यादि। विद्ययाऽपि प्रीतिर्दैवतस्यास्त्येवेत्यर्थः। द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यभिप्रायः। विद्यया प्रीतिरस्तीत्येदृढयितुं तस्मिन्नर्थे मन्त्रान्तरं साक्षित्वेन श्रुतिर्दर्शयति--तदेतदित्यादि। तदेतदर्थरूपं पश्यन्नृषिर्मन्त्रद्रष्टोवाच अग्नेरुथायेत्यादि। अस्मिन्मन्त्रे स्तोतारः प्रत्यक्षीकृताः। एवंभूतायेन्द्राय हे सखायो वचो वोचत। घृतात्स्वादीयो मधुनश्चेति कुर्वेति। वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते। ह इन्द्र, इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः। असिद्धत्वात्स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति--स्वादीयोऽस्त्वित्यादिना। स्वादीयोऽस्त्वित्यवेवासौ साक्षित्वेन अस्तिराहेत्यर्थः। अतोऽस्ति प्रीतिः। एवमध्ययनं रसात्स्वादुतरमित्युक्तम्। मांसादपि स्वादुतरमिति मन्त्रान्तरं श्रुतिर्दर्शयति--आ ते अग्न इत्यादि। अस्य मन्त्रस्य तात्पर्यकथनं ब्राह्मणमेत एवेत्यादि। हे अग्ने एत एव मे मत्संबन्धिनः। अत एव ते तवोक्षाणश्चर्षभाश्च वशाश्च भवन्ति। भवन्त्वित्यर्थः। भवन्तीति लोडर्थे लेट्। विकरणसिप्रत्ययादागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति। के मत्संबन्धिन इति चेत्। य इमं स्वाध्यायमधीयत इति। अस्य मन्त्रस्य तात्पर्यमुक्षादिमांसेन तव यावती प्रीतिस्तावती तव विद्ययाऽपि भवत्वित्यर्थः। उत्तरार्धैतात्पर्यकथनं ब्राह्मणं यो

---

१ घ. °ति ऊिर्षे

नमसा स्वध्वर इति नमस्कारेणेत्यादि । नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वरः शोभनयज्ञः । 'तस्येदर्वन्तो रंहयन्तः' इत्यादिपाकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति। कुतः । न वै देवा नमस्कारमति । अतिरतिक्रमणे। देवा हि नमस्कारं नातिक्रामन्ति। सम्यगाद्रियन्त इत्यर्थः। किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोऽपि यज्ञ इत्यर्थः । इति हि ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि, एवमन्तं ब्राह्मणं भवतीत्यर्थः ॥ ९ ॥ १ ॥

अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् ॥ १ ॥

अथशब्दो विशेषप्रक्रियार्थः । अथ गृह्याण्युच्यन्त इति । अत्र सायंप्रातःशब्दौ लक्षणयाऽहोरात्रवचनौ । कुत एतत् । स्मृतिदर्शनात् । 'सायंप्रातरशनान्यभिजुषेत्' इति । अशनं च मध्याह्ने विहितम् । 'पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणाम्' इति । वैश्वदेवानन्तरमातिथ्यादेर्विधानाच्च । सिद्धं पक्वम् । सिद्धस्येति दध्नः पयसश्च मा भूत् । हविष्यस्येति चणककोद्रवादीनां मा भूत् । कथमहविष्यस्य प्राप्नुयात् । अन्नसंस्कारत्वात् । उभयमपि तर्हि नाऽऽरम्यम् । दर्शनादेव सिद्धस्य हविष्यस्य च भविष्यति । यथा—चतुरश्चतुरो मुष्टीन्निर्वपतीत्युक्ते हविष्यमेव प्रतीयते । सिद्धं च तद्भवति । अनारभ्यमाणे दोषः । अनादिष्टद्रव्यत्वादाज्यं प्रसज्येत । 'आज्यशेषेण वाऽनक्ति हृदये' (१।८।९) इति स्रुवव्नापयति । अत्र द्रव्यं नाऽऽदिश्यते तत्राऽऽज्येन होम इति । तस्मात्तन्निवृत्त्यर्थं सिद्धग्रहणमारम्यम् । तर्हि हविष्यग्रहणमपार्थकम् । नन्वन्नसंस्कारत्वादहविष्यस्यापि स्यात् । अपूर्वार्थत्वाच्च न स्यात् । तर्हि तन्त्रनिवृत्त्यर्थं हविर्ग्रहणम् । कथम् । हविष्यस्य होम एव स्यान्न तन्त्रमिति । ननूत्तरत्र विधानान्न तन्त्रं प्राप्नोतीति च शङ्का न कार्या । एवं तर्हि विवाहेऽपि तन्त्रनिवृत्तिप्रसङ्गात् । तत्र चेष्यते तन्त्रम् ॥ १ ॥

होममन्त्रानाह—

अग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे ॥ २ ॥

अग्निहोत्रदेवताभ्य इति विधायको नै मन्त्रः । तथाऽर्थप्रतीतेः । अग्निहोत्रशब्दोऽयं द्रव्ये कर्मणि च वर्तते । तत्राग्निहोत्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्त उत कर्मदेवता इति संशयः । काः पुनर्द्रव्यदेवताः । 'रुद्राद्या रौद्रद्रविसत्'

---

१ क. 'विष्यम'। २ क. ग. न.'होमम'।

इत्याद्याः श्रुतावुक्ताः । ता न संभवन्ति । भक्तिमात्रत्वात् । तेन कर्मदेवता गृह्यन्ते । एवं चेदग्निर्गृहपतिरित्येवमाद्या अपि प्राप्नुवन्तीति शङ्का न कार्या । तासामनित्यत्वात् । कास्तर्हि । अग्निः सूर्यः प्रजापतिश्चोमयत्र । श्रुतौ चाऽऽसां सम्यगुपदेशः । 'तस्य वा एतस्याग्निहोत्रस्य' इत्यादि । सोमाय वनस्पतय इत्येकाऽऽहुतिः । वनस्पतेर्गुणत्वेन दृष्टत्वात् । 'अग्निर्गृहपतिः सोमो वनस्पतिः' इति । समाचारश्चैवमेव । इत्युक्तो देवयज्ञः ॥ २ ॥

स्वाहेत्यथ बलिहरणम् ।॥ ३ ॥

अप्रेषितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचनं ज्ञापनार्थम् । एतज्ज्ञाप्यते । अन्यत्र बलिहरणे स्वाहाकारो न भवतीति । तेन चैत्यबलौ नमस्कारो भवति । अथशब्द आनन्तर्यार्थः । इतरथा कर्मान्तरत्वात्कालान्तरेऽपि बलिहरणं स्यात् । ब्रह्मयज्ञस्त्वेषां पूर्वो वा स्यात् । उत्तरो वा । मनुष्ययज्ञस्तूत्तर एव । 'वैश्वदेवं कृत्वातिथिमतिथिमाकाङ्क्षेत्' इति वचनात् ॥ ३ ॥

एताभ्यश्चैव देवताभ्यः । अद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ॥ ४ ॥

एताभ्यः प्रागुक्ताभ्यो देवताभ्यश्चकाराद्वक्ष्यमाणदेवताभ्यश्च बलिहरणं कार्यम् । एवकारः पौनर्वाचिकः । भूमौ प्रावसंस्थां पङ्क्तिं करोति । ब्रह्मणे स्वाहेति हुत्वाऽन्तराले भुवस्त्वाऽद्भ्य इत्यादिभिर्जुहोति । गृहदेवताभ्य इति मन्त्रो न विधायकः । तथा वास्तुदेवताभ्य इति च । यदि हि विधायकः स्यादुभयवचनमनर्थकं स्यात् । गृहमेव हि वास्त्विस्युच्यते ॥ ४ ॥

इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ॥ ५ ॥

दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते । यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलिं हरेत् ॥ ५ ॥

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ ६ ॥

दिग्देवतानां मध्ये पूर्वोक्तेऽन्तराले ॥ ६ ॥

विश्वेभ्यो देवेभ्यः ॥ ७ ॥

मध्य एव ॥ ७ ॥

सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ॥ ८ ॥

---

१ ख. "सोऽग्रति"। २ क. घ. ह्यस्य पुन दि"।

मध्य एव । दिवाग्रहणं ज्ञापनार्थं क्रियते । तेन वैश्वदेवस्य प्रातरारम्भणं भवति । इतरथा सायंप्रातरुपदेशात्सायमुपक्रमः स्यात् । अग्निहोत्रवत् । तच्चानिष्टम् । अतो दिवाग्रहणम् । तेनाग्नये स्वाहेति सायं जुहुयादित्यत्र सायमुपक्रमः ॥ ८ ॥

नक्तंचारिभ्य इति नक्तम् ॥ ९ ॥

दिवाचारिभ्य इत्यस्य स्थाने नक्तंचारिभ्य इति नक्तं भवति ॥ ९ ॥

रक्षोभ्य इत्युत्तरतः ॥ १० ॥

सर्वासामुत्तरतः ॥ १० ॥

स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ११ ॥ ख० २ ॥

' यज्ञोपवीतशौचे च ' ( श्रौ० १ । १ । १० ) इति यत्र + प्राचीनावीतित्वं निवीतित्वं वाऽऽचार्येण न विहितं तत्र यज्ञोपवीतित्वं प्राप्तम् । अतः प्राचीनावीतित्वं विधीयते । निनयेदिति वचनं क्रियान्तरज्ञापनार्थम् । तेन बलिहरणमिदं न भवति । किमेवं सिध्यति । स्वाहाकारो न भवति । ननु स्वधाकारः प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्यत्वादिरत्वेन समानजातीयत्वात्स्वधाकारस्तस्य बाधको भवति । नैतदेवम् । समानार्थयोः समुच्चयो दृश्यते । यथा ' सोमाय पितृमते स्वधा नमः ' इति स्वधानमस्कारयोः । तद्वदत्राप्याशङ्का स्यात् । का पुनरियं क्रिया । पितृयज्ञः । एवं च कृत्वा पितृयज्ञार्थं ब्राह्मणभोजनमन्वहं न कर्तव्यमिति सिद्धम् । शेषग्रहणमानन्तर्यार्थम् । असत्यस्मिन्क्रियान्तरत्वात्कालान्तरे वा स्यात् । एवमुक्तं वैश्वदेवं यस्मिन्नग्निर्मिन्दिष्टो वैश्वदेवं कार्यम् । न गृह्य एवेति नियमः । कुतः । प्राग्विधानाद्विवाहाग्नेः । यदि हि तत्राभिप्रेतमभविष्यत्तमेव पूर्वं ब्रूयात् । पाणिना च वैश्वदेवं कार्यम् । न पात्रान्तरेण । हावयत्वात् ॥ ११ ॥ २ ॥

अथ खलु यत्र क्व च होष्यन्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य सप्तोल्लेखा उदगायताः पश्चात्प्रागायते नानाऽन्वयोरित्यस्तो मध्ये ल-दभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदगपसंस्थं तूष्णीं पर्युक्षणम् ॥ १ ॥

---

+ उपवीतं भवमूर्ध्वे प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ।

---

१ क. ग. 'ते पै' । २ क. ग. 'रा सा' ।

अथशब्दोऽधिकारार्थः । इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति । तेन वैश्वदेवे क्वचग्रहणेन प्राप्यमाणो होष्यद्धर्मो न भवति । खलुशब्दोऽपार्थकः । मिताक्षरेष्वनर्थक इति वचनात् । यत्र क्वचग्रहणमहरहःक्रियान्तरविध्याशङ्कानिवृ-त्त्यर्थम् । यत्र क्व च होष्यन्स्यादिति होममनूद्य धर्मविधिः । तर्हि यत्रेत्येवास्तु । क्वचग्रहणमनर्थकम् । न । तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरण एतत्सूत्र-विहितपरिसमूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वचग्रहणम् । लेखादयो न सन्तीति वक्ष्यामः । इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम् । एकस्य मात्राशब्दस्य लोपः । उष्ट्रमुखवत् । तत्त तदवरं चेषुमात्रावरम् । अवरं निकृष्टमित्यर्थः । सर्वतः सर्वासु दिक्षु । चतसृष्वित्यर्थः । चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरस्रं स्थण्डिलं गोमयेनोपलिप्य षड्लेखा उल्लिखेत् । षड्ग्रहणं कथम् । षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति । केनचिद्यज्ञियेन शकलेन स्थण्डिल-मध्य उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत् । नानेत्यसंसर्गार्थम् । तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत् । तत-स्तिस्रो मध्येऽसंसृष्टाः प्रागायता लेखा लिखेत् । शकलं तत्रैव निधाय स्थण्डिल-मभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्ममग्निं* प्रतिष्ठाप्यान्वादधाति । ततोऽति-देशप्राप्तं बर्हिष इध्मस्य च संनहनं करोति । अन्वाधानं नामामुककर्माङ्गत्वेन द्वयो-स्तिसृणां वा समिधामभ्याधानम् । ततः परिसमुह्य । परिसमूहनं नामाग्नेः समन्तात्परि-मार्जनम् । तच्चाग्निहोत्रवत् । ततः परिस्तीर्य । पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम् । उदक्संस्थवचनमेकैकस्या दिश्युदक्संस्थताप्राप्त्यर्थम् । अथवा—इत्यु-दक्संस्थमिति पृथग्योगः । निपातानामनेकार्थत्वादितिशब्द एवंप्रकारे । एवंविधं यत्कर्म सर्वदिक्संबद्धं परिसमूहनपर्युक्षणशिरश्चिरुन्दनादिकं तद्+पराजिताया आर-भ्योदक्संस्थं कार्यमित्यर्थः । ततस्तूष्णीं पर्युक्षणं करोति । तूष्णींग्रहणं मन्त्रवर्जनमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम् । त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायाऽऽद्यान्ते च कर्मणां पर्युक्षणम् । उभयत्र च परिसमूहनपूर्वकमित्यत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणसिद्ध्यर्थम् । एतस्मिन्काल उत्तरतोऽग्नेरपः प्रणयति चमसेन कां-स्येन मृन्मयेन वा । उत्तरत्र निनयनदर्शनात् ॥ १ ॥

पवित्राभ्यामाज्यस्योत्पवनम् ॥ २ ॥

कार्यमिति शेषः ॥ २ ॥

---

* 'अनश्च' इति टचि 'नस्तद्धिते' इति टिलोपः । + अपराजिता नाम ऐशानी दिक् ।

---

१ क. ग. °र्थस्य इ° । २ क. ग. संनद्धे । ३ ख. °तायां दिश्यार° ।

अथ किंलक्षणे पवित्रे कथं चोत्पवनं कार्यमित्येतद्द्वयं निर्णेतुमाह—

अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नाना-
ऽन्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां
पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण
पवित्रेण वसोः सूर्यस्य रश्मिभिरिति प्रागुत्पु-
नाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥

प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थः । न विद्यतेऽन्तर्मध्ये गर्भो ययोस्तौ तथोक्तौ । प्रादेशमात्रौ कुशौ । एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ । नानेत्यसंसर्गार्थम् । पवित्रे अन्तयोरसंसृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रागिति पाठः कार्यः । प्राङिति पुंलिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् । तच्च परिभाषासिद्धम् । ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम् । सत्यम् । तत्तु शाखान्तरदृष्टपुनराहारानिवृत्त्यर्थम् । तेन ज्ञायते 'शाखान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रिया' इति । इत्थं हि शाखान्तरे दृष्टम् । परिस्तरणकाले पात्रासादनार्थमुत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्योदगग्रेर्दर्भेषु द्वंद्वं न्यञ्चि पात्राण्यासादयति, उभाभ्यां पाणिभ्याम् । अयं पात्रासादनक्रमः—'प्रोक्षणपात्रमप स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम् । भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान्' इति । आज्यहोमेषु दर्वीमस्तु तु कर्मस्वयं क्रमः—स्थाली चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमविस्कुशोध्य' ॥ 'ततोऽप्रच्छिन्नाग्रावित्युक्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिच्य ताभ्यां त्रिरुत्पूयोत्तानानि पात्राणि कृत्वा विस्रस्येध्मं सर्वाणि पात्राणि त्रिः प्रोक्षति । ततः प्रणीतापात्रं प्रत्यगग्नेर्निधाय तस्मिन्ने पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेदिति । आचार्यस्य तु मते पूर्णपात्रं नित्यं कार्यम् । अन्यस्य तु करणेऽभ्युदयः । अकरणे न प्रत्यवाय इत्यादयः' । इत्थं चान्यशाखे दृष्टम् । 'पूर्णपात्रनिधानानन्तरं तत्रस्थे पवित्रे गृहीत्वाऽऽज्यस्थाल्यां निधायाऽऽज्यमासिच्योदगङ्गारान्निरुह्य, तेष्वधिश्रित्याऽऽज्यमवज्वाल्य दर्भाग्रे प्रच्छिद्य, प्रक्षाल्याऽऽज्ये प्रास्य, पुनर्ज्वलता तेनैवोल्मुकेन त्रिः परिहरेदेतेनावज्वलनं क्रमम् । ततः शनैः शनैरङ्गारानुद्धृत्याङ्गारानतिसृज्य तत्रस्थ-

१ ख. °दर्भे° । २ ख. °ज्ये प्रास्य ।

मेवाऽऽज्यमुत्पूय, पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रक्षिपेदिति । आचार्यस्योत्पवनं नित्यम् । अन्यत्तु पाक्षिकम् । पूर्ववदि+त्याकूतम् । स्रुक्स्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टम् । तस्यापीच्छातः क्रिया । अनयोः संमार्ग उच्यते—' दक्षिणेन हस्तेनोभौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहूं निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैः प्रागारभ्य प्रागपवर्गं त्रिः संमृज्याधस्तादग्रेणैवारभ्यात्मं त्रिः संमार्ष्टि । ततो दर्भाणां मूलेन दण्डस्याधस्ताद्बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमार्ष्टि । अथाद्भिः प्रोक्ष्य स्रुवं निष्टप्याऽऽज्यस्थाल्यां निधायोदकस्पृष्टैरेव दर्भैर्जुहूं चैवमेव संमार्ष्टि । ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत् ' । एवं संमार्गः । स्विष्टकृदन्ते चेध्मसंनहनानामग्नौ प्रासनं दृष्टम् । अन्यदपि यदस्मच्छास्त्राविरुद्धं परशास्त्रे दृष्टं तदपीच्छातः कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृतः । किंच—उत्पुनाति त्रिरित्येव वाच्यं लाघवार्थम् । तथा सति ' सर्वत्रैव कर्मावृत्तौ ' ( श्रौ० सू० १ । १ ) इत्यनेन सकृन्मन्त्रेण द्विस्तूष्णीमिति सिध्यति । एवं सिद्ध इदं वचनं गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थम् । तथा च सति पूर्वयोगः किमर्थः । आज्याधिकारार्थ इति चेत् । तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम् । अथ पवित्रसंज्ञार्थः । तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम् । उच्यते । पूर्वेणामन्त्रकमुत्पवनं विधीयते । अनेन तु समन्त्रकम् । तत्र वैतानिकेऽमन्त्रकं गृह्ये कर्मणि समन्त्रकमित्येवं विनिवेशः ॥ ३ ॥

कृताकृतमाज्यहोमेषु परिस्तरणम् ॥ ४ ॥

कृतिरेव कृतम् । कृतं चाकृतं च यस्य तत्तथोक्तम् । आज्यमेव यत्र हविः स आज्यहोमः । अन्यथाऽऽज्यग्रहणस्य वैयर्थ्यं स्यात् । सर्वत्र ह्याधारादयः सन्त्येव । आज्यहोमेषु परिस्तरणं कार्यं वा न वेत्यर्थः । अयं च परिस्तरणविकल्पो यत्राऽऽज्यग्रहणमस्ति यथा ' आज्याहुतीर्जुहुयात् ' ( १ । ४ । ३ ) इति तत्रैव भवति । न पुनरनादिष्टाज्यहोमेषु । यद्यनादिष्टहोमेष्वप्ययं विकल्पः स्यात्तत्राऽऽज्यग्रहणमपार्थकं स्यात् ॥ ४ ॥

तथाऽऽज्यभागौ पाकयज्ञेषु ॥ ५ ॥

तथेति । कृताकृतावित्यर्थः । पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा न वेत्यर्थः । पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम् ॥ ५ ॥

ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ॥ ६ ॥

तथेत्यनुवर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो

---

\+ अभिप्रायः, आशयः ।

भवति । धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा । अथ तयोर्नित्यो भवति । उत नैव भवति । नित्यो भवतीति ब्रूमः । कुतः । तयोरुपदेशात् । 'ब्रह्माणमग्निं चान्तरा' ( १ १२ ९ ) 'वेद्यं * चारित्रवन्तं ब्रह्माणमुपवेश्य' ( ४.९.१४ ) इति च । तर्हि तस्मादेव नित्योऽस्तु किमनेनेति च शङ्का न कार्या । अस्मिन्विकल्पप्रतिषेधेऽसत्युपदेशस्य पक्षे कृतार्थत्वात् । तयोरपि ब्रह्मा पौरुषकृताकृतः स्यात् । ब्रह्माऽस्ति चेत्प्रणीताप्रणयनात्पूर्वं समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति तृणमङ्गुष्ठोपकनिष्ठिकाभ्यां प्रत्य+ग्दक्षिणां निरस्य 'इदमहमर्वावसोः सदने सीदामि' इति मन्त्रेणोपविशेत् । ततः 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय' इत्यन्तं ब्रह्मजपं जपेत् । ततो 'ब्रह्मन्नपः प्रणेष्यामि' इति कर्त्राऽतिसृष्टः 'भूर्भुवःस्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत् । केचिदतिसर्जनं प्रत्यतिसर्जनं च नेच्छन्ति । कर्मान्ते सर्वप्रायश्चित्तानि संस्थाजपं च कुर्यात् । सर्वदा यत्नमना भवेदुदङ्मुखश्च ॥ ६ ॥

अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥

क्वचिन्नामधेयेन होम उक्तः । 'सावित्र्यै ब्रह्मणे' ( ३ । ५ । ४ ) इत्यादि । क्वचिन्मन्त्रेण होम उक्तः । 'अग्ने नय सुपथा राये अस्मान्' ( २ । १ । ४ ) इति चतसृभिरिति । यत्र तु नोभयं तत्र तु नामधेयेन कथं होमः स्यादित्येतत्सूत्रम् । 'प्राजापत्यस्य स्थालीपाकस्य हुत्वा' ( १।१३।७ ) 'काम्याश्चरवः' ( ३ । ६ । १ ) इत्यादौ ॥ ७ ॥

अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥ ८ ॥

यत्र होमस्यानादेशः कर्मणश्चाऽऽदेशस्तत्रैता देवता होतव्याः । कुत्र । जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एवं तर्ह्यन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते न मन्त्रश्चोल्कर्मादौ 'नैके कांचन' ( गृ० १ । ४ । १ ) पक्षे तत्रैताभ्यो देवताभ्यो जुहोतीति मन्त्रानादेश इतीयमेव व्याख्या साध्वी । मन्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति । ×यत्र परशाखे होमश्चोद्यते स्वशाखे तु कर्ममात्रं तत्रैता देवता भवन्तीति । क । जातकर्मादौ ॥ ८ ॥

---

* चरित्रमाचारः । + प्रतीची दक्षिणस्याश्चान्तरालं नैर्ऋतीमित्यर्थः । × शाखान्तरे ।

एकबर्हिराज्यास्विष्टकृतः स्युस्तुल्यकालाः ॥ ९ ॥

एक(कं)बर्हिरादिर्ये(दि ये )षां पाकयज्ञानां ते तथोक्ताः । तुल्यकाला एककालाः । एकस्मिन्काले यद्यनेके पाकयज्ञाः कार्यत्वेन प्राप्तास्तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणम् । यदा पर्वणि रात्रौ काम्य उत्पद्यते तदा काम्यपार्वणयोरेककालत्वम् । यदा चाऽऽग्रयणाश्वयुजी कर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम् ॥ ९ ॥

बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति —

अदेपाऽभि यज्ञगाथा गीयते । पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥ १० ॥ इति ॥ ख० ३ ॥

तस्मिन्नर्थ एषा यज्ञगाथाऽभिगीयते पठ्यते । बहून्पाकयज्ञानेकस्मिन्काले समासाद्य प्राप्यैकाज्यानेकबर्हिष एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते । न प्रतिदैवतं तन्त्रमावर्तयितव्यमित्यर्थः ॥ १० ॥ ३ ॥

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥ १ ॥

अनेन चौलकर्मादीनां कालो विधीयते । उदग्यदा गच्छत्यादित्यस्तदुदगयनम् । तथा लोकप्रसिद्धेः । आपूर्यमाणस्य चन्द्रस्य यः पक्षः स तथोक्तः । स हि मासस्य च पक्षस्य च कर्ता । अथवा — आपूर्यमाणश्चासौ पक्षश्चाऽऽपूर्यमाणपक्षः । स हि चन्द्ररश्मिभिरापूर्यते शुक्लपक्ष इत्यर्थः । ज्योतिःशास्त्राविरुद्धं कल्याणं नक्षत्रम् । चौलकर्मेति चौलस्यैव संज्ञान्तरं न तु मतादेशात्सामर्थ्य काल इष्यते । स कथं प्राप्नोति । उपनयनातिदेशात् । तर्ह्यत्र गोदानग्रहणमपार्थकम् । चौलातिदेशात् । उच्यते । समावर्तनार्थं गोदानग्रहणम् । 'गोदानिकं कर्म कुर्वीत' ( ३ ८.६ ) इति कर्मग्रहणं यथा कर्मणोऽन्यनियमे वाग्यमनादिकं निवर्तयति तथा कालमपि निवर्तयेत् । तस्माद्गोदानग्रहणं यत्र गोदानमन्योऽप्यस्ति तत्रापि यथा स्यात् । तर्हि समावर्तनग्रहणमेव कार्यम् । उच्यते । लाघवार्थं गोदानग्रहणम् ॥ १ ॥

सार्वकालमेके विवाहम् ॥ २ ॥

एक आचार्याः सर्वस्मिन्काले विवाहमिच्छन्ति । नोदगयनादिनियमः । तेषां कोऽभिप्रायः । दोषश्रवणात् 'ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति । अन्ये च लौकिका दोषाः समुत्पद्यन्ते ॥ २ ॥

---

१ ग्रन्थो लेखः । ग्रन्थस्तु सौरभे गृह्ये ग्रन्थके पर्वलेखयोः ।

तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ॥ ३ ॥

तेषां ग्रहणं किमर्थम् । विवाहस्थानन्तरत्वात्सर्वेषां प्राप्त्यर्थमिति चेत् । तत्र । दर्शनात्सर्वेषां स्युः । यदयं विवाहे चतुर्थीमित्याह । उच्यते । तेषां संबन्धिन्योऽन्तर्वर्तिन्य एता आहुतयो भवन्ति । न तु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषां ग्रहणम् । तर्हि पुरस्ताद्ग्रहणमपार्थकम् । न । प्रयोजनमुपरिष्टाद्वक्ष्यामः । संख्यावचनं किमर्थम् । तत्रैके ब्रुवते । 'यत्र परिमाणवचनं प्रत्यृचग्रहणं वा नास्ति ' धाता ददातु दाशुष इति द्वाभ्याम् ' (१।१४।३) इत्यादौ तत्र कथं प्रत्यादेशं होमः स्यात् इति । तदसत् । एकमन्त्राणि कर्माणीति न्यायात् । अपि च 'स्वाहाकारान्तैर्मन्त्रैः' (श्रौ.१।११) इति प्रतिमन्त्रं स्वाहाकारः प्राप्तः । स च प्रदानार्थः । न च तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ । तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम् । का पुनरस्य गतिः । तत्रैके नियमार्थमिति प्राहुः । 'समुच्चयपक्षेऽपि कथं चतस्र एव स्युर्न बह्व्य इति । कथं प्रयोगः । एकैकस्या ऋचोऽन्ते एकैका व्याहृतिः ' । तदप्यसत् । प्राधान्येनाऽऽहुतिविधिप्रकरणत्वादाहुतिसमुच्चय एव । न मन्त्रसमुच्चयः । किमर्थं तर्हीदं नियमार्थमेव चतस्र एव स्युरिति । तेनाऽऽज्यभागौ न भवतः । तर्हि स्विष्टकृदपि न स्यात् । न । पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम् । आघारौ तु स्त एव । अनाहुतित्वात् । आज्यग्रहणं परिस्तरणविकल्पार्थम् ॥ ३ ॥

अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा ॥ ४ ॥

चतसृभिः । चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता । व्याहृतिभिश्च भूः स्वाहेत्यादिभिः ॥ ४ ॥

समुच्चयमेके ॥ ५ ॥

एक आचार्या ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति । तेनाष्टाऽऽहुतयः ॥ ५ ॥

नैके कांचन ॥ ६ ॥

एक आचार्याः कामप्याहुतिं नेच्छन्ति । नैक इत्येव वक्तव्ये कांचनग्रहणमृगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् । अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम् । किंशब्दस्य सर्वनामत्वात् । सर्वनाम्नां च प्रकृतपरामर्शित्वात् । तेनानादेशाहुतयः सिद्धाः ॥ ६ ॥

त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थीम् ॥ ७ ॥ ख० ४ ॥

अत्र संशयः । पूर्वस्या बाध उतोत्कर्ष इति । उत्कर्ष इति ब्रूमः । असमानजातित्वात् । समानजातेरेव हि बाधो विहितः । 'एष समानजातिधर्मः' (श्रौ. १ । १) इति । तच्छन्दश्चोदितश्च समानजातिर्भवति । यथा 'अथ सामिधेन्यः' (श्रौ. १ । २) 'ताः सामिधेन्यः' (श्रौ. ३ । ८) इति । अत्र स्वतच्छन्दश्चोदितत्वान्न बाधोऽपि तूत्कर्षः । यथा 'प्रतिप्रस्थाता वाजिने तृतीयः' (श्रौ. २। १७) इत्यत्राऽऽग्नीध्रस्योत्कर्षस्तद्वदत्रापि । अपि च संख्यानिर्दिष्टो न पूर्वं बाधते । यत्र तु बाधते तत्र स्थानग्रहणं करोति । यथा 'तृतीयाह्नःस्थाने महाव्रतम्' (श्रौ. १० । २) । तस्मादुत्कर्ष इति सिद्धम् ॥ ७ ॥ ४ ॥

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥

कुलशब्देनोभौ वंशौ महापातकादिरहितावतिशुद्धौ तथाऽपस्मारादिदोषरहिताविति । कुलमग्रे प्रथमं परीक्षेत । कथम् , ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् । 'ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः पितृतश्चैके' (श्रौ. ९ । ३) इति । अग्रवचनं वधूवरगुणेभ्यः कुलमेव प्रधानं स्यादित्येवमर्थम् ॥ १ ॥

अथ वरगुणमाह—

बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥

अर्थदर्शिनी बुद्धिः । कोऽर्थः । यः शास्त्राविरुद्धः । तद्वते बुद्धिमते कन्यां प्रयच्छेत् ॥ २ ॥

अथ कन्यागुणानाह—

बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत ॥ ३ ॥

बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत स्वीं कुर्यात् । यत्र स्वमनो रमते तद्रूपम् ॥ ३ ॥

लक्षणानां दुरवगाहत्वं मत्वा परीक्षान्तरमाह—

दुर्विज्ञेयानि लक्षणानीति ॥ ४ ॥

लक्षणानि दुर्ज्ञेयानीति कृत्वैवं परीक्षेत ॥ ४ ॥

अष्टौ पिण्डान्कृत्वा 'ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥ ५ ॥

क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याष्टौ पिण्डान्कृत्वा 'ऋतमग्रे' इत्यनेन मृत्पिण्डा-

नभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । पुनः पिण्डग्रहणं कुमार्या अभिमन्त्रणं मा भूत् । साऽपि हि द्वितीया निर्दिष्टा ॥ ५ ॥

क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी ॥ ६ ॥ ख० ५ ॥

उभयतःसस्यात्क्षेत्रादाहृतं मृत्पिण्डं गृह्णीयाच्चेदस्याः प्रजा अन्नवती भविष्यतीति विद्यात् । एवमुत्तरत्रापि ज्ञेयम् । यदेकस्मिन्संवत्सरे द्विः फलति तदुभयतःसस्यं क्षेत्रम् । अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषम् । अविदासी ह्रदो नामाशोष्यो ह्रदः । देवनं द्यूतस्थानम् । द्वौ प्रव्रजतीति द्विप्रव्राजिनी । स्वैरिणीति यावत् । यत्रोप्तं बीजं न प्ररोहति तदिरिणम्* । पतिं हन्तीति पतिघ्नी । अत्र पतिस्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यम् । उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते ॥ ६ ॥५॥

अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः । तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयतः । ऋत्विजे[1] वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान्दश परान्पुनात्युभयतः । सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्ट परान्पुनात्युभयतः । गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान्सप्त परान्पुनात्युभयतः । मिथः समयं कृत्वोपयच्छेत स गान्धर्वः । धनेनोपतोष्योपयच्छेत स आसुरः । सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचः । हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः ॥ १ ॥ ख० ६ ॥

कन्यामलंकृत्योदकपूर्वां दद्यात् । एष विवाहो ब्राह्मसंज्ञो भवति । तस्यां कन्यायां जातो द्वादशावरानुत्पत्स्यमानान्द्वादश परान्पुनाति । उभयतो मातृतः पितृतश्चेत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् । वितते कर्मणीति । वैतानिके कर्मणीत्यर्थः । मिथःसमय+करणं नाम त्वं मम भार्या भव अहं तव भर्ता भवामीत्येवं(×रूपो विवाहो गान्धर्वसंज्ञः । कन्यापित्रे धनदानेन यो विवाहः स आसुरसंज्ञः । सुप्तेभ्यः प्रमत्तेभ्योऽनवधानेभ्यः कन्यामपहृत्य यो विवाहः स पैशाचसंज्ञकः । युद्धं कृत्वा क-

* इरिणं शून्यमूषरम् । + शपथः । × कैसहितो ग्रन्थः क. ग. संज्ञकपुस्तकयोर्नास्ति ।

१ क. ग. "नी य" । २ क. ख. घ. सृष्टा ।

न्यामपहृत्य यो विवाहः स राक्षससंज्ञकः) । एवमेतेऽष्टौ विवाहाः । तत्र पूर्वेषु चतुर्षु पूर्वपूर्वः प्रशस्तः । उत्तरेषु चतुर्षूत्तरोत्तरः पापीयान् । तत्र पूर्वौ ब्राह्मणस्य । इतरयोः प्रतिग्रहाभावात् । आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य । पुराणे दृष्टत्वात् । राक्षसश्च तस्यैव । युद्धसंयोगात् । आसुरस्तु वैश्यस्य । धनसंयोगात् । इतरे त्रयोऽनियताः ॥ १ ॥ ६ ॥

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ॥ १ ॥

अथशब्दोऽधिकारार्थः । यद्वक्ष्यते तद्विवाहे वेदितव्यमिति । खलूक्तः । उच्चावचग्रहणं कथम् । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् । नैकेन कर्त्रा समुच्चीयेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे सत्यन्वये सिद्धे तानिति वचनं कुलधर्मा अपि कार्या इत्येवमर्थम् । तान् । तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं कृत्स्ने विवाहे यथा स्युरित्येवमर्थम् । इतरथोपयमनकालादुत्तरकाले विहितत्वादुपयमने न स्युः । उपयमनं नाम कन्यायाः स्वीकरणम् । प्रतीयादिति । कुर्यादित्यर्थः ॥ १ ॥

यत्तु समानं तद्वक्ष्यामः ॥ २ ॥

किमर्थमिदम् । यथाऽन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थं तर्हि जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यान्न जनपदादिधर्ममिति । यद्वक्ष्यामस्तत्सर्वत्र समानमेवेत्यर्थः । वैदेहेषु केषुचिद्देशेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु ब्रह्मचारिणौ त्रिरात्रमिति ब्रह्मचर्यं विहितम् । तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम् ॥ २ ॥

पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥ ३ ॥

वेदिकायामग्निप्रतिष्ठापनोत्तरकाले पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपूर्वदेश उदकुम्भं प्रतिष्ठापयेत् । तत आज्यस्य बर्हिर्न्यासादनान्तं कर्म कृत्वा, समन्वारब्धायां वध्वामिध्माग्न्याधानाद्याघारान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा, तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् । गृभ्णामीत्युक्त्वा पुत्रकामश्चेत् । मन्त्रस्योत्तरयोरपि हस्तग्रहणयोर्भवत्येवादम् । दृष्टत्वात्सिद्धा । अश्मा

तत्पुत्रकः । तत्रोभयोः प्रतिष्ठापनं सिद्धम् । एवं चेद्दोषः । 'अश्मानमारोहयति' ( गृ० १ । ७ । ७ ) इत्यत्र पुत्रकारोहणं स्यात् । तर्ह्यश्मग्रहणं तस्य विशेषणं स्यात् । दृषदमश्मानमिति । अश्ममयीमित्यर्थः । मृन्मय्यपि हि लोके दृषदुच्यते । तर्हि पुत्रकप्रतिष्ठापनं न स्यात् । न । स्यादेव । मङ्गलार्थत्वात् । दक्षिणतः पत्न्युप-विशेदुत्तरतः पतिरिति शाखान्तरे दृष्टम् । स्रुवेण होमः । साधनान्तरानुपदेशात् । 'एवंभूतो व्यक्तहोम०' ( श्रौ० १ । ११ ) इत्यनेनैवावस्थाने सिद्धे 'तिष्ठन्स-मिधमादध्यात्' ( ३ । ८ । १६ ) इत्यत्र तिष्ठन्ग्रहणं कथम् । अन्यथाऽऽ-सीनस्य कर्माणि स्युरित्येवमर्थम् । ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठन्ग्रहणम् । प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम् । 'तस्य नित्याः प्राच्यश्चेष्टाः' ( श्रौ० १ । १ । ८ इत्यनेन प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या इति वचनं प्रत्यङ्मुखत्वनिवृ-त्त्यर्थम् । आसीनाया इत्येतत्कथम् । इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्याः स्यादित्येवमर्थम् । 'उत्तानेनोत्तानं पाणिं गृह्णीयान्नीचेन चोत्तानम्' इति शाखा-न्तरे दृष्टम् । पुत्रशब्दः पुंसि स्त्रियां च स्मृतौ दृष्टः । 'अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्' ( मनुः ९ । १३६ ) इति । दौहित्रेण मातामहः पौत्री भवतीत्यर्थः । लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते । एहि पुत्रेति । मन्त्रे च दृश्यते । 'पुमांस्ते पुत्रो जायताम्' इति । तस्मात्पुमांसः पुत्रा इति विशेषणम् । अथवा । 'पुंनाम्नो नर-कायस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा' ( मनुः ९ । १३८ ) इति । एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थमुभ-योर्ग्रहणम् ॥ ३ ॥

अङ्गुलीरेव स्त्रीकामः ॥ ४ ॥

एवकारोऽङ्गुष्ठनिवृत्त्यर्थः । स्त्रीकामो दुहितृकाम इत्यर्थः ॥ ४ ॥

रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ॥ ५ ॥

उभयकामः पुत्रदुहितृकामोऽङ्गुष्ठाङ्गुलीभिः सह हस्तं गृह्णीयात् ॥ ५ ॥

प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयञ्जपति । अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह विवहावहै । प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ॥ ६ ॥

अग्निमुदकुम्भं च त्रिः प्रदक्षिणं वधूं स्त्रीं परिणयञ्जपति । अमोहमस्मीति । उदकुम्भग्रहणमन्येषां सर्वेषां यज्ञपात्राणां बहिष्करणार्थमित्येके । अन्ये तु विवाहे

---

१ क. ख. ग. 'शुद्धाधिकानि'।

यदन्यदुद्दिष्टं पात्रमश्मा तस्यैव बहिष्करणार्थमिति । त्रिर्ग्रहणं परिणयनेन संबध्यत उत जपेन । यदि पूर्वेण तर्हि सकृज्जपः स्यात् । अथ जपेन तर्हि सकृत्परिणीतिः । पूर्वेणेति ब्रूमः । कुतः । परिणीय परिणीयेति तस्य बहुत्वं दर्शितम् । जपश्च परिणयाद्वमितिः* कृत्वा यावत्परिणयनमावर्तते ॥ ६ ॥

परिणीय परिणीयाऽश्मानमारोहयतीममश्मानमारोहाश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति ॥ ७ ॥

वीप्साद्विर्वचनं सर्वपरिणयनेष्वश्मारोहणं कारयितव्यमित्येतदर्थम् । अथास्य कर्मणः कः कर्ता । आचार्यः । कुतः । वक्ष्यति—' शिरसी उदकुम्भेनावसिच्य ' ( गृ० १ । ७ । २० ) इति । स्वयंकर्तृत्वे सत्यवसेचनं कर्तुं न शक्यत इति । तदसत् । वर एव कर्ता आचार्येणे ह्ययं विसृष्टो विवाहं करोति । उदकुम्भग्रहणं तु तत्रस्थमुदकं लक्षयति ॥ ७ ॥

वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥ ८ ॥

ततो वध्वञ्जलावुपस्तीर्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति । वरो जामदग्न्यश्चेत्त्रिः+ । ततः शेषमभिघार्यावदानं च प्रत्यभिघारयति । एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति । भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च ॥ ८ ॥

त्रिर्जामदग्न्यानाम् ॥ ९ ॥

पञ्चावत्तिनामित्यर्थः ॥ ९ ॥

प्रत्यभिघार्य हविः ॥ १० ॥

हविःशब्दः शेषे वर्तते । यथा 'नात्र हवींषि प्रत्यभिघारयति' ( १ । १० । २१ ) ॥ १० ॥

अवत्तं च ॥ ११ ॥

अवदानमित्यर्थः । उपस्तरणाभिघारणे कः करोति । भ्राता । कुतः । समानकर्तृत्वनिर्देशात् । तदयुक्तम् । यदि ह्यत्र भ्राताऽभिप्रेतः स्याद्वध्वञ्जलौ भ्रातोपस्तीर्येत्येवावक्ष्यत् । तस्माद्वर एव करोति । यत्तूक्तं समानकर्तृत्वनिर्देशादिति । तत्र ब्रूमः । असमानकर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते । यथा ' आज्याहुतिं हुत्वा सुरूपं धनं दद्यात् ' ( श्रौ० ३ । १३ ) इति । होमे ब्रह्मा कर्ता । दाने यजमान इत्यादिषु पूर्वकालत्वमात्रमेव विवक्षितं तद्वदत्रापि ॥ ११ ॥

---

* अद्वस्य प्रधान तुगुणत्वादिति भाव. । + अत्र मानं त्रिर्जामदग्न्यानामित्यग्रिमं सूत्रम् ।

---

१ क. घ. °त्येवमर्थम् । २ क. घ. °ण स्वसो वि° ।

एषोऽवदानधर्मः ॥ १२ ॥

यत्र यत्रावदानमस्ति तत्र तत्रैव धर्मो भवतीत्यर्थः । 'मध्यात्पूर्वार्धाच्च हविषोऽवद्यति '( १ । १० । १८ ) इत्यादौ ॥ १२ ॥

अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवोऽर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः । स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥ १३ ॥

को जुहोति । वधूः । कुतः । अविच्छिन्दत्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः । वध्वाः । कुतः । सा हि जुहोति । मन्त्रलिङ्गात् । कन्या अग्निमयक्षतेति । तदसत् । न हि स्त्रीणां मन्त्रेष्वधिकारोऽस्ति । ननु कथं पत्नीवाचने । तत्र वचनमस्ति । अत्र तु संदिग्धम् । तस्माद्वरस्य मन्त्राः । मन्त्रलिङ्गाच्च । ' स इमां देवः ' इति हि परोक्षनिर्देशः । यदि हि वध्वाः स्युः स इमां देव इति न स्यात् । यदुक्तं सा हि जुहोतीति । तत्र ब्रूमः । अन्यस्यापि मन्त्रो दृश्यते । ' अध्वर्युर्जुहोति ' ' होता वषट्करोति ' । यदुक्तं मन्त्रलिङ्गादिति । तत्र ब्रूमः । नैवेयं कन्याऽभिधीयते । अन्या एव तु कन्याः । यदीयमभिधीयते बहुवचनं नोपपद्यते । तथाभूतश्च प्रत्ययः । तस्माद्वरस्येति सिद्धम् ॥ १३ ॥

अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् ॥ १४ ॥

अप्राप्तनिषेधः किमर्थः । चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके । अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि । तथा त्रयो होमाः । अत्र कथं पूर्वं पूर्वं परिणयनं कृत्वा पश्चाद्धोमः स्यादिति ज्ञापयितुमिति । शूर्पपुटः कोणः । तूष्णींवचनं प्रजापतिज्ञानार्थम् । चतुर्थग्रहणं कथम् । एतस्य द्रव्यस्य स्विष्टकृत्तं न स्यात्स एव च कर्ता यथा स्यादिति । तेन वधूर्जुहोति ॥ १४ ॥

ओप्योप्य हैके लाजान्परिणयन्ति तथोत्तमे आहुती न संनिपततः ॥ १५ ॥

अभिमतार्थज्ञापनार्थो हशब्दः । एके लाजानोप्योप्य पश्चात्परिणयन्ति । किमिति । तथा सत्युत्तमे आहुती न संनिपतत इति कृत्वा । पूर्वस्मिंस्तु पक्ष उत्तमे आहुती संनिपततः । कोऽयं संनिपातो नाम । यदि पूर्वाहुतिशिरसि प्रक्षेपः । न तर्हि कश्चिदप्यंतराविच्यते किं पुनः पूर्वस्मिन्पक्षे । अथाऽऽनन्तर्यम् । न तर्ह्यसौ दोषः । पार्वणादौ दृष्टत्वात् । तस्मादयमर्थः । यथोत्तमे आहुती न संनिपततस्तथा कर्त-

व्यम् । उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः । कथं वा न स्यात् । अपरिणीय शूर्पपुटेनाभ्यात्मामिति । अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत् । अथवा पूर्वस्मिन्पक्ष उत्तमे + संनिपततः । अत्र तु न संनिपततः इति वदन्नपरिणीयवचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्वं परिणयनं कृत्वा पश्चाद्धोमो न चाऽऽनन्तर्येण होम इति ज्ञापयति । यदि त्वानन्तर्येण होमः स्यात्सर्वासामेव संनिपातादुत्तमयोराहुत्योः पूर्वस्मिन्पक्षे संनिपात इति नोपपद्यते ॥ १५ ॥

अथास्यै शिखे विमुञ्चति यदि कृते भवतः ॥ १६ ॥

अथशब्द इदानीं स्विष्टकृन्निवृत्त्यर्थः । ×अस्या इति वरस्य निवृत्त्यर्थः । यदीत्यनित्ये । देशधर्मादिना यदि कृते भवतः ॥ १६ ॥

के कृते भवत इत्याह—

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥ १७ ॥

प्र त्वा मुञ्चामीति दक्षिणां शिखां विमुञ्चति ॥ १७ ॥

उत्तरामुत्तरया ॥ १८ ॥

प्रेतो मुञ्चामीत्युत्तरा शिखां विमुञ्चति । वरस्य तु शिखे तूष्णीं विमुञ्चति॥१८॥

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव । पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥ १९ ॥

अथशब्दः पूर्वेण तुल्यः । एनां वधूम् । अपराजिता प्रागुदीची । तत्र सप्त पदान्यभ्युत्क्रामयति वधूं सप्तभिर्मन्त्रैः । वाक्यस्य साकाङ्क्षत्वाद्वशादेश्च योग्यत्वात्संनिहितत्वाच्च प्रत्येकं संबध्यते । यथा रहस्य उच्छिनामीति शब्दः 'प्राणाय त्वाऽपानाय त्वा व्यानाय त्वोच्छिनामि' इत्यन्त्ये वाक्ये पठितोऽपि पूर्वत्रापि संबध्यते तद्वदत्रापि । ऐतरेयिभिरप्युक्तं 'मत्रापि सर्वत्र समानम्' इति । तेन 'इष एकपदी भव सा मामनुव्रता भव' इति सर्वत्र संबन्धनीयम् ॥ १९ ॥

उभयोः संनिधाय शिरसी उदकुम्भेनावसिच्य ॥ २० ॥

सप्तमे पदेऽभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी संनिधाय केनचिदुदकुम्भमा-

---

+ 'च संनिपातादुत्तरयोराहुत्यो- पूर्वे' इति घ- पुस्तकेऽधिको ग्रन्थः । ×षष्ठ्यर्थे चतुर्थी ।

१ ग घ 'षा महाव्रत उ' ।

नाथ्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाऽऽज्येन स्विष्टकृतं जुहोति । साकाङ्क्षत्वात् ॥ २० ॥

ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रीं वसेत् ॥ २१ ॥

ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात्तदैवंगुणयुक्ताया ब्राह्मण्या गृहेऽनन्तरां रात्रीं+ वसेत् । वसतिं कुर्यादित्यर्थः । स्वग्रामे विवाहश्चेन्नायं विधिः ॥२१॥

ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नीं प्रजां विन्देयेति ॥ २२ ॥ ख० ७ ॥

समाप्ते होमे रात्रौ ध्रुवादीन्दृष्ट्वा वाचं विसृजेत् 'जीवपत्नीम्' इति मन्त्रेण । इदानीं वाग्विसर्जनविधानाद्धोमादारभ्यैतावन्तं कालं वाचो नियम इति गम्यते । कस्यायं वाग्विसर्गः । वध्वाः । कुतः । मन्त्रलिङ्गात् । तथा हि—जीवः पतिर्यस्याः सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । 'पत्युर्नो यज्ञसंयोगे' (४।१।३३) 'विभाषा सपूर्वस्य' (४।१।३४) इति ङीप्प्रत्ययो नश्चान्तादेशः ॥ २२ ॥ ७ ॥

प्रयाण उपपद्यमाने 'पूषा त्वेतो नयतु हस्तगृह्येति' यानमारोहयेत् ॥ १ ॥

विवाहहोमानन्तरं स्वगृहं गन्तव्यम् । तत्र यदि ग्रामान्तरे स्वगृहं स्यात् । तथा सति तत्र प्रयाणे यदि यानमुपपद्यते । तथा सत्युपपद्यमाने याने यानमारोहयेद्वधूं पूषेत्यादिना मन्त्रेण । तेन प्रयाणे यानस्यानियमः । यानादन्येन शिबिकादिना प्रयाणे च न भवति मन्त्रः । स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधिः॥१॥

अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेत् ॥ २ ॥

यद्यन्तरा नाव्या नदी स्यात्तदाऽनेनार्धर्चेन नावमारोहयेत् । वधूमिति शेषः॥२॥

उत्तरेणोत्क्रमयेत् ॥ ३ ॥

उत्तरेणार्धर्चेन वधूमुदकादुत्तारयेत् ॥ ३ ॥

जीवं रुदन्तीति रुदत्याम् ॥ ४ ॥

नीयमाना वधूर्यदि रोदिति बन्धुवियोगात्तदैतां जपेत् । अयं विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ ४ ॥

विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥ ५ ॥

विवाहाग्निग्रहणमग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थम् । अजस्रग्रहणं ध्रियमाणस्य

---

+ 'कृदिकारादक्तिनः' इतिगणसूत्रेण रात्रीशब्दोऽपि साधुः ।

---

१ क. प. °त म° । २ क. °हं प्रति म° । ३ क ग. प. °धूं म° । ४ ग °न । अग्रतोहा-मेत्यर्धर्चेन प° ।

नियमार्थम् । तेनान्यत्र प्रयाणे समारोपणं कृत्वा नयनं गम्यते । अयं च विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ ५ ॥

कल्याणेषु देशवृक्षचतुष्पथेषु माविदन्परिपन्थिन इति जपेत् ॥ ६ ॥

कल्याणेषु विवाहादिशोभनेषु देशवृक्षचतुष्पथेष्वेतां जपेत् ॥ ६ ॥

वासे वासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेत ॥ ७ ॥

वसतौ वसतावीक्षकाः सन्ति चेत्तानेतयेक्षेत । वासादन्यत्रेक्षणे न मन्त्रः । (*वीप्साद्विर्वचनं प्रतिवसति मन्त्रप्राप्त्यर्थम्) ॥ ७ ॥

इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ॥ ८ ॥

अनया वधूं गृहं प्रवेशयेत् । एवमादयो विधयः स्वग्रामेऽपि विवाहे भवन्ति ॥ ८ ॥

विवाहाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् । आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वेदेवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वाऽनक्ति हृदये ॥ ९ ॥

अग्निप्रतिष्ठापनान्तं कृत्वाऽग्निमुपसमादधाति । समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः । ततः पश्चादस्याऽऽनडुहं चर्माऽऽस्तृणाति । प्राग्ग्रीवमुत्तरलोम (+ऊर्ध्वलोम) । ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिंश्चर्मण्युपविष्टायां समन्वारब्धायां वध्वामिध्माधानाद्याज्यभागान्तं कृत्वा 'आ नः प्रजाम्' इति चतसृभिः प्रत्यृचं हुत्वा ततः 'समञ्जन्तु' इत्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत् । सा तूष्णीं प्राश्नाति । सकृत्प्रयुक्तस्य मन्त्रस्योभयप्राशनार्थत्वात् । उभयार्थत्वं तु नाविति मन्त्रे द्विवचनात् । आज्यशेषेण वोभयोर्हृदयेऽनक्ति तेनैव मन्त्रेण । हृदये अत ऊर्ध्वमिति विवृत्त्या पाठः कार्यः । प्रगृह्यत्वात् । ततः स्विष्टकृदादि समापयेत् । विवाहाग्निग्रहणमन्यनिवृत्त्यर्थम् । कथं पुनरन्याग्निप्राप्तिराशङ्का । 'गृह्याणि वक्ष्यामः' ( गृ० १।१।१ ) इति प्रतिज्ञातम् । उच्यते । दायविभागकालेऽग्निः परिगृह्यते चेत्तत्राप्यन्योऽग्निः प्रसज्येत तन्निवृत्त्यर्थमिदम् । अपि चात्र विवाहाग्निग्रहणात्र विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः । किं तर्हि गृहप्रवेशनीयहोमे

* षडुंलाङ्कस्थो ग्रन्थः क. ग. घ. पुस्तकेषु नास्ति । + कंसस्थिता पङ्क्तिः क. ग. घ. पुस्तकेषु नास्ति ।

१ क. घ. °णं कुर्यादिति न° । २ क. °षु धो° । ३ क. घ. °सानन्ये° । ४ घ. °प्रणयता° ।

कृते । एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिर्नैकेनेति ज्ञाप्यते । तेन गृहप्रवेशनीयहोमादर्वाग्दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः । परिचरणहोमस्तु कार्य एव । 'पाणिग्रहणादि' ( गृ० १।९।१ ) इति वचनात् । वैश्वदेवं च कार्यमेव । तस्याग्निविशेषविध्यभावात् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम् । उपसमाधायेत्यास्तरणकालोपदेशार्थम् । अथवा समानकर्तृकत्वसिद्ध्यर्थम् । तेन यत्रोपसमाधानग्रहणं नास्ति तत्रान्यो वोपसमाधानं कुर्यात् । तस्मिन्निति[1]वचनं चर्मास्तरणानन्तरं तन्त्रान्तरमिति ज्ञापनार्थम् । प्रत्यृचग्रहणं कथम् । ऋगन्ते होमः स्यान्न स्वाहाकारान्त इत्येवमर्थम् । स्वाहाकारं पठञ्जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चाद्धोमः । आज्यशेषेण वेति सिद्धवदुपदेशादनादेशयाज्येन होम इति गम्यते ॥ ९ ॥

अक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्याताम् ॥ १० ॥

विवाहादारभ्य एते नियमा भवन्त्युभयोः । 'हैडिम्बिका राजमाषा माषा मुद्गा मसूरिकाः । लङ्कचादक्याश्च निष्पावास्तिलाद्याः क्षारसंज्ञिताः' गृहप्रवेशनीयहोमात्प्रागपि नियमानामिष्टत्वाद्योगविभागः कृतः ॥ १० ॥

उत्तरावधिमाह—

अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम् ॥ ११ ॥

अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्याताम् ॥ ११ ॥

संवत्सरं वैक ऋषिर्जायत इति ॥ १२ ॥

संवत्सरं[3] वा नियतौ स्यातामेक ऋषिकल्पः पुत्रो जायत इति कृत्वा । अन्ये त्वाहुः—नियमान्त एक ऋषिः संपद्यते । पितृगोत्रं विहाय पतिगोत्रं भजत इत्यर्थः ॥ १२ ॥

चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥ १३ ॥

व्रतानन्तरं सूर्याविदे वध्वोपयमनकाले उपहितं वस्त्रं दद्यात् । सूर्यया दृष्टो मन्त्रः सूर्या । यथा वृषाकपिरिति । सा च 'सत्येनोत्तभिता' इति सूक्तम् । कथं सत्पुनरसौ वेत्ति स्वरतो वर्णत इत्यादि ॥ १३ ॥

अन्नं ब्राह्मणेभ्यः ॥ १४ ॥

अन्नं ब्राह्मणेभ्यो दद्यात् ॥ १४ ॥

---

१ क. म. 'रमङ्गान्तरं कर्तव्यमि' । २ ग. घ. 'रकृत्वा । ३ ख. मवान्वे । ४ ग. घ. °हे परिदि' ।

अथ स्वस्त्ययनं वाचयीत ॥ १५ ॥ खं० ८ ॥

ॐ स्वस्ति भवन्तो ब्रुवन्त्विति । ते च ॐ स्वस्तीति प्रत्यूचुः ॥ १५ ॥ ८ ॥

पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा ॥ १ ॥

पाणिग्रहणप्रभृति गृह्यमग्निं परिचरेत्स्वयं पत्न्यादयो वा । पाणिग्रहणादिवचनं गृहप्रवेशनीयहोमानन्तरकाले प्रारम्भाशङ्कानिवृत्त्यर्थम् । यद्विधास्यते तत्परिचरणम् । पत्नीकुमार्यौ न होमकर्म कुर्यातामित्येके । कुतः । स्त्रीणां मन्त्रानधिकारात् । अन्ये तु सहोमकम् । कुतः । वचनात् । पत्नीसंहनवत् । अन्तेवासी शिष्यः ॥ १ ॥

नित्यानुगृहीतं स्यात् ॥ २ ॥

अनुशब्दः परिशब्दस्य स्थाने । नित्यं परिगृहीतं स्यादित्यर्थः । किमुक्तं भवति । यदि विवाहाग्निर्नष्टः स्यात्ततो नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेदिति । अथवा । आत्मनः पत्न्या वा समीपे कथं नित्यः स्यात् । न । उभयोरन्यतरः स्थापयितव्य इति । अथवा । होष्यद्धर्मस्योपलेपनादेर्निवृत्त्यर्थम् । तदपि हि क्वचग्रहणेन प्राप्नोति परिसमूहनादिवत् ॥ २ ॥

यदि तूपशाम्येत्पत्न्युपवसेदित्येके ॥ ३ ॥

यदि प्रादुष्करणकाल उद्वासयेत्ततोऽन्यस्माद्धोमकालात्पत्न्युपवसेदित्येके । एकेग्रहणाद्यजमान उपवसेदित्येके । 'अयाश्चाग्ने' इत्येकामाहुतिं जुहुयादित्येके । कुतः । शास्त्रान्तरे दर्शनात् । अन्ये तु पूर्वसूत्रमेवं व्याचख्युः । नित्यशब्द उक्तार्थः । 'नित्यमाचमनम्' ( श्रौ० २।२ ) इति यथा । अनुशब्दः पश्चाद्वचनः । एतदुक्तं भवति । यदि वैवाह्यो न गृहीतो दायविभागकाले गृह्यते । गृहीतोऽपि नष्टो वा द्वादशरात्रमतिक्रान्तः । तत उक्तया क्रियया पश्चाद्गृहीतो भवति । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाज्याहुतयश्च हृदयाञ्जनं च भवति । नान्यत् । कन्यासंस्कारत्वात् । होमद्वयं चात्र समानतन्त्रं स्यात् । लाजहोमोऽत्रापि पत्न्यञ्जलिना कार्यः । तद्धोमे तस्य साधनत्वेन दृष्टत्वात् । लाजावपनं तु स्वयमेव करोति । न भ्राता । दायविभागकाले गृह्यमाणे प्रयोगविशेषोऽन्वेष्यः ॥ ३ ॥

तस्याग्निहोत्रेण ॥ ४ ॥

तस्यग्रहणं योगविभागार्थम् । तस्याग्निहोत्रेणैव विधिर्भवति नान्येन । तेन पाकयज्ञतन्त्रं न भवति ॥ ४ ॥

तर्हि प्राशनादयोऽपि स्युरित्याशङ्क्याऽऽह—

प्रादुष्करणहोमकालौ व्याख्यातौ ॥ ५ ॥

प्रादुष्करणं नाम ' अपराह्णे गार्हपत्यं प्रज्वल्य ' ( श्रौ० २ । १ ) इति । एवं प्रातर्व्युष्टायाम् ' ( श्रौ० २ । २ ) इति च । ' प्रदोषान्तो होमकालः संगवान्तः प्रातः ' ( श्रौ० २ । १२ ) इति । एतावेव भवतो नान्यदित्यर्थः ॥५॥

हौम्यं च मांसवर्जम् ॥ ६ ॥

हौम्यं चाग्निहोत्रेण व्याख्यातम् । ' पयसा नित्यहोमः ' ( श्रौ० २ । ३ ) इत्यादि पञ्च द्रव्याण्याम्नातानि । मांसवर्जमिति मांसप्रतिषेधाच्छास्त्रान्तरे दृष्टमपि हौम्यं भवतीति गम्यते । ' पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः । सोमो मांसं तथा तैलमापस्तानि दशैव तु ' । द्रवद्रव्याणि स्रुवेण जुहोति । कठिनानि तु पाणिना । येन द्रव्येण सायं जुहोति तेनैव प्रातः । प्रतिनिधिवर्जम् ॥ ६ ॥

कामं तु व्रीहियवतिलैः ॥ ७ ॥

कामग्रहणं पूर्वोक्ताभावे कथमेतेषां ग्रहणं स्यादित्येवमर्थम् । व्रीह्यादयश्च प्रत्येकं साधनानि । न मिश्राणि । तच्च न्यायतोऽवगन्तव्यम् ॥ ७ ॥

अग्नये स्वाहेति सायं जुहुयात्सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ॥ ८ ख० ९ ॥

तूष्णीं द्वितीये आहुती जुहोति । तूष्णींग्रहणं प्रजापतिध्यानार्थम् । उभयत्र सायं प्रातश्चेत्यर्थः । अग्निं परिसमुह्य परिस्तीर्य पर्युक्ष्य होमद्रव्यस्याग्निहोत्रवत्तूष्णीं संस्कारं कृत्वा ततोऽग्नये स्वाहेति जुहोति । ततः प्रजापतय इति चतुर्थ्यन्तं शब्दरूपं ध्यात्वा स्वाहेत्युपांशूक्त्वा द्वितीयाहुतिं जुहोति । ततः परिसमूहनपर्युक्षणे । एवं सायम् । प्रातर्होमे तु पूर्वमन्त्रस्थाने सूर्याय स्वाहेति विशेषः ॥८॥९॥

अथ पार्वणः स्थालीपाकः ॥ १ ॥

उक्तोऽर्थः । पर्वणि भवः पार्वणः । स्थालीपाक इति कर्मनामधेयम् । (+ज्योतिष्टोमादिवत् ) । दर्शपूर्णमासातिदेशात्काले सिद्धे पार्वणवचनं पाणिग्रहणाद्यहरहःक्रियाशङ्कानिवृत्त्यर्थम् । विवाहादनन्तरं या पौर्णमासी तस्यामस्य प्रथमः प्रारम्भः । प्रतिपद्यौपासनं हुत्वा ततः परिसमूहनादि प्रारभेत ॥ १ ॥

तस्य दर्शपूर्णमासाभ्यामुपवासः ॥ २ ॥

तस्य ग्रहणं नियमार्थम् । तस्यैवोपवासो यथा स्यात्तदतिदिष्टानां मा भूदिति । दर्शपूर्णमासाविति कर्मनामधेयम् । उपवास इत्येकभोजनम् । सर्पिर्मिश्रं दधिमिश्र-

+ कंसस्था पङ्क्तिः क. ख. घ. चिह्नितपुस्तकेषु नास्ति ।

१ क. ग. घ. 'ध मा' ।

मक्षारलवणमाशितव्यमित्यादयश्च नियमा लक्ष्यन्ते । तस्य ताभ्यामुपवासो व्याख्यात इत्यर्थः ॥ २ ॥

इध्माबर्हिषोश्च संनहनम् ॥ ३ ॥

अनयोश्च बन्धनं ताभ्यां व्याख्यातम् । ' इध्मः पञ्चदशदारुकः ' इति शान्तिकर्मणि साधयिष्यामः ॥ ३ ॥

देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम् ॥ ४ ॥

देवताश्च ताभ्यां व्याख्याताः । उपांशुयाजादिवर्जम् । तेनाग्निरग्नीषोमौ पौर्णमास्याम् । अग्निरिन्द्राग्नी अमावास्यायाम् । ( + तदुक्तं शौनकेन—' पौर्णमासी तु संप्राप्य विवाहादनन्तरम् । ततः ऽऽरभ्य कुर्वीत स्थालीपाकं तु कर्मसु ॥ तत्र यद्यप्यमावास्या विवाहानन्तरं यदा । तथाऽपि पौर्णमास्यादि(दिः) स्थालीपाकक्रिया स्मृता ' ) ॥ अथेन्द्रमहेन्द्रयोर्निषेधः किमर्थः । संनयत एव हि ते विहिते । ' इन्द्रं महेन्द्रं वा संनयनः ' ( श्रौ० १ । ३ ) इति । न चात्र सांनाय्यं विहितम् । उच्यते । गृह्यकर्माणि तावदाहिताग्नेरपीष्यन्तेऽर्धाधान औपासनाग्नौ । सर्वाधाने तु कर्मणि कर्मणि पुनः संस्कुर्यात् । संनयत इति कर्तृविशेषणम् । दर्शे चासौ संनयन् भवति सोमेनेष्टवांश्चेत् । तेनात्रापि तस्य प्राप्नुतः । तस्मान्निषेधः । तर्हीन्द्राग्नी न स्यातामसंनयत इति वचनात् । उच्यते । इन्द्राग्नी अस्यापि देवता भवत्येव । अत्र ह्यसावसंनयन्निति कृत्वा । न चात्राभावः कर्तृविशेषणम् । अत्रामावस्याविधेयत्वेन कर्तृविशेषणत्वाभावादित्यर्थः ॥ ४ ॥

काम्या इतराः ॥ ५ ॥

उक्ताभ्योऽन्या या उपांशुयाजाद्या देवतास्ताः काम्या भवन्ति । कामे सति कर्तव्या इत्यर्थः । ' विष्णुं बुभूषन्यजेत ' इत्येवमाद्याः काम्याः । ' अथ काम्यानां स्थाने ' ( ३ । ६ । १ ) इत्येव सिद्ध उपांशुयाजादीनामपि निषेधः कृतः । तथात्र काम्यत्वेनापि न क्रियेरन्निति भ्रान्तिः स्यात्तन्निवृत्त्यर्थमिदं वचनम् । अथात्र किं द्रव्यमुपांशुयाजस्य तावदाज्यम् । तस्य विद्यमानत्वादादिष्टत्वाच्च । इन्द्रमहेन्द्रयोस्तु चरुः । सांनाय्याभावात् ॥ ५ ॥

तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्धायामुष्मै त्वा जुष्टं निर्वपामीति ॥ ६ ॥

प्रणीताप्रणयनोत्तरकालं शूर्पे पवित्रे अन्तर्धाय व्रीहीन्यवान्वाऽसंभवेऽन्यान्वा

+ तदुक्तमित्यारभ्य स्मृतेत्यन्तो ग्रन्थः क. ग. घ. पुस्तकेषु न ।

१ क. ग. घ. 'मत्र प्रतीपे' ।

हौम्यानेकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति । ' अमुष्मै त्वा जुष्टं निर्वपामि ' इति । अमुष्मैशब्दस्य स्थाने चतुर्थ्या विभक्त्या देवतां निर्दिशेत् । चतुरश्चतुर इति वीप्सावचनमेकैकस्यै देवतायै चतुर्मुष्टिप्राप्त्यर्थम् । पवित्रे व्याख्याते ॥ ६ ॥

**अथैनान्प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति ॥ ७ ॥**

अथशब्दः कथम् । सर्वासामेव देवतानां निरुप्तेषु प्रोक्षणं स्यादित्येवमर्थम् । एतानिति बहुवचनं संश्लिष्टानेव प्रोक्षेन्न विभज्येत्येवमर्थम् । यथानिरुप्तमिति । तस्यै तस्यै देवतायै चत्वारि चत्वारि प्रोक्षणानि समन्त्रकेषु निर्वापेषु समन्त्रकाणि, अमन्त्रकेष्वमन्त्रकाणि पवित्रे अन्तर्धाय कुर्यादित्येवमर्थम् । निर्वापप्रोक्षणे एकस्मिन्नेव पात्रे भवतः । उत्तरत्र विभागविधानात् ॥ ७ ॥

**अवहत्यांस्त्रिःफलीकृतान्नाना श्रपयेत् ॥ ८ ॥**

कृष्णाजिन उलूखलं कृत्वा पत्न्यवहन्यात् । त्रिःफलीकृतानिति । त्रिःशुद्धीकृतानित्यर्थः । पिण्डपितृयज्ञे सकृत्प्रक्षाल्येति सकृद्ग्रहणादत्र त्रिः प्रक्षालयेत् । ततो नाना श्रपयेत् ॥ ८ ॥

**समोप्य वा ॥ ९ ॥**

एकत्र वा श्रपयेत् ॥ ९ ॥

**यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इति ॥ १० ॥**

यदि पृथक् श्रपयेत्तथा सति तण्डुलानभिमृशेत् । ' इदममुष्मा इदममुष्मै ' इति । अमुष्मैशब्दः पूर्ववत् ॥ १० ॥

**यद्यु वै समोप्य व्युद्धारं जुहुयात् ॥ ११ ॥**

यदि समोप्य श्रपयेत् । तथा सति चरुं व्युद्धृत्य, एवमभिमृश्य ततो जुहुयात् । व्युद्धारमिति व्युद्धृत्येत्यर्थः । व्युद्धरणं नाम पात्रान्तरे पृथक्करणम् । जुहुयादिति वचनं होमकाले व्युद्धरेदित्येवमर्थम् ॥ ११ ॥

**शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्मम्भिघार्यायं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति ॥ १२ ॥**

उत्तरतोऽग्नेराज्यमुत्पूयाग्नेः पश्चाद्बर्हिरास्तीर्याऽऽज्यमासाद्य, ततः शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्य तत इध्ममभिघार्य ' अयं ते ' इति मन्त्रेणाग्नावादध्यात् । बर्हिष्यासाद्य पुनरभिघार्येति केचित्पठन्ति ॥ १२ ॥

**तूष्णीमाघारावाघार्याऽऽज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति ॥ १३ ॥**

तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्माः शास्त्रान्तरदृष्टाः कथं प्रवर्तेरन्निति । उत्तरपश्चिमाया आरभ्य दक्षिणपूर्वां प्रत्यविच्छिन्नामाज्यधारां हरेत् । तथा दक्षिणपश्चिमाया आरभ्य उत्तरपूर्वां प्रत्याघारयेत् । स्रुवेणोभौ जुहुयात् । कुतः । यत्राऽऽज्यहोमे साधनान्तरानुपदेशस्तत्र स्रुवेण होम इति साधितम् 'एवंभूतोऽन्यस्तहोमा०' ( श्रौ. १ । ११ )इति सूत्रे । व्याख्यातृभिर्यावन्मात्रं स्वशाखानुक्तमपेक्षितं तावन्मात्रं ग्राह्यं नतु स्वशास्त्र उक्तमपि । 'आज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहा' इति । आज्यभागावित्यनयोर्यागयोः संज्ञा ॥ १३ ॥

उत्तरमाग्नेयं दक्षिणं सौम्यम् ॥ १४ ॥

अग्नेरुत्तरपार्श्वे आग्नेयमाज्यभागं जुहुयात् । दक्षिणपार्श्वे तु सौम्यम् । स्रुवेणोभौ जुहुयात्पूर्ववत् ॥ १४ ॥

विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ ॥ १५ ॥

आज्यभागौ 'यज्ञस्य चक्षुषी' इत्येवं श्रूयेते इत्यर्थः ॥ १५ ॥

ततः किमित्याह—

तस्मात्पुरुषस्य हि प्रत्यङ्मुखस्याऽऽसीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् ॥ १६ ॥

यज्ञपुरुषस्य हि प्रत्यङ्मुखस्याऽऽसीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् । तस्माद्दक्षिणसंस्थैव शक्या कर्तुम् । नोदक्संस्थेत्यर्थः । श्रुत्याकर्षोऽन्यत्र क्वचिदुदक्संस्थताऽपि यथा स्यादिति । तेन बलिहरणे प्रधानानामुत्तरतः पुरुषेभ्यो बलिहरणं सिद्धम् ॥ १६ ॥

मध्ये हवींषि प्रत्यक्तरं वा प्राक्संस्थान्युदक्संस्थानि वोत्तरपुरस्तात्सौविष्टकृतम् ॥ १७ ॥

अग्नेर्मध्यप्रदेशे हवींषि जुहोति । प्रत्यक्तरे वा देशे हवींषि जुहोति । प्रत्यक्तरमिति द्वितीया सप्तम्यर्थे । तत्रापि देशे प्राक्संस्थानि वा जुहोत्युदक्संस्थानि वा । ननु प्राक्संस्थानीत्यस्मिन्नसत्यप्युदक्संस्थानि वेति वाशब्दप्राप्तया प्राक्संस्थया सह विकल्पे सति पक्षे प्राक्संस्थत्वमपि सिध्यति किमर्थं प्राक्संस्थवचनम् । उच्यते । देशद्वयस्य संस्थाद्वयस्य चाऽऽनन्तर्ययोगो मा भूदित्येवमर्थम् । तेन देशद्वयेऽपि संस्थाद्वयस्य यथासंख्यता नास्तीति सिद्धम् । अग्नेरुत्तरपूर्वदेशे सौविष्टकृतं हविर्जुहोति ॥ १७ ॥

मध्यात्पूर्वार्धाच्च हविषोऽवद्यति ॥ १८ ॥

हविषो मध्यात्पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रं हविरवद्यतीति देशो नियम्यते ॥ १८ ॥

मध्यात्पूर्वार्धात्पश्चार्धादिति पञ्चावत्तिनाम् ॥ १९ ॥

पञ्चावत्तिना तु मध्यात्पूर्वार्धात्पश्चार्धादित्येवमवदानं भवति । पश्चार्धाच्चेत्येताव-तैव सिद्धे मध्यात्पूर्वार्धादिति पुनर्वचनं प्रत्यक्संस्थता यथा स्यात् । प्राक्संस्थता मा भूदित्येवमर्थम् ॥ १९ ॥

उत्तरार्धात्सौविष्टकृतम् ॥ २० ॥

सर्वेषा हविषामुत्तरार्धात्स्विष्टकृदर्थमवदानं प्रधानादानाद्भूयः सकृत्सकृदर्धखण्ड-यति । पञ्चावत्ती त्वेवं सकृत्सकृद्गृहीत्वा पुनरपि पूर्वावदानदेशस्य पुरस्तात्सकृ-त्सकृदवद्येत् । तथा दृष्टत्वात् । ततो द्विरुपरिष्टादभिघारयति पञ्चावत्ती चतुरवत्ती च ॥ २० ॥

नात्र हवींषि प्रत्यभिघारयति स्विष्टकृतं द्विरभिघारयति ॥ २१ ॥

स्विष्टकृति हविःशेषं न प्रत्यभिघारयति । अत्रग्रहणमत्रैव नाभिघारयति न प्रधानहविष्वित्येवमर्थम् । हविःशब्दः शेषे वर्तते । नावत्ते । यद्यवत्ते वर्तेत चतुर-वत्ततोहानिः स्यात् । तन्न चेष्यते ॥ २१ ॥

यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृ-द्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्त्सम-र्धय स्वाहा इति ॥ २२ ॥

अनेन मन्त्रेण स्विष्टकृतं जुहुयात् ॥ २२ ॥

बर्हिषि पूर्णपात्रं निनयेत् ॥ २३ ॥

यत्पूर्वं निहितं पूर्णपात्रं तदधुना बर्हिषि निनयेत् । निषिञ्चेदित्यर्थः ॥ २३ ॥

एषोऽवभृथः ॥ २४ ॥

यदिदं पूर्णपात्रनिनयनमेषोऽस्य कर्मणोऽवभृथो भवति । अवभृथवचनमवभृथधर्म-प्राप्त्यर्थम् । तेन तत्काचोऽभ्युक्षणं च भवति । कालस्तु सर्वप्रायश्चित्तेभ्य ऊर्ध्वं प्राक् संस्थाजपात् । अनेनैवाभ्युपायेन सर्वप्रायश्चित्तानि संस्थाजपश्च सर्वत्र कर्त्रा धार्याणीत्युक्तं भवति । निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इति पञ्च ब्रह्मणो भवन्तीत्युक्तम् । तत्रैवं क्रमः-पूर्वं कर्ता सर्वप्रायश्चित्तानि जुहोति । ततो ब्रह्मा सर्वप्रायश्चित्तानि जुहुयात् । ततः कर्ता पूर्णपात्रं निनयति । ततः कर्ता संस्था-जपेनोपतिष्ठते । ततो ब्रह्मोपतिष्ठते । ततः कर्तुः परिसमूहनपर्युक्षणे इति । अभ्यु-क्षणं च 'आपो अस्मान्, इदमापः, सुमित्र्या नः' इत्येतैर्मन्त्रैः ॥ २४ ॥

---

१ ग. 'वयति' । २ क. 'ताऽऽहुतेनै स्या' । ३ ख. घ. 'न का'।

पाकयज्ञानामेतत्तन्त्रम् ॥ २५ ॥

एतत्तन्त्रं पाकयज्ञानां सर्वेषां भवतीत्यर्थः । पाकयज्ञग्रहणं स्थालीपाकसदृशानां हुतानामेव तन्त्रं यथा स्यात्प्रहुतब्राह्मणिहुतानां मा भूदित्येवमर्थम् । अङ्गसंहतिस्तन्त्रम् । विध्यन्त इत्यर्थः । यद्यपि सर्वमुच्यते तथाऽपि न प्रधानदेवताः प्रसजन्ति । 'देवतागमे नित्यानामपाय.' ( श्रौ. २ । १ ) इति बाधदर्शनात् ॥ २५ ॥

हविरुच्छिष्टं दक्षिणा ॥ २६ ॥ ख० १० ॥

उच्छिष्टं हविर्दक्षिणां ददाति ब्रह्मणे यद्यस्ति ब्रह्मा । तदभावे ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् ॥ २६ ॥ १० ॥

अथ पशुकल्पः ॥ १ ॥

उक्तोऽर्थः । अत्र पशोस्तन्त्रमात्रमुच्यते । न पुनः पशुर्विधीयते । कल्पग्रहणात् । एवं सर्वेषु पाकरणविधानमनर्थकम् । अष्टकाशूलगवयोः प्रतिषेधात् । प्रोक्षणोपाकरणवर्जं प्रोक्षणादि समानं पशुनेति च । उच्यते । मधुपर्के ॐ कुरुतेति यदा ब्रूयात्तदाऽर्थवत् । तत्र 'ऋत्विजां बार्हस्पत्यः, स्नातकस्यैन्द्राग्नः, ऐन्द्रो राज्ञः, आचार्यादीनामाग्नेयः, प्रियस्य मैत्रः, वरस्य प्राजापत्यः, अतिथेराग्नावैश्वानरः' इत्येवं शास्त्रान्तरे दृश्यते । काम्यपशुषु चार्थवत् ॥ १ ॥

उत्तरतोऽग्नेः शामित्रस्याऽऽयतनं कृत्वा पाययित्वा पशुमाप्लाव्य पुरस्तात्प्रत्यङ्मुखमवस्थाप्याग्निं दूतमिति द्वाभ्यां हुत्वा सपलाशयाऽऽर्द्रशाखया पश्चादुपस्पृशेदमुष्मै त्वा जुष्टमुपाकरोमीति ॥ २ ॥

आज्यभागान्तं कृत्वोत्तरतोऽग्नेः शामित्रस्याऽऽयतनं कृत्वा, ततः पशुं पाययित्वा, ततोऽद्भिः पशुमाप्लाव्याग्नेः पुरस्तात्प्रत्यङ्मुखमवस्थाप्य, ततोऽग्निं दूतमिति द्वाभ्यां हुत्वा सपलाशया सपर्णयाऽऽर्द्रशाखयाऽशुष्कशाखया । पश्चादिति पृष्ठदेशे । उपस्पृशेत्पशुं 'अमुष्मै त्वा इति' मन्त्रेण । अमुष्मैशब्दः पूर्ववत् । अग्निं दूतमित्यस्य प्रतीकस्य बहुगतत्वेऽपि हीनपादग्रहणसामर्थ्यात्सूक्तादेर्ग्रहणम् । तर्हि द्वे सूक्ते प्राप्नुतः । न । यत्र सूक्तद्वयमिच्छति तत्र सूक्ते इति करोति । यथा 'उप प्र यन्त इति सूक्ते' ( श्रौ. ४ । १३ ) इति । तस्मादृचो भवत इति सिद्धम् ॥ २ ॥

व्रीहियवमतीभिरद्भिः पुरस्तात्प्रोक्षति, अमुष्मै त्वा जुष्टं प्रोक्षामीति ॥ ३ ॥

व्रीहियवमिश्राभिरद्भिः पशुं पुरस्तादग्रतः प्रोक्षति 'अमुष्मै त्वा' इति मन्त्रेण ॥ ३ ॥

---

१ ग. घ. अथापि । २ क. °त्र पश्चिति प° । ग. °त्र पशुरीति प° ।

तासां पाययित्वा दक्षिणमनु बाहुं शेषं निनयेत् ॥ ४ ॥

तासां व्रीहियवमतीनामपामेकदेशं पशुं पाययित्वा दक्षिणं बाहुमनु शेषं निषिञ्चेत्। तासांग्रहणं प्रोक्षणप्रतिषेधेऽप्यद्भ्यो द्वितीयं पायनं यथा स्यादित्येवमर्थम् ॥ ४ ॥

आवृतैव पर्यग्नि कृत्वोदञ्चं नयन्ति ॥ ५ ॥

आवृतैव पर्यग्नि कृत्वा, पशुमुदञ्चं नयन्ति । आवृतैव तूष्णीमेवेत्यर्थः । मन्त्रप्रतिषेधो मन्त्रवर्जमन्ये धर्माः श्रौतायां इष्टाः कथं स्युरिति त्रिः पर्यग्निकरणादयः ॥५॥

तस्य पुरस्तादुल्मुकं हरन्ति ॥ ६ ॥

तस्य पशोः पुरस्तादग्रत उल्मुकं प्रदीप्तं काष्ठं हरन्ति । तस्यग्रहणमग्रतो नयनं यथा स्यात् । नापि पूर्वेण । नापि प्रथममित्येवमर्थम् । अन्यथा पुरस्ताच्छब्दस्यानेकार्थत्वाद्दिक्कालवाचिनोऽपि ग्रहणं स्यात् ॥ ६ ॥

शामित्र एष भवति ॥ ७ ॥

एषोऽग्निः शामित्रो भवति । तस्मात्प्रागुक्ते शामित्रायतने तस्य प्रतिष्ठापनं भवति ॥ ७ ॥

वपाश्रपणीभ्यां कर्ता पशुमन्वारभते ॥ ८ ॥

वपाश्रपण्यौ काश्मर्यमय्यौ भवतः । तत्रैका विशाखा परा सशाखा । ताभ्यां योऽस्य कर्मणः कर्ताऽध्वर्युस्थानीयः स्यात्स पशुमन्वारभते ॥ ८ ॥

कर्तारं यजमानः ॥ ९ ॥

अध्वर्युं यजमानोऽन्वारभते ॥ ९ ॥

पश्चाच्छामित्रस्य प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं संज्ञप्य पुरा नाभेस्तृणमन्तर्धाय वपामुत्खिद्य वपामवदाय वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य शामित्रे प्रताप्याग्रेणैनमग्निं हृत्वा दक्षिणत आसीनः श्रपयित्वा परीत्य जुहुयात् ॥ १० ॥

शामित्रस्य पश्चिमे देशे बर्हिरुपस्तृणाति कर्ता । 'तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति' इति श्रुतेः । ततस्तस्मिन्बर्हिषि प्राक्शिरस्कं प्रत्यक्शिरस्कं वोदक्पादं पशुं संज्ञपयति शमिता । उदक्पादमित्येव सिद्धे प्राक्शिरसं प्रत्यक्शिरसं वेति वचनमूर्ध्वशिरसः संज्ञपनं मा भूदित्येवमर्थम् । ततः कर्ता पुरा नाभेरर्वाङ्नाभेर्दक्षिणतो नाभेरासीनो वपास्थानं ज्ञात्वा, तत्र तृणमन्तर्धाय, तिर्यक् छित्त्वा, वपामुत्खिदेदुद्धरेत् । वपास्थानं तु दक्षिणस्य पार्श्वस्य विविक्तप्रदेशः । यदि पशुः प्राक्शिराः संज्ञप्तः । तथा सति दक्षिणं पार्श्वमुत्तानं कृत्वा तृणान्तर्धा-

---

१ ध. 'ताम' । २ क. निनयेत् । २ ध. 'हियत्' । १ क. ख. 'रसं प्रत्यक्शिरसं वो' ।

नादि कुर्यात् । ततो वपामवदायावखण्ड्य पुनर्वपाग्रहणं कृत्स्नावदानार्थम् । तेनान्येष्ववदानेष्वकृत्स्नानि ग्रहणानि भवन्ति । ततो वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य प्रक्षाल्य शामित्रे प्रताप्य । प्रतापनं तु घर्ममात्रम् । श्रपणस्योत्तरत्र विधानात् । ततः शामित्रस्योत्तरतो गत्वाऽग्रेणैनमौपासनमग्निं वपां हृत्वाऽस्य दक्षिणत आसीनः श्रपयित्वा श्रपिता तां वपामभिघार्य बर्हिषि प्लक्षशाखासु निधाय, उभावप्यग्नी यथागतं परीत्य जुहुयादमुष्मै स्वाहेति । वपाश्रपणकाल आज्येनाऽऽसिच्य श्रपयति । 'तामध्वर्युः स्रुवेणाभिघारयन्नाह' इति श्रुतेः । 'यद्यपि चतुरवत्ती यजमानः स्यात् । अथ पञ्चावत्तैव वपा' इति श्रुतेर्वपा पञ्चावत्ता भवति । आज्यं हिरण्यशल्को वपा हिरण्यशल्कमाज्यमिति । हिरण्याभावे तु द्विराज्यं ततो वपा पुनर्द्विराज्यमिति ॥ १० ॥

एतस्मिन्नेवाग्नौ स्थालीपाकं श्रपयन्ति ॥ ११ ॥

एतस्मिन्नेवौपासन एवाग्नौ पश्वङ्गत्वेन पशुदेवतायै स्थालीपाकं श्रपयन्ति । बहुवचनं तु कर्तुरनियमार्थम् । एतस्मिन्निति वचनं शामित्रे मा भूदित्येवमर्थम् । इतरथा शामित्रस्य श्रपणार्थत्वात्तस्मिन्नेव स्यात् ॥ ११ ॥

एकादश पशोरवदानानि सर्वाङ्गेभ्योऽवदाय शामित्रे श्रपयित्वा हृदयं शूले प्रताप्य, स्थालीपाकस्याग्रतो जुहुयात् ॥१२॥

पशोर्ग्रहणं यानि त्रेतायामेकादशावदानानि पशोः प्रसिद्धानि तानि यथा स्युरित्येवमर्थम् । हृदयं जिह्वा वक्ष इत्येवमादीनि । सर्वाङ्गग्रहणमेकादशभ्योऽन्यान्यपि यान्यङ्गानि[2] दृष्टानि तेषामपि विकल्पेन ग्रहणार्थम् । एवमवदाय तानि शामित्रे श्रपयति । हृदयं शूले[3] कृत्वा तथा प्रतापयति । यथा शृतं भवति । ततः शृतान्यभिघार्योद्वास्य । ततः स्थालीपाकस्यैकदेशं पूर्वं जुहुयात्ततोऽवदानानि ॥१२॥

अवदानैर्वा सह ॥ १३ ॥

अवदानैर्वा सह स्थालीपाकं जुहोति । न पृथक् । यदा तु पृथग्जुहोति तदा स्विष्टकृदपि पृथगर्थम् ॥ १३ ॥

एकैकस्यावदानस्य द्विर्द्विरवद्यति ॥ १४ ॥

द्विर्ग्रहणं देशानियमार्थम् । एकैकस्यावदानस्य यस्मिन्कस्मिंश्चिद्देशे द्विर्द्विरवद्यति । पञ्चावत्ती तु त्रिस्त्रिरवद्यति । उपस्तरणप्रत्यभिघारणे कृत्वा जुहोति ॥ १४ ॥

आवृतैव हृदयशूलेन चरन्ति ॥ १५ ॥ ख०११ ॥

---

१ ख. "नावस्तिष्यावसि" । २ क. ग. "नि बाहू ऊरू हृदयं शिर इति पञ्चाङ्गानि द" । ३ ख. "ले प्रोय तथा प्र" ।

स्विष्टकृत्सर्वप्रायश्चित्तान्तं कृत्वा, तूष्णीं हृदयशूलेन चरन्ति । आवृद्ग्रहणं मन्त्रवर्जमन्ये धर्मास्त्रेतायां दृष्टौ यथा स्युरित्येवमर्थम् । तेन शुष्कार्द्रयोः संधिदेशे शूलस्योद्वासनम् । तस्योपरिष्टादप उपस्पर्शनम् । समिद्ग्रहणमुपस्थानं समिदाधान-मित्येते [धर्माः] कार्याः । ततः पूर्णपात्रनिनयनादि समापयेत् ॥ १९ ॥ ११ ॥

चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत् ॥ १ ॥

चित्ते भवश्चैत्यः । यदि कस्यैचिद्देवतायै प्रतिशृणोति । शङ्करः, पशुपतिः, आर्या, ज्येष्ठा, इत्येवमादयः । यद्यात्मनोऽभिप्रेतं वस्तु लब्धं ततस्त्वामहमाज्येन स्थालीपाकेन पशुना वा यक्ष्यामीति । ततो लब्धे वस्तुनि तस्य तेन यागं कुर्यात्स चैत्ययज्ञः । तत्र स्विष्टकृतः प्राक् चैत्याय बलिं हरेन्नमस्कारान्तेन नामधेयेन । पुनश्चैत्यग्रहणं प्रत्यक्षहरणार्थम् । तेन चैत्यायतन एवोपलेपनादि कुर्यात् ॥ १ ॥

यद्यु वै विदेशस्थं पलाशदूतेन यत्र वेत्थ वनस्पत इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेदिमं तस्मै बलिं हरेति चैनं ब्रूयादयं तुभ्यमिति यो दूताय ॥ २ ॥

यदि विदेशस्थं चैत्यं यजेत्तदा पलाशदूतेन बलिं हरेत् । पलाशेन दूतं वीवधं च कुर्यात् । यत्र वेत्थेत्यृचा द्वौ पिण्डौ कृत्वा, वीवधेऽभ्याधाय दूताय प्रयच्छेत् । तयोरेकं पिण्डं निर्दिश्य दूतं वदति 'इमं तस्मै बलिं हर' इति । अपरं दूताय प्रयच्छति 'अयं तुभ्यम्' इति । एतयर्चेति वचनमन्यत्र पादग्रहणेऽपि क्वचित्सूक्तं भवतीत्येवमर्थम् । तेन 'आ त्वा हार्षमन्तरेधि' इति 'ऋषभं मा समा-नानाम्' इति च सूक्तं सिद्धम् । अन्ये पुनरभ्यासार्थं मन्यन्ते । पिण्डकरणे, वीवधाभ्याधाने, दूताय प्रदान इति ॥ २ ॥

+ प्रतिभयं चेदन्तरा शस्त्रमपि किंचित् ॥ ३ ॥

कर्तुश्चैत्यस्य च मध्ये भयमस्ति चेच्छस्त्रमपि किंचिद्दद्याद्दूताय ॥ ३ ॥

नाव्या चेन्नद्यन्तरा प्लवरूपमपि किंचिदनेन तरितव्यमिति ॥ ४ ॥

उभयोर्मध्ये यदि नावा तार्या नदी स्यात्तदा प्लवरूपमपि किंचिद्दद्यादनेन मन्त्रेण ॥ ४ ॥

धन्वन्तरियज्ञे ब्राह्मणवर्मि चान्तरा पुरोहितायाग्रे बलिं हरेत् ॥ ५ ॥ ख० १२ ॥

---

+ 'प्रतिभयं भये भीष्मे' इति हैमकोशः ।

---

१ ग. घ. 'ष्टाः कर्यं स्यु' । २ क. घ. 'त्पद प्र' ।

यदि धन्वन्तरिश्चैत्यो भवति तदा ब्रह्माणमग्निं चान्तरा पुरोहितायाग्रे बलिं हरेत्पुरोहिताय नम इति । ततो धन्वन्तरये नम इति । धन्वन्तरौ विदेशस्थे स्वयं विशेषः । धन्वन्तरेश्च पुरोहितस्य चैकः पिण्डो देयः । द्वितीयो दूताय॥६॥१२॥

उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ॥ १ ॥

आम्नातमिति शेषः । गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं भवति तद्गर्भलम्भनम् । पुमांल्लभ्वो जायते येन तत्पुंसवनम् । पुमांस्तु सन्येन कर्मणा नावलुप्यते तदनवलोभनम् । वर्णविकारो द्रष्टव्यः । पृषोदरादित्वात् । एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि । किं तर्हि । गर्भाधानादय आसमावर्तनपर्यन्ता आम्नाताः । अस्मच्छाखायां सा न विद्यते । अतस्तत्कर्म कर्तव्यमित्युपदिश्यते ॥ १ ॥

तस्या उत्सन्नत्वाद्यदि तां नाधीयीत तत एवं कुर्यादित्याह—

यदि नाधीयात्तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ तु माषौ यवं च दधि प्रसृतेन प्राशयेत् ॥ २ ॥

गर्भाधानमाचार्येणानुक्तमिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याहुः । इदं तु पुंसवनम् । गर्भसहितो मासो गर्भमासः । तिष्येणेति 'नक्षत्रे च लुपि' इत्यधिकरणे तृतीया । तिष्येणेति प्राशनकर्मणा संबध्यते । तस्य प्रधानत्वात् । नोपवासेन । गुणत्वात् । तेन पुनर्वसुनोपोषितायाः पत्न्यास्तिष्येणेदं कर्म करोति । तत्र प्राजापत्यस्य स्थालीपाकस्याऽऽज्यभागान्तं कृत्वा वक्ष्यमाणं कर्म कुर्यात् । समानं रूपं यस्य स सरूपः । सरूपो वत्सो यस्याः सा तथोक्ता । गोग्रहणं सरूपवत्साया अभावेऽसरूपवत्सा गौर्ग्राह्या । नासरूपवत्सां त्यजेदित्येवमर्थम् । वीप्सावचनं कथम् । प्रतिप्रसृतं द्वौ द्वौ माषौ स्यातामिति । यदि वीप्सा न क्रियेत तर्हि स्थालीस्थदधन्येव माषयोर्यवस्य च प्रक्षेपः स्यात् । तस्य सप्तमीनिर्दिष्टत्वात् । तस्मादारूत्यर्थं वीप्साद्विर्वचनम् । पुनर्दधिग्रहणं दध्नः प्राशनार्थम् । अन्यथा पूर्वस्य सप्तमीनिर्दिष्टत्वाद्दध्नः प्राशनं न स्यात् । प्रसृते दधि प्रक्षिप्य तस्मिन्दधनि माषयवानां प्रक्षेपणार्थं पूर्वं दधिग्रहणम् । अण्डरूपेण माषौ दद्यात् । शिश्नरूपेण यवम् । तथा दृष्टत्वात् ॥ २ ॥

किं पिबसि किं पिबसीति पृष्टा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् ॥ ३ ॥

---

१ ख. °न ना° । २ घ. °स्तर्ण.।° । ३ ख °प्यादि° ।

किं पिबसीति प्रश्नः । पुंसवनमिति प्रतिवाक्यम् । तत्र प्रतिप्रश्ने त्रिर्ग्रहणमाचार्येण कृतम् । अतस्तस्यैव त्रिस्त्वप्राप्त्युभयोस्तुल्यत्वज्ञापनार्थमुभयत्र वीप्साद्विर्वचनम् । तेन प्रश्नोऽपि त्रिर्वाच्य इति सिद्धम् ॥ ३ ॥

एवं त्रीन्प्रसृतान् ॥ ४ ॥

अनेन विधिना त्रीन्प्रसृतान्प्राशयेत् । एकस्मिन्प्रसृते प्राप्ते त्रयः प्रसृतास्तुल्यधर्माणो विधीयन्ते ॥ ४ ॥

**अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति ॥ ५ ॥**

कर्मान्तरत्वात्कालान्तरप्राप्तावानन्तर्यार्थोऽथशब्दः । इदं त्वनवलोभनम् । कुतः । 'माऽहं पौत्रमघं नियाम्' ( गृ० १ । १३ । ७ ) इति मन्त्रलिङ्गात् । पुत्रसंबन्ध्यशोभनं माऽहं नियामित्यर्थः । अस्यै, अस्याः । मण्डलागारं कृत्वा, तस्य च्छायायामुपवेश्यास्या दक्षिणस्यां नासिकायां दूर्वां नस्तः करोति । दक्षिणग्रहणमिन्द्रियाणामनङ्गत्वज्ञापनार्थम् । अजीतेति गुणनाम । अजीर्णेत्यर्थः । सा चौषधिं दूर्वेत्युपदिशन्ति । नस्तःकरणं नासिकायां रससेचनम् ॥ ५ ॥

**प्रजावज्जीवपुत्राभ्यां हैके । आ ते गर्भो योनिमेतु पुमान्बाण इवेषुधिम् । आ वीरो जायतां पुत्रस्ते दशमास्यः । अग्निरेतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादिति ॥ ६ ॥**

प्रजावता दृष्टो मन्त्रः प्रजावान् । जीवपुत्रेण दृष्टो मन्त्रो जीवपुत्रः । यथा सूर्येति । आ ते गर्भ इति सूक्तं प्रजावान् । अग्निरेतु प्रथम इति सूक्तं जीवपुत्रः । आभ्यां सूक्ताभ्यामेके नस्तःकरणमिच्छन्ति । अन्ये तूष्णीम् । हशब्दोऽभिमतत्वज्ञापनार्थः ॥ ६ ॥

**प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत । यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माऽहं पौत्रमघं नियामिति ॥ ७ ॥ ख० १३ ॥**

प्राजापत्यस्य स्थालीपाकस्यैकदेशं हुत्वा हृदयदेशं हृदयसमीपमस्या आलभेत स्पृशेत् । 'यत्ते' इति मन्त्रेण । ततः स्विष्टकृदादि समापयेत् । इदं कर्म प्रतिगर्भमावर्तते । गर्भसंस्कारत्वात् । प्रथमगर्भे तृतीयमासि यदि गर्भो न विज्ञातस्तदा चतुर्थे कुर्यात् । विज्ञाते गर्भे निश्चये पुंसवनम् । 'तत्तृतीये मास्यन्यत्र गृष्टे.' इति च स्मरणात् ।

---

गृष्टिः प्रथमगर्भः । पञ्चमे मास्यङ्गनिर्वृत्तिर्भवति । स्वयमेव चास्य कर्ता । माऽहं पौत्रमिति लिङ्गात् । तदभावे देवरः ॥ ७ ॥ १३ ॥

चतुर्थे गर्भमासे सीमन्तोन्नयनम् ॥ १ ॥

सीमन्तो यस्मिन्कर्मण्युन्नीयते तत्सीमन्तोन्नयनम् । चतुर्थे मासि कार्यम् । इदं कर्म न प्रतिगर्भमावर्तते । स्त्रीसंस्कारत्वात् । नन्वयं गर्भसंस्कारः । 'एवं तं गर्भमाधेहि' इति मन्त्रलिङ्गात् । सत्यम् । तथाऽपि नाऽऽवर्तते । आधारसंस्कारस्य प्राधान्यात् । कुतः प्राधान्यमिति चेत् । सीमन्तोन्नयनमिति समाख्याबलात् । आधारस्य च संस्कृतत्वात् । सकृत्संस्कृता यं यं गर्भं प्रसूते, स सर्वः संस्कृतो भवेत् । तेनाऽऽवृत्तिर्न भवतीति सिद्धम् ॥ १ ॥

आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥ २ ॥

शुक्लपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्तदेदं कर्म कार्यम् । पुंसा नक्षत्रेण । पुंनामधेयेन नक्षत्रेणेत्यर्थः । तिष्यो हस्तः श्रवणः, इत्यादिना । चन्द्रमा युक्तः स्यादिति वचनं प्रकर्षेण युक्ते चन्द्रमसि यथा स्यात् । एतदुक्तं भवति । 'षष्टिघटिकासु मध्ये मध्यमत्रिंशद्घटिकासु कुर्यादिति' ॥ २ ॥

अथाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां धाता ददातु दाशुष इति द्वाभ्यां राकामहमिति द्वाभ्यां नेजमेष प्रजापते न त्वदेतान्यन्य इति च ॥ ३ ॥

जुहुयादिति शेषः । अथशब्दोऽन्यस्मिन्नपि काले भवतीदं कर्मेति ज्ञापनार्थः । कस्मिन् । षष्ठाष्टमयोर्मासयोः । शास्त्रान्तरे चायं कालो विहितः । अग्निमुपसमाधायेत्यादि गृहप्रवेशनीये व्याख्यातम् । आज्यभागान्तं कृत्वा 'धाता ददातु दाशुषे' इत्यादिभिरष्टाभाज्याहुतीर्जुहुयात् ॥ ३ ॥

अथास्यै युग्मेन शलाटुग्लप्सेन त्रेण्या च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवः स्वरोमिति त्रिः ॥ ४ ॥

अस्यै अस्याः । युग्मेन समेन । केन । शलाटुग्लप्सेन तरुणफलसंघातेन । शलाटुरित्यपक्वानां फलानां समाख्या । ग्लप्स इति स्तबक उच्यते । औदुम्बरस्तबकेन । शास्त्रान्तरे दृष्टत्वात् । तदभावेऽन्येन । त्रीण्येतानि यस्याः सेयं त्र्येणी शलली । एतः शुक्ल इत्यर्थः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप् तकारस्य नत्वं च । ततो 'रषाभ्यां नो णः' इति णत्वम् । कुशपिञ्जूलैः कुशतरुणैः । एतैरेकीकृतैर्ललाटकेशयोः संधिमारभ्योर्ध्वं सीमन्तं व्यूहति मन्त्रेण । आ मूर्धप्रदेशात्केशान्द्-

पकरोतीत्यर्थः । एवं त्रिर्व्यूहति । मन्त्रावृत्तिरुक्ता ॥ ४ ॥

चतुर्थी ॥ ५ ॥

चतुर्थी व्यूहति मन्त्रेण ॥ ५ ॥

वीणागाथिनौ संशास्ति सोमं राजनं संगायेतामिति ॥ ६ ॥

वीणा च गाथा च वीणागाथे । ते ययोः स्तस्तौ तथोक्तौ । तौ संशास्ति संप्रेष्यति । 'सोमं राजानं संगायेताम्' इति ॥ ६ ॥

तौ चैतां गाथां गायत इत्याह—

सोमो नो राजाऽवतु मानुषीः प्रजा निविष्टचक्राऽसाविति यां नदीमुपवसिता भवन्ति ॥ ७ ॥

असावित्यस्य स्थाने यस्या नद्याः समीपे वसन्ति तस्या नामाऽऽमन्त्रणविभक्त्या ब्रूयाताम् । निविष्टचक्रा गङ्गे इति ॥ ७ ॥

ब्राह्मण्यश्च वृद्धा जीवपत्न्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः ॥ ८ ॥

एवंगुणयुक्ता ब्राह्मण्यो यद्यद्ब्रूयुस्तत्तत्कार्यम् । शेषं दत्त्वा स्विष्टकृदादि सर्वं समापयेत् ॥ ८ ॥

ऋषभो दक्षिणा ॥ ९ ॥ ख० १४ ॥

ऋषभो गोरासेचनसमर्थः । तं दक्षिणां दद्यात् । अत्र तु स्वयमेव कर्ता । कुतः । 'अस्यै मे पुत्रकामायै' इति लिङ्गात् । कस्मै तर्हि दक्षिणा । ब्रह्मणे । यद्यस्ति सः । तदभावे संनिहितेभ्यो ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् ॥ ९ ॥१४॥

कुमारं जातं पुराऽन्यैरालम्भा(म्भा)त्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् । प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान्गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति ॥ १ ॥

इदं जातकर्म । कुमारग्रहणं कुमारीनिवृत्त्यर्थम् । ननु कुमार्या अपि भवत्येव जातकर्म । कुतः । वक्ष्यति 'आवृतैव कुमार्यै' (१।१९।१२) इति । उच्यते । प्रवासादागतस्य विहितं कर्माऽऽवृता भवति । न जातकर्म । अनन्तरत्वात् । एवमेके । अन्ये पुनरावृतैव कुमार्या इत्येतदुभयार्थमिति वदन्ति । तेन कुमार्या अपि जातकर्म भवत्येव । मनुनाऽप्युक्तम् 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः' (म० २।६६) इति । तर्हि कुमारग्रहणं कथम् । अविकारार्थम् । 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' (१।१९।१) इत्युपनयनं कुमारस्यैव यथा स्यान्न कुमार्या इति । ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव न भविष्यति । न । जातिनिर्देशे लिङ्गमविव-

क्षितम् । यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि न हन्यते । एवमत्रापि स्त्रियाः प्रसज्येत । तन्निवृत्त्यर्थं कुमारग्रहणमिति । जातग्रहणमप्यधिकारार्थम् । 'गोदानं षोडशे वर्षे' ( १ । १८ । १ ) इति जन्मतःप्रभृति षोडशो यथा स्यात् । उपनयनप्रभृति मा भूदिति । पुरा पूर्वमित्यर्थः । अन्यग्रहणमनधिकृतान्यमनारम्भकर्म कर्तव्यमित्येवमर्थम् । सर्पिर्मधुनी हिरण्येन निकाषयति । ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत्, मातुरुपस्थ आसीनं 'प्र ते ददामि' इति मन्त्रेण ॥ १ ॥

कर्णयोरुपनिधाय मेधाजननं जपति । मेधां ते देवः सविता मेधां देवी सरस्वती । मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजा-विति ॥ २ ॥

अस्य कर्णयोर्हिरण्यं निधाय मेधाजननं जपति 'मेधां ते' इति । उपग्रहणं तस्य मुखसमीप आत्मनो मुखं निधाय जपार्थम् । मेधाजननमित्यस्य मन्त्रस्याऽऽख्या । सकृन्मन्त्रः पर्यायेणोपनिधानमित्येके । अन्ये मन्त्रावृत्तिमिच्छन्ति॥२॥

अंसावभिमृशति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामाऽसि स जीव शरदः शतमिति । इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषिन्निति च ॥ ३ ॥

स्तनबाह्वोर्मध्यप्रदेशोंऽसः । अत्र बहुधा विप्रतिपन्नाः । तत्रैके सकृन्मन्त्रं पर्यायेणांसाभिमर्शनमिच्छन्ति । द्वार्याभिमर्शनवत् । ननु युक्तस्तत्र सकृन्मन्त्रः । द्विवचनयुक्तत्वान्मन्त्रस्य । इह त्वेकवचनयुक्तः । अत आवृत्त्या भवितव्यम् । नैतदेवम् । नात्रांसावुच्येते । किं तर्हि । कुमारः । स चैकः । तस्मान्नाऽऽवृत्तिरिति । अन्ये मन्त्रविभागमिच्छन्ति । 'अश्मा भव' इत्यनेन दक्षिणमंसमभिमृशेत् । 'इन्द्र श्रेष्ठानि' 'अस्मे प्रयन्धि' इत्याभ्यां सव्यमिति । कथं पुनर्मन्त्रविभागो ज्ञातः । मध्य इतिकरणात् । नहि कश्चिन्मन्त्रमध्य इतिकरणं पठन्ति । अपरे त्वाहुः । सकृदेव त्रयो मन्त्रा वक्तव्याः । न च मन्त्रविभागः । न च पृथगभिमर्शः । द्वार्याभिमर्शने त्वशक्यत्वात्पृथगभिमर्शः । इह तु शक्यते युगपदसौ स्प्रष्टुम् । यत्पुनरुक्तमितिकरणादिति । तत्र ब्रूमः । अन्यत्रापि मन्त्रमध्य इतिकारः पठ्यते । यथा—'आसीद सदनं स्वमासीद सदनं स्वामिति मा हिंसीर्देवप्रेरितः' ( श्रौ. ३ । १४ ) इति । अयमेव नः पक्षोऽभिप्रेतः । यस्य त्रयाणामन्यतमः पक्षोऽभिप्रेतस्तस्यापि कुर्वतो न दोषः । सर्वेषां गमकत्वादिति भाष्यकारः । अत्रैके मन्त्रविभागः श्रेयानित्याहुः । मध्य इतिकारात् । नन्वन्यत्रापि विद्यत इत्युक्तम् । तत्रापि विभाग एव । 'किमुत्पतसीति' ( श्रौ. ३ । १४ ) बर्हिषि निधाय,

मा हिंसीरित्यभिमन्त्रयेत् । कुत एतत् । आनन्तर्ययोगात् । नन्विडायां दृश्यते 'हविर्जुषन्तामिति तस्मिन्नुपहूत इति' (श्रौ०१।७) इति । अनर्थज्ञो भवान् । इतिकारो मन्त्रस्य मध्ये वृथा न पठ्यत इति वयं ब्रूमः । इडायां तु मन्त्रैकदेश इतिकारः । युष्मत्पक्षे त्वभिमन्त्रण इतिकारो वृथैवेति । तदसत् । भगवता भाष्यकारेण यः पक्षः परिगृहीतः स एव सम्यक् । अन्यत्रापि मन्त्रमध्य इतिकारदर्शनात् । 'नमो यत्र निषीदसीति अमुं मा हिंसीरमुं मा हिंसीः' इति चेति । तेन श्रीन्मन्त्रान्सकृदुक्त्वा युगपदेवोभावंसौ स्पृशेदिति सिद्धम् ॥ ३ ॥

नाम चास्मै दधुः ॥ ४ ॥

कुर्युरित्यर्थः । नामकरणस्याऽऽचार्येण कालान्तरानुक्तेर्जातकर्मानन्तरं कार्यमित्येके। अन्ये शास्त्रान्तरोक्तः कालो ग्राह्य इत्याहुः । उक्तं च मनुना—'नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते' ( अ०२। ३०)॥ इति ॥ ४ ॥

कीदृग्लक्षणं तन्नामेत्याह—

घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम् ॥ ५ ॥

प्रथमद्वितीया वर्गाणामूष्माणश्च हकारवर्जमघोषवन्तः । शिष्टा घोषवन्तः। ते आदौ यस्य तत्तथोक्तम् । अन्तर्मध्येऽन्तस्था यस्य तत्तथोक्तम् । यकारादयश्चतस्रोऽन्तस्थाः । अभिनिष्ठानो विसर्जनीयः । सोऽन्ते यस्य तत्तथोक्तम् । अक्षरं स्वरः । अकारादयो द्वादश स्वराः। शिष्टं व्यञ्जनम् । द्वे अक्षरे यस्य तद्द्व्यक्षरम् । व्यञ्जनमपरिमितम् ॥ ५ ॥

चतुरक्षरं वा ॥ ६ ॥

चतुरक्षरं वोक्तलक्षणं नाम कुर्युः । भद्रः, देवः, भवः, भवनाथः, नागदेवः, रुद्रदत्तः, देवदत्तः, इत्येवंलक्षणानि नामानि भवन्ति ॥ ६ ॥

द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत्काम्यमपीत्याह—

द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः ॥ ७ ॥

प्रतिष्ठाब्रह्मवर्चसे च कुमारस्य । तत्संस्कारत्वात् । न कर्तुः ॥ ७ ॥

युग्मानि त्वेव पुंसाम् ॥ ८ ॥

अथवा । युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति । एवकारोऽवधारणार्थः । कथम् । युग्ममेवाऽऽद्रियेत न पूर्वाणि लक्षणानीति । तेन शिवदत्तः, नागदत्तः, देवस्वामी, वसुशर्मा, रुद्रः, जनार्दनः, वेदघोषः, पुरंदरः, विष्णुशर्मा, इत्यादि सिद्धम् ॥ ८ ॥

---

१ ग. 'षे द्रु पुरोडाशाभि' ।

अयुजानि स्त्रीणाम् ॥ ९ ॥

अयुजान्ययुग्माक्षराणि स्त्रीणां नामानि भवन्ति । सुभद्रा, सावित्री, सत्यदा, वसुदा, इत्यादि ॥ ९ ॥

सांव्यवहारिकं नाम कृत्वाऽभिवादनीयं च नाम कुर्यादित्याह—

अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात् ॥ १० ॥

येन नाम्नोपनीतोऽभिवादयते । तच्च समीक्षेत । कुर्यादित्यर्थः । तच्च मातापितरावेव विद्यातामोपनयनात् । उपनीतस्य त्वाचक्षते—अनेन नाम्नाऽभिवादयस्वेति ॥ १० ॥

प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति मूर्धनि त्रिरवघ्राय ॥ ११ ॥

प्रवासादागत्य 'गृहानीक्षेताप्यनाहिताग्निः' ( श्रौ०२।५ ) इत्यादिसूत्रोक्तमार्गेण विधिं कृत्वा पुत्रस्य शिरः परिगृह्य सर्वतो गृहीत्वा मूर्धनि त्रिरवघ्राय ततो जपति—अङ्गादङ्गादिति ॥ ११ ॥

आवृतैव कुमार्यै ॥ १२ ॥ ख० १५ ॥

कुमार्यास्त्वमन्त्रकं[1] कुर्यादिति । अनन्तरस्य चायं शेष इत्येके । अनन्तरस्य जातकर्मणश्चेत्यपरे ॥ १२ ॥ १५ ॥

षष्ठे मास्यन्नप्राशनम् ॥ १ ॥

जन्मप्रभृति षष्ठे मासे न गर्भप्रभृति । जाताधिकारात् । तत्रान्नप्राशनं नाम कर्म कार्यम् ॥ १ ॥

आजमन्नाद्यकामः ॥ २ ॥

अजस्येदमाजम् । तैत्तिरसाहचर्यान्मांसस्यात्र ग्रहणम् । न क्षीरदधिघृतानाम् ॥ २ ॥

तैत्तिरं ब्रह्मवर्चसकामः ॥ ३ ॥

तित्तिरेरिदं तैत्तिरम् । आजतैत्तिरयोर्व्यञ्जनत्वेनोपदेशो नान्नत्वेन । तथा लोके प्रसिद्धत्वात् । तेनान्नमपि सिद्धम् ॥ ३ ॥

घृतौदनं तेजस्कामः ॥ ४ ॥

घृतसंस्कृत ओदनो घृतौदनः । कुतः । ओदनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्याद् 'घृतं तेजस्कामः' इत्येवावक्ष्यत् । ततश्च पूर्ववद्व्यञ्जनत्वेनान्नमपि

---

[1] क. ग. घ °र्कं करोति ।

सिद्धत्येव । घृतौदनं यत्रेच्छति शृते नेदीयसि घृतसेके कृते घृतसंस्कृतो भवति । न तु घृते श्रपणम् । विक्लेदानुपपत्तेः ॥ ४ ॥

दधिमधुघृतमिश्रमन्नं प्राशयेत् । अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद इति ॥ ५ ॥

अकामसंयोगेन दध्यादिमिश्रमन्नं प्राशयेत् 'अन्नपतेऽन्नस्य नः' इति मन्त्रेण । अयं मन्त्रः सर्वप्राशनेष्वपि भवति । कुतः । प्राशनसहितत्वान्मन्त्रस्य । प्राशयेदित्यस्य च सर्वशेषत्वात् । आजं प्राशयेदित्यादि ॥ ५ ॥

आवृतैव कुमार्यै ॥ ६ ॥ ख० १६ ॥

कुमार्यास्त्वमन्त्रकमन्नप्राशनं कार्यमित्यर्थः ॥ ६ ॥ १६ ॥

तृतीये वर्षे चौलं यथाकुलधर्मं वा ॥ १ ॥

कुलधर्मोपदिष्टे वा काले चौलं कार्यम् । जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः । केषांचिदुपनयनेन सह स्मर्यत इति ॥ १ ॥

उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक्पूर्णशरावाणि निदधाति ॥ २ ॥

प्रणीताप्रणयनोत्तरकालमुत्तरतोऽग्नेर्व्रीहियवमाषतिलैः पूर्णानि शरावाणि निदधाति स्थापयति । पृथग्ग्रहणं द्रव्यभेदार्थम् । पृथक्पृथक् पूरयित्वा निदध्यादिति । अन्यथा समासोपदेशान्मिश्रितानां पूरणं स्यात् । यथा 'सर्पिर्मधुनी हिरण्यनिकाषम्' ( १ । १९ । १ ) इत्यामिश्रितानां प्राशनम् । अथवा । सत्यपि समासोपदेशे यथाकामं व्रीहियवतिलैरित्यनेकं द्रव्यं भवति । एकेन कृतार्थत्वात् । एवमिहाप्येकं द्रव्यं प्रसज्येत । तन्निवृत्त्यर्थं पृथग्ग्रहणम् ॥ २ ॥

कथं पृथग्भूतानां सर्वेषां द्रव्याणां पूर्णशरावाणि निधीयेरन्निति—

पश्चात्कारयिष्यमाणो मातुरुपस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति ॥ ३ ॥

अग्नेः पश्चात्कारयिष्यमाणः कुमारः । तत्प्रयुक्तं हि चौलम् । एवं च कृत्वा संस्कारकर्मसु व्यवायपरिहारेषु कार्येषु कुमारोऽन्तरतम इति दर्शितं भवति । मातुरुपस्थ उत्सङ्ग आस्ते । आनडुहं गोमयं नवे शराव उपनिहितं भवति । शमीपर्णानि चान्यस्मिन्नवे शराव उपनिहितानि भवन्ति ॥ ३ ॥

मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ॥४॥

---

१ ख. घ. °शनसंनिहि° । क. ग. °शने विहि° ।

मातुर्दक्षिणतः पितैकविंशतिकुशपिञ्जूलान्यादायाऽऽस्ते । मातुर्ग्रहणं मातुः सकाशाद्दक्षिणतो यथा स्यादग्नेर्दक्षिणतो मा भूदिति ॥ ४ ॥

ब्रह्मा वैतानि धारयेत् ॥ ५ ॥

एतानि कुशपिञ्जूलानि ब्रह्मा वा धारयेत् । यथेष्टं ॥ ५ ॥

पश्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीयोष्णेन वा य उदकेनेहीति ॥ ६ ॥

आधारान्तं कृत्वा पूर्वोक्ता आहुतीर्हुत्वा कुमारस्य पश्चिमदेशे स्थित्वा शीतमुदकमुष्णं चोदकमुभाभ्यां पाणिभ्यां गृहीत्वाऽन्यस्मिन्पात्रे युगपन्निनयति, उष्णेनेति मन्त्रेण । '' समित्यैकीभावे '' । ननु दक्षिणाङ्गकारितया भाव्यम् । कथमुभाभ्यां पाणिभ्यामिति । उच्यते । अनियमे प्राप्ते नियमार्था सा परिभाषा न तु दक्षिणाङ्गविधायिका ॥ ६ ॥

तासां गृहीत्वा नवनीतं दधिद्रप्सान्वा प्रदक्षिणं शिरस्त्रिरुन्दति । अदितिः केशान्वपत्वाप उन्दन्तु वर्चस इति ॥ ७ ॥

तासामपामेकदेशं गृहीत्वा, नवनीतं च गृहीत्वा, तदभावे दधिद्रप्सान्वा गृहीत्वा, प्रदक्षिणं शिरस्त्रिरुन्दति क्लेदयति मन्त्रेण । मन्त्रावृत्तिरुक्ता । तासांग्रहणं समानीतानां ग्रहणार्थम् । इतरथा समानयनस्य शीतोष्णाभिरद्भिरन्यर्थमित्यत्र कृतार्थत्वात्तासां ग्रहणमेव न स्यात् । गृहीत्वेत्यस्य च नवनीतेन संबन्धः स्यात् । तस्मिंस्तु सत्यापो नित्याः । नवनीतदधिद्रप्सयोश्च विकल्पः सिध्यति ॥ ७ ॥

दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्याग्राणि निदधाति—ओषधे त्रायस्वैनम् ॥ ८ ॥

दक्षिणग्रहणं विस्पष्टार्थम् । तस्मिन्केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलानि कुमारस्याभ्यात्याग्राणि स्थापयति मन्त्रेण । वीप्सा बह्वर्था ॥ ८ ॥

स्वधिते मैनं हिंसीरिति निष्पीड्य लोहेन क्षुरेण ॥ ९ ॥

अनेन मन्त्रेण लोहेन क्षुरेण तानि कुशपिञ्जूलानि निष्पीडयति । तेषु क्षुरं स्थापयतीत्यर्थः । लोके क्षुरो लोह एव प्रसिद्धः । अतोऽत्र तद्व्यावर्तनाल्लोहशब्दस्ताम्रे वर्तते । शास्त्रान्तरे विहितत्वाच्च । लोके लोहशब्दश्च रजतादिष्वपि वर्तते । अत्र तु ताम्रे । तथा दृष्टत्वात् ॥ ९ ॥

प्रच्छिनत्ति येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्याऽऽयुष्माञ्जरदष्टिर्यथासदिति ॥ १० ॥

---

१ ख. 'मिति ।

ततोऽनेन मन्त्रेण तेनैव क्षुरेण प्रच्छिनत्ति । प्रोऽनर्थकः[1] । अन्ये छिनत्ति इत्याहुः ॥ १० ॥

प्रच्छिद्य प्रच्छिद्य प्रागग्रान्छमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति ॥ ११ ॥

वीप्सावचनं योऽत्र धर्म उपदिश्यते स सर्वेषु च्छेदेषु यथा स्यादिति । प्रागग्रान्कृत्वा शमीपर्णैः सहैकीकृत्य मात्रे प्रयच्छति ददाति । तानसावानडुहे गोमये निदधाति स्थापयति । नात्र प्रागग्रतानियमः ॥ ११ ॥

येन धाता बृहस्पतेरग्नेरिन्द्रस्य चाऽऽयुषेऽवपत् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति द्वितीयम् । येन भूयश्च राज्यां ज्योक् च पश्याति सूर्यम् । तेन त आयुषे वपामि सुश्लोक्याय स्वस्तय इति तृतीयम् ॥ १२ ॥

संख्यावचनं मन्त्रान्तरप्रदर्शनार्थम् । मन्त्रमध्येऽपीतिकारो विद्यत इत्युक्तम् । कुशपिञ्जूलनिधानस्याभ्यासविधानार्थं भवितुं नार्हति । अभ्यासस्य त्रीणि त्रीणीति वीप्सयैव सिद्धत्वात् ॥ १२ ॥

सर्वैर्मन्त्रैश्चतुर्थम् ॥ १३ ॥

सर्वैस्त्रिभिर्मन्त्रैश्चतुर्थवारं छिनत्ति ॥ १३ ॥

एवमुत्तरतस्त्रिः ॥ १४ ॥

यथा दक्षिणे केशपक्ष एवमुत्तरेऽपि केशपक्षे कुर्यात्त्रिः । परिसंख्येयम् । उत्तरे केशपक्षे त्रिरेव न चतुर्थमिति ॥ १४ ॥

क्षुरतेजो निमृजेत् । यत्क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् । शुन्धि शिरो माऽस्याऽऽयुः प्रमोषीरिति ॥ १५ ॥

ततः क्षुरधारां निमृजेच्छोधयेन्मन्त्रेण । निमार्जनमपमार्जनम् । 'न्यवेति विनिग्रहार्थीयौ' इति वचनात् ॥ १५ ॥

नापितं शिष्यादुष्णशीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन्कुशलीकुर्विति ॥ १६ ॥

नापितं शिल्पिनं शिष्यात्प्रेष्यप्रैषेण । कुशलीकरणवचनं विपरीतलक्षणया वापने वर्तते । येन विहितोऽयं मुण्डयति हि श्रूयते ॥ १६ ॥

यथाकुलधर्मं केशवेशान्कारयेत् ॥ १७ ॥

'एकशिखस्त्रिशिखः पञ्चशिखो वा' इति बौधायनः । पूर्वशिखः पराशिख इति

---

[1] ख. °र्कः । अनभिप्राय इत्यर्थः । अ° । २ क. ग. घ. °क्षाः पृ° ।

कुलधर्माः । तेषु यो यस्य कुलधर्मस्तदनुरोधेन तस्य केशसंनिवेशान्कारयेत् । वेषा-
नित्यपि पाठे स एवार्थः । ततः स्विष्टकृदादि समापयेत् ।. १७ ॥

आवृतैव कुमार्यै ॥ १८ ॥ ख० १७ ॥

आवृता, अमन्त्रकमित्यर्थः । कुतः । येनान्यत्राऽऽवृतेत्युक्त्वा तूष्णीमित्याह ।
अपरथा ह्यावृता नित्यवाऽऽवृता सदो ह्यार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्तीति ।
नैतदेवम् । एवकारोऽत्रावधारणार्थः । 'आवृतन्त्रमेव भवति न मन्त्रः' इति ।
तेनाऽऽवृतेत्यस्य तूष्णीमित्यर्थ इति सिद्धम् । एवं चेद्दोषः । अमन्त्रकं होमः प्राप्नोति ।
इष्टमेव न एतदिति केचिदाहुः । अन्ये होमो न भवतीत्याहुः । अमन्त्रकस्य
होमस्य क्वचिद्प्यदृष्टत्वात् । ननु 'तूष्णीं द्वितीये उभयत्र' ( १ । ९ । ८ ) इत्यत्र
दृष्ट इति शङ्का न कार्या । तत्रापि प्रजापतये स्वाहेति मन्त्रोऽस्त्येव ॥ १८ ॥ १७॥

एतेन गोदानम् ॥ १ ॥

व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः ॥ १ ॥

तत्र विशेषमाह—

षोडशे वर्षे ॥ २ ॥

तृतीयस्यापवादः । अत्र मातुरुपस्थोपवेशनं न भवति । [1]अयुक्तत्वात् ॥ २ ॥

केशशब्दे तु श्मश्रुशब्दान्कारयेत् ॥ ३ ॥

केशशब्दे त्विति जातावेकवचनम् । श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः ।
तेन त्रयः श्मश्रुशब्दाः । तेषु 'अदितिः केशान्वपतु' 'यथा वपसि केशान्'
'दक्षिणे केशपक्षे' इति त्रिषु ते कार्याः । मन्त्रगतस्य तृतीयस्य केशशब्दस्याभा-
वाद्विधिगतस्य ग्रहणम् । तेन दक्षिणे श्मश्रुपक्ष इति साधितं भवति ॥ ३ ॥

श्मश्रूणीहोन्दति ॥ ४ ॥

शिरउन्दनस्यापवादः ॥ ४ ॥

शुन्धि शिरो मुखं माऽस्याऽऽयुः प्रमोषीरिति ॥ ५ ॥

क्षुरनिमार्जनेऽयं विशेषः ॥ ५ ॥

केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्वीति संप्रेष्यति ॥ ६ ॥

शीतोष्णाभिरद्भिरर्थं कुर्वाणोऽक्षण्वन्कुशली केशश्मश्रुलोमनखान्युदक्संस्थानि
कुर्विति नापितशासनम् ॥ ६ ॥

आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत ।
वरं ददामीति ॥ ७ ॥

---

[1] क. ग. घ. अवालत्वात् ।

तत आप्लुत्य । स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयमाणः । स्थित्वेत्युपवेशनप्रतिषेधः । एवमहःशेषं स्थित्वाऽस्तमित आचार्यसमीपे वरं ददामीति वाचं विसृजेत् ॥ ७ ॥

वरद्रव्यमाह—

गोमिथुनं दक्षिणा ॥ ८ ॥

ननु भिक्षुरयं कथमस्य गोमिथुनसंभवः । उच्यते—यथाऽस्य प्रावरणादेः संभवस्तथैतस्यापि ॥ ८ ॥

संवत्सरमादिशेत् ॥ ९ ॥ ख० १८ ॥

एवं गोदानं कृत्वा संवत्सरं व्रतमादिशेद्वक्ष्यमाणेन विधिनाऽऽचरेत् । रात्रौ व्रतादेशनानुपपत्तेरपरेद्युः कार्यम् ॥ ९ ॥

अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥

जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत् । कुमारमिति वर्तते । तच्च कुमारीनिवृत्त्यर्थमित्युक्तम् ॥ १ ॥

गर्भाष्टमे वा ॥ २ ॥

गर्भप्रभृत्यष्टमे वोपनयेत् ॥ २ ॥

एकादशे क्षत्रियम् ॥ ३ ॥

जन्मप्रभृति गर्भप्रभृति वैकादशे वर्षे क्षत्रियमुपनयेत् ॥ ३ ॥

द्वादशे वैश्यम् ॥ ४ ॥

जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत् ॥ ४ ॥

आ षोडशाद्ब्राह्मणस्यानतीतः कालः ॥ ५ ॥

षोडशवर्षपर्यन्तं ब्राह्मणस्योपनयनकालोऽतीतो न भवति ॥ ५ ॥

आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ६ ॥

क्षत्रियवैश्ययोर्द्वाविंशचतुर्विंशयोरुपनयनकालोऽतीतो न भवति । षोडशद्वाविंशचतुर्विंशपर्यन्तेष्वनुपनीताश्चेत्पतितसावित्रीका भवन्ति । संज्ञायाः प्रयोजनं 'पतितसावित्रीक उद्दालकव्रतं चरेत्' इति । अत ऊर्ध्वमितिवचनं पूर्वसूत्रेष्वाकारा अभिविधाविति ज्ञापनार्थम् ॥ ६ ॥

नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः ॥ ७ ॥

---

क. °त् । जाताधिकारात्कुमारमिति वर्तते कु° । ग० °त् । जाताधिकारात्कुमारमिति पठ्यते । कु° ।

कर्चीर्णप्रायश्चित्तानिति शेषः । उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिद्दोषादज्ञानाद्वोपनीताः स्युस्तथाऽपि नैवोत्तराणि कर्माणि पतितसावित्री-काणां कुर्यादिति सर्वेषां पाठः क्रियते ॥ ७ ॥

अलंकृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥ ८ ॥

कुशलीकृतशिरसं वापितशिरसमित्यर्थः । अहतं नवम् । अपुराणमनुपभुक्तमि-त्यर्थः । तेन वाससा संवीतं प्रावृतमित्यर्थः । ऐणेयेन वाऽजिनेन चर्मणा प्रावृतं ब्राह्मणमानीय होमं कुर्यात् । एवमुत्तरत्रापि ज्ञेयम् । एतानि चर्माणि वाससा सह विकल्पन्ते । उभयोः प्रावरणार्थत्वाद्वाशब्दाच्च ॥ ८ ॥

यदि वासांसि वसीरन्रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः ॥ ९ ॥

वासांसि वसीरन्नित्येवं सूत्रच्छेद इष्टः । वासांसि वसीरन् । परिदध्युरित्यर्थः । यदीत्युत्तरेण संबध्यते । तेन नियमेन परिधानं सिद्धम् । पक्षे शुक्लान्यपि सिध्यन्ति । यदि रक्तानि वसीरन् । काषायं ब्राह्मणः । माञ्जिष्ठं क्षत्रियः । हारिद्रं वैश्यः । एवं रक्तानां वसनमनित्यम् । तथा च गौतमः—' वासांसि क्षौमचीरकुतपाः सर्वेषां कार्पासं वाऽविकृतं काषायमप्येके वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः ' इति ॥ ९ ॥

तेषां मेखलाः ॥ १० ॥

उच्यन्त इति शेषः ॥ १० ॥

मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य आवी वैश्यस्य ॥ ११ ॥

मौञ्जी नान्यस्य । ब्राह्मणस्य तु मौञ्जी वाऽन्या वा न नियमः । एवमुत्तरयो-र्ज्ञेयम् ॥ ११ ॥

तेषां दण्डाः ॥ १२ ॥

उच्यन्त इति शेषः ॥ १२ ॥

पालाशो ब्राह्मणस्य औदुम्बरः क्षत्रियस्य बैल्वो वैश्यस्य केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्य ॥ १३ ॥ ख० १९ ॥

दण्डनियमो मेखलाभिस्तुल्यः ॥ १३ ॥ १९ ॥

सर्वे वा सर्वेषाम् ॥ १ ॥

---

२ ख. च गोत' ।

सर्वे दण्डाः सर्वेषां भवन्ति पालाशादयः ॥ १ ॥

समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ॥ २ ॥

आज्यस्य बर्हिष्यासादनान्तं कृत्वा, समन्वारब्धे ब्रह्मचारिणीध्माधानाघारान्तं कृत्वा, पूर्वोक्ता आज्याहुतीर्हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते । ब्रह्मचारी तु तीर्थेन प्रविश्याऽऽचार्यस्य दक्षिणतस्तूपविशेत् । तीर्थं नाम 'प्रणीतानां पश्चिमो देशः' । सर्वत्र तीर्थेनैव प्रविश्य कर्म कुर्यात् ॥ २ ॥

पुरस्तात्प्रत्यङ्मुख इतरः ॥ ३ ॥

आचार्यस्य पुरस्तात्प्रत्यङ्मुखो ब्रह्मचार्यवतिष्ठते ॥ ३ ॥

अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ॥ ४ ॥

अपामुभयोरञ्जली पूरयित्वा स्वस्य पूर्णेनाञ्जलिनाऽस्य पूर्णमञ्जलिमवक्षारयति 'तत्सवितुर्वृणीमहे' इति मन्त्रेण[1] । ब्रह्मचारिणोऽञ्जलावात्मनोऽञ्जलिमवसिञ्चतीत्यर्थः । ततो 'देवस्य त्वा' इति मन्त्रेण तस्य पाणिं साङ्गुष्ठं गृह्णीयात् । आचार्याञ्जलिमर्थादन्यः पूरयति । आसिच्येति वचनं कथम् । आचार्योऽवक्षारणं कुर्यान्न कुमार इत्येवमर्थम् । इतरथा पूर्णेनास्य पूर्णमवक्षारयतीत्युक्ते कस्याञ्जलिं कोऽवक्षारयतीति संदेहः स्यात् । आसिच्येति तूच्यमाने समानकर्तृकत्वनिर्देशाद्यः पाणिं गृह्णाति सोऽवसिञ्चतीति ज्ञायते । तेनाऽऽचार्योऽवक्षारयतीति सिद्धम् । असावित्यस्य स्थाने संबुद्ध्या ब्रह्मचारिनाम ब्रूयात् ॥ ४ ॥

सविता ते हस्तमग्रभीदसाविति द्वितीयम् । अग्निराचार्यस्तवासाविति तृतीयम् ॥ ५ ॥

संख्यावचनं प्रथमहस्तग्रहणदृष्टाञ्जलिपूरणादिधर्मप्राप्त्यर्थम् ॥ ५ ॥

आदित्यमीक्षयेत् । देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्याचार्यः ॥ ६ ॥

ततो ब्रह्मचारिणमादित्यमीक्षयेन्मन्त्रेणाऽऽचार्यः । आचार्यग्रहणं ज्ञापनार्थम् । अन्यत्रेक्षणे ब्रह्मचारिणो मन्त्रो नाऽऽचार्यस्येति । तेनाऽऽदित्यमीक्षयेत् 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' (श्रौ०८।१४) इत्यत्र ब्रह्मचारिणो मन्त्रः सिद्धः ॥ ६ ॥

---

1 ख. 'ति वचने तु' ।

कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामीति ॥ ७ ॥

जपेदिति शेषः । मन्त्रलिङ्गात् । प्रजापतये ब्रह्मचारी प्रदीयते । तेनाऽऽचार्यस्यायं मन्त्रः ॥ ७ ॥

युवा सुवासाः परिवीत आगादित्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत् ॥ ८ ॥

अनेनार्धर्चेनैनं ब्रह्मचारिणं प्रदक्षिणमावर्तयेत् । एनमिति वचनं कथम् । 'आवर्तयितुर्मन्त्रः स्यान्नाऽऽवर्त्यमानो ब्रूयात्कुमारः' इत्येवमर्थम् । अर्धर्चग्रहणमृङ्निवृत्त्यर्थम् । अन्यथा, 'ऋचं पादग्रहणे' (आश्व० १ । १ । १७) इत्यृक् स्यात् ॥ ८ ॥

तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ॥ ९ ॥

अधीत्युपरिभावे । ब्रह्मचारिणोंऽसयोरुपरि स्वस्य पाणी कृत्वा, तस्य हृदयदेशसमीपं स्पृशेदुत्तरेणार्धर्चेन ॥ ९ ॥

अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात्तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते ॥ १० ॥ ख० २० ॥

नन्वत्र परिसमूहनवचनमनर्थकम् । संस्कृतत्वादग्नेः । उच्यते । सायंप्रातःसमिदाधाने परिसमूहनपर्युक्षणे यथा स्यातामिति परिसमूहनवचनम् । अत्र तु परिसमूहनाद्यकृत्वैव तस्मिन्नेवाग्नौ ब्रह्मचारी तूष्णीं समिधमादध्यात् । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् । यस्मात् 'यत्प्राजापत्यं तत्तूष्णीं ब्रह्मचारी च प्राजापत्य.' इति श्रूयते तस्मात्तूष्णीं समिधमादध्यात् ॥ १० ॥ २० ॥

मन्त्रेण हैकेऽग्नये समिधमाहार्षं बृहते जातवेदसे । तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहेति ॥ १ ॥

एके मन्त्रेण समिदाधानमिच्छन्ति । हशब्दोऽभिमतत्वज्ञापनार्थः । तेन पूर्वस्य श्रुत्याकृतत्वेऽप्युभयोस्तुल्यत्वं सिद्धम् ॥ १ ॥

+ स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिस्तेजसा मा समनज्मीति ॥ २ ॥

ब्रह्मचारी समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि मन्त्रेण त्रिः । मन्त्रावृत्तिरुक्ता । समग्रहणं संनिधौ वा जपेद्धेत्यत्र वक्ष्यमाणो विनिर्मो भूत् । समिद्ग्रहणमुभयो-

+ ग. संज्ञकपुस्तके स इति पदं नास्ति ।

रपि पक्षयोरुत्तरो विधिर्यथा स्यादिति । आधायग्रहणं 'सायं प्रातः समिधमादध्यात्' इत्यत्रापि यथा स्यात् ॥ २ ॥

**तेजसा ह्येवाऽऽत्मानं समनक्तीति विज्ञायते ॥ ३ ॥**

श्रुत्याकर्षः कथम् । अभ्युपस्पर्शनमपि त्रिः स्यादिति ॥ ३ ॥

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् । इत्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भो३ अनुब्रू३ हीति ॥ ४ ॥**

षड्भिरुपस्थाय दक्षिणं जान्वाच्य विधिवदुपसंगृह्याऽऽचार्यं ब्रूयादधीहीति प्रैषेण ॥ ४ ॥

**तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वाम् ॥ ५ ॥**

तस्य ब्रह्मचारिणः परिहितेन वाससा । प्रावरणस्यानित्यत्वात् । स्वस्य पाणिभ्यां च तस्य पाणी गृहीत्वा सावित्रीमन्वाह ॥ ५ ॥

**यथाशक्ति वाचयीत ॥ ६ ॥**

स्वयं पादं पादमुक्त्वा तेन वाचयति । यदि ब्रह्मचारी पादं पादं वक्तुं न शक्नोति ततस्तेन यथाशक्ति वाचयीत । एवमर्धर्चशः । एवं सर्वाम् ॥ ६ ॥

**हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति । मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति ॥ ७ ॥ ख० २१ ॥**

ब्रह्मचारिणो हृदयदेशसमीपे स्वस्य पाणिमूर्ध्वाङ्गुलिमुपदधाति स्थापयति मन्त्रेण ॥ ७ ॥ २१ ॥

**मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् ॥ १ ॥**

ततो मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् ॥ १ ॥

कथमादिशेदित्याह—

**ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति ॥ २ ॥**

---

१ ख, इत्यमा°।

इदानीं ब्रह्मचार्यसि । अपोऽशान । मूत्रपुरीषादौ शास्त्रविहितमाचमनं कुर्विंत्यर्थः । कर्म कुरु । यच्छास्त्रविहितं कर्म संध्योपासनादि । दिवा मा स्वाप्सी-रिति दिवाशयनप्रतिषेधः । आचार्याधीनो नित्यं भव । वेदमधीष्व वेदाध्ययनं कुरु ॥ २ ॥

द्वादश वर्षाणि वेदब्रह्मचर्यम् ॥ ३ ॥

वेदस्य ब्रह्मचर्यं वेदब्रह्मचर्यम् । वेदग्रहणं कथम् । वेदमात्रस्यायं कालनियमः स्यादिति । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' । तेन महानाम्न्यादीनां व्रतानामूर्ध्वं द्वादशवर्षेभ्यस्त्रयः संवत्सराः स्युः । एवं च कृत्वोपनयनप्रभृति षोडशे वर्षे गोदानं सिद्धम् । वेदग्रहणादयमर्थो लब्ध एवमेके । अन्ये तु जन्मप्रभृति षोडशे वर्षे गोदानम् । महानाम्न्यादीनां च व्रतानां द्वादशवर्षेष्वन्तर्भावमिच्छन्ति । महानाम्न्यादीनामपि वेदैकदेशत्वादिति । पूर्वस्मिन्पक्षे यदा संवत्सरं व्रतचर्या तदा सप्तदशे गोदानं स्यात् । तस्मादयमेव पक्षः श्रेयान् । वेदग्रहणं कथम् । एकैकस्य वेदस्य द्वादश वर्षाणि ब्रह्मचर्यं स्यादिति । तेन द्वयोश्चतुर्विंशतिः । त्रयाणां षट्त्रिंशत् । चतुर्णामष्टाच-त्वारिंशत् ॥ ३ ॥

ग्रहणान्तं वा ॥ ४ ॥

वेदग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं वा द्वादशभ्यः । एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति । विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति । प्राग्द्वादशभ्यो वेदमधीत्य यः स्नाति स विद्यास्नातकः । यस्तु द्वादशवर्षाणि ब्रह्मचर्यं कृत्वाऽन-धीतवेदः स्नाति स व्रतस्नातकः । यस्तु पुनर्द्वादश वर्षाणि ब्रह्मचर्यं कृत्वाऽधीतवेदः स्नाति स विद्याव्रतस्नातकः । ननु 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' ( ३ । ९ । ४ ) इति वक्ष्यति । अतः कथं व्रतस्नानस्य संभवः । उच्यते । विद्यान्त इति न विद्यासमाप्तौ स्नानं चोद्यते । किं तर्हि विद्याया अन्ते न मध्ये । तेन व्रतस्नातकोऽपि मैध्ये वेदमुत्सृज्यान्त्यमारण्यकमधीत्य स्नायात् । रहस्ये चाऽऽरण्यके प्राधान्येन स्नाननिमित्तं चोद्यते' वेदमनधीत्यन्स्नातको भवति' इत्यादिना । ततः स्विष्टकृदादि कृत्यं समापयेत् ॥ ४ ॥

सायं प्रातर्भिक्षेत ॥ ५ ॥

अहनि रात्रौ चाऽऽचार्यार्थमशनार्थं चान्नं याचेत । तत्र भवत्पूर्वमित्यादिशास्त्रा-न्तरदृष्टो विधिर्द्रष्टव्यः ॥ ५ ॥

सायं प्रातः समिधमादध्यात् ॥ ६ ॥

---

१ ख मध्यमु' ।

अग्निं परिसमुह्येत्याद्युपस्थानान्ता धर्मा भवन्तीत्युक्तम् । पुनः सायंप्रातर्ग्रहणं पूर्वेणासंबन्धार्थम् । तेन भैक्षं वा पूर्वं भवति समिदाधानं वेति क्रमानियमः सिद्धः ॥ ६ ॥

अमत्याख्यायिनमग्रे भिक्षेतामत्याख्यायिनीं वा ॥ ७ ॥

अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः । अनुप्रवचनीये भवान्भिक्षां ददात्विति भैक्षमन्त्रात् ॥ ७ ॥

भवान्भिक्षां ददात्विति, अनुप्रवचनीयामिति वा ॥ ८ ॥

स्त्रीभिक्षा चेद्भवत्र मन्त्रे भवती ददात्विति ब्रूयात् ॥ ८ ॥

तदाचार्याय वेदयीत तिष्ठेदहःशेषम् ॥ ९ ॥

तद्भैक्षमाचार्याय निवेद्य तस्मिन्नहनि यावच्छिष्टं तावन्तं कालं तिष्ठेत् । नोपविशेत् ॥ ९ ॥

अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाऽऽचार्याय वेदयीत ॥ १० ॥

ब्रह्मण ओदनो ब्रह्मौदनः । ब्रह्मशब्दो ब्राह्मणवाचकः । तेन ब्राह्मणभोजनं विधास्यमानमत एव चरोर्भवति । अनुप्रवचननिमित्तमनुप्रवचनीयम् । पाकयज्ञविधानेन ब्रह्मचार्यनुप्रवचनीयं श्रपयित्वाऽऽचार्याय वेदयीत 'शृतः स्थालीपाकः' इति ॥ १० ॥

आचार्यः समन्वारब्धे जुहुयात् । सदसस्पतिमद्भुतमिति ॥ ११ ॥

ततः समन्वारब्धे ब्रह्मचारिणीध्माधानाद्याघारान्तं कृत्वाऽनया जुहुयात् ॥ ११ ॥

सावित्र्या द्वितीयम् ॥ १२ ॥

सावित्री 'तत्सवितुर्वरेण्यम्' इत्येषा प्रसिद्धा । द्वितीयग्रहणमुत्तरार्थम् ॥ १२ ॥

यद्यत्किंचात ऊर्ध्वमनूक्तं स्यात् ॥ १३ ॥

अत्र साविऽनूकेति कृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु यद्यदनूक्तं तेन तेन द्वितीयं जुहोति । एतदुक्तं भवति । 'महानाम्न्यादिव्रतेषु श्रवणान्तेऽनुप्रवचनीयहोमः कार्यः । तत्र सावित्र्याः स्थाने 'महानाम्नीभ्यः स्वाहा' 'महाव्रताय स्वाहा' 'उपनिषदे स्वाहा' इत्येवं द्वितीयं जुहोति । अन्यत्समानमिति' । द्वितीयग्रहणं महानाम्न्यादिनाऽभिधेयेन होमार्थम् । इतरथा, मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः स्यात् । स च प्रदानार्थ इति कृत्वाऽनेका आहुतयः स्युः । ततश्चोत्तरासां द्वितीयत्वं न स्यात् । तस्माद्द्वितीयग्रहणम् ॥ १३ ॥

---

१ ख. °द् । आसनादि न कुर्यात् । २ क. ख. °पु श्राव° ।

ऋषिभ्यस्तृतीयम् ॥ १४ ॥

तृतीयवचनमृषिभ्य इत्यस्य विधायकत्वं निवर्त्य मन्त्रत्वज्ञापनार्थम् । तेन ऋषिभ्यः स्वाहेति जुहोति ॥ १४ ॥

सौविष्टकृतं चतुर्थम् ॥ १५ ॥

संख्यावचनं नियमार्थम् । चतुर्थमेव न षष्ठमिति । तेनात्राऽऽज्यभागौ न भवतः ॥ १५ ॥

ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाचयीत ॥ १६ ॥

संस्थाजपान्तं कृत्वा ब्राह्मणान्भोजयित्वा वेदसमाप्तिं भवन्तो ब्रुवन्त्विति ब्रूयात् । ते च वेदसमाप्तिरस्त्विति ब्रूयुः ॥ १६ ॥

अत ऊर्ध्वमक्षारालवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा ॥ १७ ॥

अत ऊर्ध्वमिति कस्मात् । पूर्वेण संबन्धकरणार्थम् । प्रयोजनमुपरिष्टाद्वक्ष्यामः । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् ॥ १७ ॥

चरितव्रताय मेधाजननं करोति ॥ १८ ॥

चरितव्रतायेति वचनं मेधाजननेन व्रतस्य संबन्धार्थम् । तेन यत्रोपनयने मेधाजननमस्ति तत्रैव व्रतचर्या । यत्र व्रतचर्या तत्रैवानुप्रवचनीयः । उपनीतपूर्वस्य मेधाजननाभावे त्रितयमपि निवर्तते ॥ १८ ॥

अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशाभावे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति । सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति ॥ १९ ॥

इदं मेधाजननम् । तिस्रो निन्दिता दिशः । दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । अन्याः सर्वा अनिन्दिताः । तस्यां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशाभावे । प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं ब्रह्मचारिणं वाचयति 'सुश्रवः' इति मन्त्रम् । एकमूलमशाखमित्यर्थः । पुनः पलाशग्रहणमनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति ॥ १९ ॥

एतेन वापनादि परिदानान्तं व्रतादेशनं व्याख्यातम् ॥ २० ॥

व्रतादेशनं यदस्माभिर्व्याख्यातं 'संवत्सरावमं चारयित्वा व्रतमनुयुज्य' ( श्रौ०

---

१ 'क्षार' ।

८।१४) इति 'संवत्सरमादिशेत्' (१।१८।९) इति च । तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कार्यमित्यर्थः । वापनादिग्रहणमलंकारनिवृत्त्यर्थम् । 'काय त्वा परिददामि' इत्येतत्परिदानम् । परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थम् ॥ २० ॥

इत्यनुपेतपूर्वस्य ॥ २१ ॥

इति एतदुपनयनविधानमनुपेतपूर्वस्य । उत्तरविवक्षयेदमारभ्यते ॥ २१ ॥

अथोपेतपूर्वस्य ॥ २२ ॥

अनन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः ॥ २२ ॥

कृताकृतं केशवपनं मेधाजननं च ॥ २३ ॥

कृताकृतमिति वर्तते ॥ २३ ॥

अनिरुक्तं परिदानम् ॥ २४ ॥

परिदानमनिरुक्तमिति न भवतीत्यर्थः ॥ २४ ॥

कालश्च ॥ २५ ॥

उदगयनादिरनिरुक्तः ॥ २५ ॥

तत्सवितुर्वृणीमह इति सावित्रीम् ॥ २६ ॥ ख० २२ ॥

पूर्वस्याः सावित्र्याः स्थान एतां सावित्रीं प्रयुञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यात् ॥ २६ ॥

ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥

प्रमाणतः परिमाणतश्च न्यूनाङ्गाननतिरिक्ताङ्गांश्च ऋत्विजः संभजते । 'ये मातृतः पितृतश्च' ( १ । ५ । १ ) इत्युक्तलक्षणयुक्ताश्च ते भवेयुः । तत्र प्रमाणतो नातिदीर्घा नातिह्रस्वाः । परिमाणतश्चतुरङ्गुलयः षडङ्गुलयो वा न भवन्ति ॥ १ ॥

युन ऋत्विजो वृणीत इत्येके ॥ २ ॥

अन्ये कर्मसमर्थानित्याहुः । पुनर्ऋत्विग्ग्रहणं वरणसामान्यादनृत्विजामपि चमसाध्वर्युप्रभृतीनामेतद्गुणप्राप्तौ तन्निवृत्त्यर्थम् ॥ २ ॥

ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युमथोद्गातारम् ॥ ३ ॥

एवकारो नियमार्थः । कथम् । ब्रह्मण एव प्रथमं वरणं स्यादिति । एवं नियमं कुर्वता होत्रादीनामनियत. क्रमो भवतीत्येतत्साधितम् ॥ ३ ॥

सर्वान्वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥

अहीनैकाहैर्याजयन्तीति वचनं शमितृनिवृत्त्यर्थम् । कथं वा प्राप्नुयात् । सामा-

१ घ 'स्तुकः ।

न्यवरणप्रसङ्गात् । 'आपो मे होत्राशंसिन्य इति होत्रकान्' ( १ । २३ । ९ ) इत्यत्र होत्रकशब्दो मुख्यवर्जितेषु वर्तते । 'होत्रका उपह्वयध्वमितीतरान्' ( श्रौ० ६ । ६ ) इत्यत्र मुख्यवर्जितेषु होत्रकशब्दस्य दर्शनात् । ततश्च यथा प्रतिप्रस्थात्रादिषु वर्तेत एवं शामित्रादिष्वपि वर्तेत ॥ ४ ॥

सदस्यं सप्तदशं कौषीतकिनः समामनन्ति स कर्मणामुपद्रष्टा भवतीति तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति ॥ ५ ॥

सदसि भवः सदस्यः । सप्तदशग्रहणमृत्विक् सधर्मा भवतीति ज्ञापनार्थम् । तेनोपस्थानप्रसर्पणादि सामान्यविहितं सिद्धम् । अथवा नियमार्थम् । कथम् । एक एव सदस्यः स्यादिति । शास्त्रान्तरेऽनेके सदस्या दृष्टास्तन्निवृत्त्यर्थम् । स च कर्मणामुपद्रष्टा भवतीत्येवं कौषीतकिन आचार्या मन्यन्ते । ऋग्भ्यां चायमर्थ उक्तः ॥ ५ ॥

होतारमेव प्रथमं वृणीते ॥ ६ ॥

एवकारोऽवधारणार्थः । होतारमेव न ब्राह्मणमिति । एवं चेत्पूर्वेण विरोधः । न । यदा चतुर्णां वरणं तदा ब्रह्मणः प्रथमं वरणम् । यदा सर्वेषां तदा होतुः प्रथमं वरणमिति ॥ ६ ॥

अग्निर्मे होता स मे होता होतारं त्वाऽमुं वृण इति होतारम् ॥ ७ ॥

अनेन होतारं वृणीते । अमुमित्यस्य स्थाने होतुर्नाम वाच्यम् । पुनर्होतृग्रहणं होतृवरण आम्नातो मन्त्र उत्तरत्रानुवर्तेत इति ज्ञापनार्थम् ॥ ७ ॥

चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वाऽमुं वृण इति ब्रह्माणम् ॥ ८ ॥

कृत्स्नपाठोऽनुवृत्तिमार्गप्रदर्शनार्थः ॥ ८ ॥

आदित्यो मेऽध्वर्युरित्यध्वर्युम् । पर्जन्यो म उद्गातेत्युद्गातारम् । आपो मे होत्राशंसिन इति होत्रकान् । रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून् । आकाशो मे सदस्य इति सदस्यम् । स वृतो जपेत् । महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच इति ॥ ९ ॥

सग्रहणं कथम् । वरणानन्तरमेव जपः स्यात्सर्वेषां वरणे कृते मा भूदिति । वृतग्रहणं ये ये वृतास्ते ते जपेयुरित्येवमर्थम् ॥ ९ ॥

---

१ घ. यथा ।

जपित्वाऽग्निष्टे होता स ते होता होताऽहं ते मानुष इति होता प्रतिजानीते ॥ १० ॥

जपित्वेति वचनं 'तन्मामवतु तन्मा विशतु' इत्येतमपि जपं जपित्वेत्येवमर्थम् । इहैव तर्हि कस्मान्न पठितः । अनित्यत्वात् । अनित्यत्वं तु वक्ष्यामः ॥१०॥

चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ ११ ॥

पुनर्मन्त्रपाठः प्रतिवचनस्यानुवृत्तिमार्गप्रदर्शनार्थः ॥ ११ ॥

ब्रह्मैवमितरे यथादेशं तन्मामवतु तन्मा विशतु तन्मा जिन्वतु तेन भुक्षिषीयेति च याजयिष्यन् ॥ १२ ॥

जपतीति शेषः । यदाऽग्न्याधेये चतुर्णां वरणं भवति तदा याजयितारस्ते न भवन्ति । यत्तु सोमाङ्गं वरणं भवति तत्र याजयितारो भवन्ति । तेन सोमाङ्गवरण एवायं जपो नाग्न्याधेये । तेनायमनित्यः ॥ १२ ॥

याज्यलक्षणमाह—

त्यक्तमार्त्विज्यमकार्यम् ॥ १३ ॥

ऋत्विग्भिर्विवादेन त्यक्तमार्त्विज्यमकार्यम् ॥ १३ ॥

+ अहीनस्य नीचदक्षिणस्य ॥ १४ ॥

अल्पदक्षिणस्याहीनस्याऽऽर्त्विज्यमकार्यम् । अतो ज्ञायत एकाहस्याल्पदक्षिणस्यापि कार्यमिति । विज्ञायते च 'तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकाऽपीति ॥ १४ ॥

व्याधितस्याऽऽतुरस्य ॥ १५ ॥

व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगतः ॥ १५ ॥

यक्ष्मगृहीतस्य ॥ १६ ॥

यक्ष्मगृहीतः क्षयव्याधिगृहीतः ॥ १६ ॥

अनुदेश्यभिशस्तस्य ॥ १७ ॥

सदेशिनाऽभिशस्तस्येत्येवमेके । अन्ये तु श्राद्धे प्रतिषिद्धस्येत्याहुः ॥ १७ ॥

क्षिप्तयोनेरिति चैतेषाम् ॥ १८ ॥

क्षिप्तयोनिर्नाम यस्य माता स्वभर्तरि नावतिष्ठते । अकार्यमिति सर्वत्र संबन्धनीयम् । इतिचैतेषामिति वचनमन्येषामप्येवंप्रकाराणां न कार्यमित्येवमर्थम् ॥ १८ ॥

सोमप्रवाकं परिपृच्छेत्को यज्ञः क ऋत्विजः का दक्षिणेति ॥ १९ ॥

---

+ अहीनस्येति । अहर्गणसाध्यसुत्याकस्य क्रतोरित्यर्थः ।

१ ग. घ. नीचद° ।

यः सोमं प्रथमं निवेदयतीदं त्वयाऽस्मिन्कार्यमिति स सोमप्रवाकस्तमेवं पृच्छेत् ॥ १९ ॥

**कल्याणैः सह संप्रयोगः ॥ २० ॥**

कल्याणे यज्ञे कार्यम् । कल्याणैर्ऋत्विग्भिः सह कार्यम् । दक्षिणा अपि कल्याण्यो यदि स्युस्तथा सति कार्यम् । नान्यथा ॥ २० ॥

**न मांसमश्नीयुर्न स्त्रियमुपेयुरा क्रतोरपवर्गात् ॥ २१ ॥**

ऋत्वादिप्रभृत्या अपवर्गादेते नियमा भवन्ति । वरणप्रभृतीति कल्प्यमाने यदि मध्यमोपसदि वरणं भवति तदा प्रागनियमः प्रसज्येत । तस्मादृत्वादिप्रभृतीति युक्तम् । मध्यमोपसदि च शाखान्तरे वरणं दृष्टम् ॥ २१ ॥

**एतेनाग्ने ब्रह्मणा वावृधस्वेति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् ॥ २२ ॥**

ऋत्वन्ते स्वस्य दक्षिणाग्नौ 'एतेनाग्ने' इत्येतयाऽऽज्याहुतिं जुहोति । नैमित्तिकत्वाच्छाखान्तरदर्शनान्मन्त्रलिङ्गाच्च । चकृमेति हि भूतप्रत्ययः । तेन ऋत्वन्त इति सिद्धम् । यथार्थं प्रव्रजेदिति । यथार्थमाचरेत् । अनियमो भवतीत्यर्थः । हुत्वाऽनियमो भवतीति ब्रुवन् 'समाप्तेऽपि ऋतौ होमपर्यन्तं नियमा भवन्ति' इति ज्ञापयति । आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते न तु परिस्तरणविकल्पार्थम् ॥ २२ ॥

**एवमनाहिताग्निर्गृह्य इयामग्ने धराणि मीमृषो न इत्येतयर्चा ॥ २३ । ख० २३ ॥**

एतयेति वचनमेतया जुहुयादेवेत्येवमर्थम् । तेनात्रापि तन्त्रं न भवति । ऋचेति वचनमकृतविवाहोऽप्यार्त्विज्यं कृतवानेतया लौकिकाग्नौ जुहुयादित्येवमर्थम् । मधुपर्कप्रसङ्गादत्र ऋत्विग्वरणमाम्नातम् ॥ २३ ॥ २३ ॥

**ऋत्विजो वृत्वा मधुपर्कमाहरेत् ॥ १ ॥**

दद्यादित्यर्थः ॥ १ ॥

**स्नातकायोपस्थिताय ॥ २ ॥**

उपस्थितायेति । कृतसमावर्तनाय । तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च ॥ २ ॥

**राज्ञे च ॥ ३ ॥**

उपस्थिताय ॥ ३ ॥

आचार्यश्वशुरपितृव्यमातुलानां च ॥ ४ ॥

आचार्यादीनां पूर्वयोरसमासेन निर्देशस्त्वतुल्यत्वज्ञापनार्थः । तेन स्नातकाय तद्दद्वरेव देयः । 'यत्रेनं पूजयिष्यन्तो भवन्ति' ( ३।९।३ ) इति वचनात् । विवाहार्थिने च । राज्ञे त्वहरहरभ्यागताय । आचार्यादीनां प्रति वत्सरोषितागतानां शास्त्रान्तरदर्शनाद्विशेषो लभ्यः ॥ ४ ॥

अप्रसिद्धत्वान्मधुपर्कस्वरूपमाह—

दधनि मध्वानीय ॥ ५ ॥

आनयतिरत्र सेचनकर्मा । आसिच्येत्यर्थः ॥ ५ ॥

सर्पिर्वा मध्वलाभे ॥ ६ ॥

इदं वचनं मध्वलाभेऽयमेव प्रतिनिधिर्भवति नान्यस्तैलादिरित्येवमर्थम् ॥ ६ ॥

अल्पत्वाद्दातुः कर्म पूर्वमाह—

विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥ ७ ॥

विष्टर इत्यासनम् । पाद्यार्थमर्घ्यार्थमाचमनार्थं चोदकं तयोक्तम् । एतेषामिति वचनमेतेषामेव त्रिर्निवेदनं यथा स्याद्भोजनस्य मा भूदिति । भोजनं च देयमिति वक्ष्याम. । ऋत्विजां मधुपर्कदाने द्वे गती संभवतः—पदार्थानुसमयः काण्डानुसमय इति । तत्र पदार्थानुसमयो नाम सर्वेभ्यो वरणक्रमेण विष्टरं दत्त्वा ततः पाद्यं ततोऽर्घ्यमिति । काण्डानुसमयो नामैकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति ॥ ७ ॥

अथ ग्रहीतुः कर्माऽऽह—

अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदं तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेदाक्रम्य वा ॥ ८ ॥

आक्रम्य वा पद्भ्यां विष्टरमाक्रम्य वा । एतयोर्विकल्पः ॥ ८ ॥

पादौ प्रक्षालयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥ ९ ॥

पश्चात्सव्यं । कुतः । अग्रेवचनात् ॥ ९ ॥

सव्यं शूद्राय ॥ १० ॥

अग्रे प्रयच्छेत् । पश्च दक्षिणम् । क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा । नास्ति तदा नियमः ॥ १० ॥

---

१ घ. 'सेनोपदे'। २ घ. 'मनीयार्थं । ३ क 'य प्रतिग्र'।

प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ॥ ११ ॥

प्रक्षालितपादग्रहणमानन्तर्यार्थम् । प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादिति । गन्धमाल्याद्दिसंयुक्तमुदकमर्घ्यमित्युच्यते लोके ॥ ११ ॥

अथाऽऽचमनीयेनाऽऽचामति—अमृतोपस्तरणमसीति ॥ १२ ॥

अथशब्दस्त्वानन्तर्यार्थः । अर्घ्यानन्तरमाचमनीयमेवेति । तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि । आचामतीत्युदकं पिबतीत्यर्थः । अत्र शौचार्थमाचमनं न भवति । कुतः । स्मृतेः 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टा भवन्ति' इति । उत्तरत्र विधानाच्च 'आचान्तोदकाय गाम्' ।(१।२४।२३) इति । एवमेके । तदयुक्तम् । कुतः । सोमेऽनुच्छिष्टविधानाद्यत्राऽऽचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं भवतीति गम्यते । आचान्तोदकवचनमन्यार्थम् ॥ १२ ॥

मधुपर्कमाह्रियमाणमीक्षेत मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ॥ १३ ॥

मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण ॥ १३ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृह्य सव्ये पाणौ कृत्वा मधुवाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण च्छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि ॥ १४ ॥

अनामिकेति केचिन्मध्यमामाहुः । कुतः । देशेनैव समाख्या न तु तस्या नाम विद्यतेऽङ्गुष्ठादिवत् । अन्ये तूपकनिष्ठिकामाहुः । कुतः । कनिष्ठिकया ह्यसौ व्यपदिश्यते न तु तस्या नामास्तीति । आगमाद्विशेषो ज्ञेयः । तृचेनावेक्ष्य ततः सव्ये पाणौ कृत्वा प्रदक्षिणमालोड्य वसवस्त्वेति पुरस्तान्निमार्ष्टि । अङ्गुलिगतं लेपमपनयतीत्यर्थः ॥ १४ ॥

रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्त्विति दक्षिणत आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्त्विति पश्चाद् विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्त्वित्युत्तरतो भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य ॥ १५ ॥

मन्त्रेण मध्यात्त्रिरुद्गृह्य निमार्ष्टि । ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थः । मन्त्रा[1]लिङ्गकाः ॥१५॥

ततो भूमौ निधाय पात्रम्—

विराजो दोहोऽसीति प्रथमं प्राश्नीयाद् विराजो दोहमशीयेति

---

[1] क. 'मेऽनुच्छिष्टं वदन्त्यन्या'।

द्वितीयं मयि दोहः पद्यायै विराज इति तृतीयम् ॥ १६ ॥

संख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थानि । एवं भाष्यकारः । अन्ये त्वन्यथा व्याचख्युः—मूर्तेत्यस्यैवेति मध्यात्त्रिरुद्धृत्य विराजो दोहोऽसीति प्रथममुद्ग्राहं प्राश्नीयात् । विराजो दोहमशीयेति द्वितीयमुद्ग्राहम् । मयि दोहं इति तृतीयमुद्ग्राहम् । तृतीयवचनं सर्वप्राशनपक्षे तृतीयेनैं प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थम् । पद्यायै विराज इत्यत्र विराज इति षष्ठी । कुतः । पूर्वमन्त्रयोस्तथा दृष्टत्वात् । पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तदसामानाधिकरण्ये सत्यपि षष्ठ्यर्थे युक्तं कल्पयितुम् ॥ १६ ॥

न सर्वम्[1] ॥ १७ ॥

प्राश्नीयात् ॥ १७ ॥

न तृप्तिं गच्छेत् ॥ १८ ॥

तृप्तिं च न गच्छेत् ॥ १८ ॥

ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेदलाभेऽप्सु ॥ १९ ॥

ब्राह्मणायोच्छिष्टमुद्धृतादवशिष्टमुदङ्मुखो मधुपर्कं प्रयच्छेत् । ब्राह्मणालाभेऽप्सु निषिञ्चेत् ॥ १९ ॥

सर्वं वा ॥ २० ॥

प्राश्नीयात् ॥ २० ॥

अथाऽऽचमनीयेनान्वाचामत्यमृतापिधानमसीति ॥ २१ ॥

यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण ॥ २१ ॥

सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम् ॥ २२ ॥

द्वितीयग्रहणमाचमनीयप्राप्त्यर्थम् । इतरथा मन्त्रस्योत्तरेण संबन्धः स्यात् ॥ २२ ॥

आचान्तोदकाय गां वेदयन्ते ॥ २३ ॥

आचान्तग्रहणं शौचार्थमाचमनं कृत्वा कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थम् । उदकवचनमाचमनीयनिवृत्त्यर्थम् । तेनाऽऽचमन उदकान्तरं भवति ॥ २३ ॥

हतो मे पाप्मा पाप्मा मे हत इति जपित्वोंकुरुतेति कारयिष्यन् ॥ २४ ॥

इमं मन्त्रं जपित्वा ॐ कुरुतेति ब्रूयात् । यदि कारयिष्यन्मारयिष्यन्भवति । सदा च दाताऽऽलभेत । तत्र देवताः प्रागुक्ताः ॥ २४ ॥

---

[1] ध. °यात्र सर्वम् ।

माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्सृक्ष्यन् ॥ २५ ॥

अमुत्सक्ष्यन् भवति तदेतां जपित्वोमुत्सृजतेति ब्रूयात् ॥ २५ ॥

नामांसो मधुपर्को भवति भवति ॥ २६ ॥ ख० २४ ॥

मधुपर्काङ्गं भोजनममांसं न भवतीत्यर्थः । कुतः । मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात् । अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति । पशुकरणपक्षे तन्मांसेन भोजनम् । उत्सर्जनपक्षे मांसान्तरेण । अध्यायान्तलक्षणार्थं द्विर्वचनं मङ्गलार्थं च ॥ २६ ॥ २४ ॥

इत्याश्वलायनगृह्यसूत्रे प्रथमोऽध्यायः ॥ १ ॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ॥

ॐ श्रावण्यां पौर्णमास्यां श्रवणाकर्म ॥ १ ॥

कर्तव्यमिति शेषः । सर्पबलिरित्यस्याहाख्यम् । श्रवणेन युक्ता श्रावणी । यदा तु पौर्णमासी श्रवणेन न युक्ता तदाऽपि कर्तव्यमेव । पौर्णमासीविशेषलक्षणार्थत्वात्सूत्रस्य । श्रवणाकर्मेति कर्मनामधेयम् ॥ १ ॥

अक्षतधानाक्तूनां नवं कलशं पूरयित्वा दर्वीं च बलिहरणीं नवे शिक्ये निदधाति ॥ २ ॥

अक्षता नाम यवाः । तैः कृताः सक्तवः । दर्वी वैकङ्कती स्रुगाकृतिः । बलिर्येया ह्रियते सा बलिहरणी । एतदुभयं नवे शिक्ये निदधाति सर्पबल्यर्थम् ॥ २ ॥

अथ श्रवणाकर्मोच्यते—

अक्षतधानाः कृत्वा सर्पिषाऽर्धा अनक्ति ॥ ३ ॥

यवैर्धानाः कृत्वाऽसंस्कृतेन घृतेनानक्ति । अर्धा धानाः भागान्तरे कृत्वाऽन्याअर्धा धाना नानक्ति । एतावदहि कर्तव्यम् ॥ ३ ॥

अस्तमिते स्थालीपाकं श्रपयित्वैककपालं च पुरोडाशमपे नुप सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा पाणिनैककपालमच्युताय भौमाय स्वाहेति ॥ ४ ॥

---

२ ख. °दा पुन. पौ°.

श्रपयित्वेतिवचनं पुरोडाशस्यौपासने धर्मवच्छ्रपणार्थम् । स्थालीपाकस्य तु तन्त्रप्राप्त्यैवौपासने श्रपणं सिध्यति । नन्वन्यस्यापि सिध्यति । नियमार्थं तर्हि । तेन धानासक्तुव्राजादीनां लौकिकाग्नौ सिद्धानामेवोपादानं भवति । एतावांस्तु तेषां संस्कारः । आज्यपर्यग्निकरणवेलायां तैः सहाऽऽज्यस्य पर्यग्निकरणं भवेत् । यदाऽऽज्यस्योत्पवनमात्रमेव क्रियते तदा तेषां त्रिः प्रोक्षणं भवेत् । अवज्वलनं वा दधिवत् । एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालः पुरोडाशः । तमुद्वास्याऽऽज्ये निमग्नं कुर्यात् [1]। मैकटपृष्ठं वा कुर्यात् । चरुं चतसृभिः प्रत्यूचं हुत्वा दक्षिणेन पाणिनैककपालं जुहुयान्मन्त्रेण । उपस्तरणाभिघारणे तु सव्येन करोति । दक्षिणस्यान्यत्र व्यापृतत्वात् । दक्षिणाङ्गपरिभाषा च द्वयोः प्राप्तयोर्नियामिका न तु प्राप्तेरयुक्तम् । अस्य सर्वहुतत्वादवदानधर्मो लुप्तः । सर्वहुतत्वं तु वक्ष्यामः ॥ ४ ॥

अविप्लुतः स्यादाविःपृष्ठो वा ॥ ५ ॥

व्याख्यातमेतत् ॥ ५ ॥

मा नो अग्नेऽवसृजो अघायेत्येनमाद्ययेनाभिजुहोति ॥ ६ ॥

एनं पुरोडाशम् । एनमिति वचनं खण्डितोऽयं हुत इति ज्ञापनार्थम् । यस्मिन्नाज्ये पुरोडाशः शायितस्तदाद्ययम् । तेनाभिजुहोति । स्रुवेणोपरि जुहोतीत्यर्थः ॥ ६ ॥

शं नो भवन्तु वाजिनो हवेष्वित्यक्ता धाना अञ्जलिना ॥७॥

जुहुयादिति शेषः । हस्तद्वयसंघातोऽञ्जलिः । उपस्तरणात्रदानप्रत्यभिघारणान्यर्थादन्यः करोति ॥ ७ ॥

अमात्येभ्य इतरा दद्यात् ॥ ८ ॥

इतरा अनक्ता धानाः पुत्रादिभ्यो दद्यात् । ततो धानाभ्यश्चरोश्च गृहीत्वा स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ८ ॥

अथ सर्पबलिरुच्यते—

कलशात्सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय सर्पदेवजनेभ्यः स्वाहेति हुत्वा नमस्करोति । ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति ॥ ९ ॥

कलशश्च दर्वी च नवे शिक्ये स्थापिते । तत्र कलशाद्गृहीत्वा सक्तुभिर्दर्वीं

१ घ. ध. °न्नस्या° । २ ख वा पूर्वं° । ३ ख. व्यपकृ°।

पूरयित्वा तां गृहीत्वा गृहान्निष्क्रम्य समीपे देशे प्राच्यां दिशि शुचौ देशेऽप आसिच्य मन्त्रेण सक्तून्जुहोति । प्रक्षिपतीत्यर्थः । संहताभ्यां पाणिभ्यां ततो नमस्करोति मन्त्रेण । हुत्वेति वचनादग्नौ प्राप्ते तन्निवृत्त्यर्थं शुचौ देश इति वचनम् ॥ ९ ॥

प्रदक्षिणं परीत्य पश्चाद्बलेरुपविश्य सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुर्ध्रुवां ते परिददामीति ॥ १० ॥

ब्रूयादिति शेषः । प्रदक्षिणं परीत्य बलिम् । पश्चादस्योपविश्याऽऽह मन्त्रम् । बलिग्रहणं पश्चाच्छब्दस्य कालवाचित्वशङ्कानिवृत्त्यर्थम् । कालवाचित्वे सति सर्वाहुत्यनन्तरमेव स्यात् । मन्त्रसंज्ञकोऽयं मन्त्रः । तथा चोक्तम् 'इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञकाः' इति । तस्मादुपांशुर्भवति । यथाऽऽहुः—'गृह्यकर्मणि सर्वत्र जपानुमन्त्रणाभिमन्त्रणोपस्थानमन्त्रकरणमन्त्रा उपांशु प्रयोक्तव्याः' इति ॥ १० ॥

ध्रुवामुं ते ध्रुवामुं त इत्यमात्याननुपूर्वम् ॥ ११ ॥

परिदद्यादिति शेषः । उत्तरत्र दृष्टः परिददामिशब्दोऽत्रापि संबध्यते । साकाङ्क्षत्वादस्य मन्त्रस्य । वीप्साद्विर्वचनं प्रत्यमात्यं परिदानस्याभ्यासः कार्यो न सर्वेषां नामानि निर्दिश्य सकृद्वक्तव्यमित्येवमर्थम् । पूर्वं पुत्रान्निवेदयति । ध्रुव देवदत्त ते परिददामीति । ततोऽपत्ता दुहितॄः । ध्रुव सावित्रीं ते परिददामीति । ततो भार्याम् । ध्रुव सत्यवतीं ते परिददामीति ॥ ११ ॥

ध्रुव मां ते परिददामीत्यात्मानमन्ततः ॥ १२ ॥

परिदद्यादिति शेषः । उपदेशादेवान्तत इति सिद्धेऽन्ततोवचनं पूर्वेण संबन्धार्थम् । तेन पूर्वत्र परिददामीतिशब्दः सिद्धः ॥ १२ ॥

नैनमन्तरा व्यवेयुरा परिदानात् ॥ १३ ॥

एनं बलिमात्मानं चान्तरा न व्यवेयुः केचिदपि परिदानपर्यन्तम् । आ परिदानादिति वचनात् । पूर्वमन्त्रसाध्यक्रिया परिदानमिति गम्यते । परिददामीति मन्त्रलिङ्गात् ॥ १३ ॥

सर्पदेवजनेभ्यः स्वाहेति सायं प्रातर्बलिं हरेदा प्रत्यवरोहणात् ॥१४॥

कलशास्थसक्तूनां दर्वीं पूरयित्वा शुचौ देशे मन्त्रेण बलिं हरेदा प्रत्यवरोहणात्सायं प्रातश्च । आ चतुर्दश्या आ पौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहणं करोति ।

१ घ. 'स्य गृहान्निःक्रम्य' । २ क. ख. संहिता इ' । ३ घ. 'ति । तत आत्मानम्।

मन्त्रोपदेशो नियमार्थः । मन्त्र एव भवति नान्यो विधिरिति । सक्तवस्तावन्न निवर्तन्ते । कलशपूरणस्यादृष्टार्थत्वप्रसङ्गात् । दर्वी च न निवर्तते । दर्वी च बलिहरणीमित्यत्र 'बलिहरणीम्' ( गृ० २ । १ । २ ) इति विशेषणस्यैवदर्थत्वात् । शुचिर्देशश्च न निवर्तते । बलिहरणस्य भूमिसाध्यत्वेन प्रसिद्धत्वात् । अन्यत्सर्वं निवर्तते ॥ १४ ॥

**प्रसंख्याय हैके तावतो बलींस्तदहरेवोपहरन्ति ॥१५॥ख०१॥**

श्रावणीं प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनेष्वहःसु यावन्तः क्षयवृद्धिभ्यां परिगणनया प्रातःसायंकालास्तावतो बलींस्तदहरेव कुर्यादित्येके मन्यन्ते । हशब्दोऽभिमतत्वज्ञापनार्थः सर्वत्र ॥ १६ ॥ १ ॥

**आश्वयुज्यामाश्वयुजीकर्म ॥ १ ॥**

अश्वयुग्भ्यां युक्ताऽऽश्वयुजी तस्याम् । पौर्णमास्यामिति वर्तते । आश्वयुजीकर्मसंज्ञकं कर्म कुर्यात् । अयोगेऽपि पूर्ववत् ॥ १ ॥

**निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरुप्य जुहुयुः पशुपतये शिवाय शंकराय पृषातकाय स्वाहेति ॥ २ ॥**

निवेशनं गृहं तत्प्रत्यवरोहणोक्तविधिनाऽलंकृत्य सर्वे गृह्याः स्नान्ति । स्नातवचनं विशेषेण स्नानार्थम् । शौचार्थस्य स्मृतिप्राप्तत्वात् । शुचिवासोवचनं शुक्लत्वप्राप्त्यर्थम् । स्थालीपाकं जुहुयुरित्येतावतैव सिद्धे पशुपतये निरुप्येति वचनं 'पशुपतये त्वा जुष्टं निर्वपामि' इत्येवं निर्वापप्रोक्षणे कुर्यादित्येवमर्थम् । एवं ब्रुवताऽऽदिष्टमन्त्रेषु पाकयज्ञेषु निर्वापप्रोक्षणे तूष्णीं भवत इत्येतज्ज्ञापितं भवति । स्थालीपाकमिति द्वितीयानिर्देशेऽपि सर्वहुतत्वाशङ्का न कार्या । 'अथ दधिसक्तूञ्जुहोति' ( १।१।१ ) इत्युक्त्वा दधिसक्तून्प्राश्येति शेषभावदर्शनात् । स्थालीपाकमिति । स्थालीपाकस्यैकदेशमित्यर्थः । जुहुयुरिति बहुवचनं 'गृहिणा होमे क्रियमाणे पुत्रादयो गृह्यास्तमन्वारभेरन्नित्येवमर्थम्' ॥ २ ॥

**पृषातकमञ्जलिना जुहुयादूनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकाय स्वाहेति ॥ ३ ॥**

'पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकम्' । उपस्तरणाभिघारणे अर्थाद्न्यः करोति । पृषातकं स्रुवेणावद्यति । भावावदस्य संस्कारः । सर्वत्र द्रवद्रव्याणि

---

१ फ. ख निरुप्ये' । २ घ. " क्ष जैव का" ।

सुवर्णोत्थानि । कठिनानि तु हस्तेन । स्वधितिना पशुम् । परो ऽपातकांश्च स्विष्टकृतेऽवद्येत् । होमशेषं समापयेत् । इतीदमाश्वयुजीकर्म ॥ ३ ॥

अथाऽऽग्रयणमुच्यते—

सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणस्थालीपाकः ॥ ४ ॥

अविशेषादाहिताग्नेरपि सिध्यति श्रवणाकर्मादिवत् । आहिताग्निग्रहणं किमर्थम् । अत्र ब्रूम. । आहिताग्नेराग्रयणान्तरस्य विहितत्वादेतदाग्रयणं न प्राप्नोति । तस्मादाहिताग्निग्रहणम् । अयं चाऽऽपत्काले द्रष्टव्यः । इदं चास्य त्रेतायां भवति नोपासने । तत्तु साधयिष्यामः । शास्त्रान्तरे च दृश्यते—'आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः' इति । तस्मात्रेतायामिति सिद्धम् । इह तु विधानं पाकयज्ञधर्मप्राप्त्यर्थम् । ४ ॥

अनाहिताग्नेरपि शालाग्नौ ॥ ५ ॥ ख० ३ ॥

अनाहिताग्नेरप्याग्रयणं कार्यम् । तच्च शालाग्नौ भवति । शालाग्निरौपासन. । तर्हि शालाग्निग्रहणमपार्थकम् । सत्यम् । निरर्थकं तु तत् । अनाहिताग्नेरेवौपासन इति । तेनाऽऽहिताग्नेस्त्रेतायामिति सिद्धम् । स्विष्टकृतं हुत्वा चरोरेकदेशं गृहीत्वा सव्ये पाणौ कृत्वा दक्षिणेनाभिमृशेत् 'प्रजापतये त्वा' (श्रौ. २।९) इति । ततो 'भद्रान्नः श्रेयः' (श्रौ. २.९) इति प्राश्य तत आचम्य तत्रैवाऽऽसीनो नाभिमालभेत । 'अमोऽसि' (श्रौ. २।९) इति । पत्नी तु मध्यमं हविःशेषं तूष्णीं प्राश्नाति । होमशेषं समापयेत् । एतत्प्राशनमाग्रयणद्वयेऽपि भवति । सौकर्यार्थमिदमत्र लिखितम् । इदं चाऽऽग्रयणं यदा वर्षस्य तृप्त स्यात्तदा भवति । शरदीत्यर्थ । तथा च वचनं 'शरदि व्रीहिभिर्यजेत' इति । तत्र च पर्वणि भवति । यवाग्रयणं च न कार्यम् । श्यामाकैस्तु प्रकार कुर्याच्चाऽऽग्रयणम् । दृष्टत्वात् । अपि वाऽत्र समानतन्त्रं कुर्यात्सौम्य चरम् । तस्य च न मयेन होम । आग्रयणस्थालीपाक इत्यत्र च विशेषणसमास । आग्रयणं चासौ स्थालीपाकश्चेति । तत्र स्थालीपाकग्रहणस्येद प्रयोजनम् । अनाहिताग्नेः स्थालीपाक एव कार्य. । 'ना(अ)ग्निहोत्री वै नानाद्यपि वा (श्रौ. २।९) इत्ययं पक्ष. कार्य इति ॥ ५ ॥ ३ ॥

मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्याम् ॥ १ ॥

मृगशीर्षेण युक्ता मार्गशीर्षी । पौर्णमास्यामिति वर्तते । सामीप्ये चेयं सप्तमी । यथा 'अथाग्नीषोमीयेण चरन्त्युत्तरवेद्याम् (श्रौ. ४.११) इति । तेनायमर्थः—मार्गशीर्ष्याः पौर्णमास्याः समीपे या चतुर्दशी तस्यां प्रत्यवरोहणं नाम कर्म कर्तव्यमिति ॥ १ ॥

पौर्णमास्यां वा ॥ २ ॥

मार्गशीर्ष्यामिति वर्तते । अत्र त्वधिकरणे सप्तमी । तेन मार्गशीर्ष्यां पौर्णमास्यां वेति पूर्वेण सह विकल्पः । भाष्यकारस्त्वेतं विवृतवान्—मार्गशीर्षी पौर्णमासी यस्मिन्मासे सोऽयं मार्गशीर्षो मासः । 'साऽस्मिन् पौर्णमासीति संज्ञायाम्'(पा०सू०४।२.२१) इत्यण् प्रत्ययः । तस्मिन्मासे मघायां चतुर्दश्यां पौर्णमास्यां वेति विकल्प इत्यर्थः । नन्वेवं सति चतुर्दशीद्वित्वाद् द्विः कर्म प्राप्नोति । न । सकृदेव कार्यम् । 'सकृदेव कृते कृतः शास्त्रार्थः' इति न्यायात् । चतुर्दश्यामित्येकवचनाच्च । पौर्णमास्या सह विकल्पाच्च । नन्वेवमपि शुक्ले कृष्णे वा स्यात् । न । पौर्णमासीसाहचर्याच्छुक्ल एवेति ॥ २ ॥

> निवेशनं पुनर्नवीकृत्य लेपनस्तरणोपस्तरणैरस्तमिते पायसस्य जुहुयुरपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणी-रिमाः सर्वाश्च राजबान्धवीः स्वाहा । न वै श्वेतश्चाभ्यागारेऽहि-र्जघान किंचन । श्वेताय वैदार्वाय नमः स्वाहेति ॥ ३ ॥

पुनरिति वचनादाश्वयुजीकर्मण्यपीदमेवालंकरणमिति गम्यते । नवीकृत्य नवमिव कृत्वेत्यर्थः । तच्चैतैरित्याह । लेपनं कुड्यादीनाम् । स्तरणं च तेषामेवाऽऽच्छादनम् । उपस्तरणं भूमेः समीकरणम् । नवीकृत्येति वचनादपामार्गादीन्यप्युद्धार्याणि । एतावदहनि कर्तव्यम् । अथास्तमिते पायसस्यैकदेशं जुहुयुर्मन्त्राभ्याम् । 'तत्काल-श्चैव तद्गुणः' इति न्यायादुपलेपनाद्यस्तमित एव कार्यम् । बहुवचनं पूर्ववत् ॥ ३ ॥

नात्र सौविष्टकृत् ॥ ४ ॥

सौविष्टकृदिति स्विष्टकृदित्यर्थः सर्वत्र । अत्र कर्मणि यः स्विष्टकृत्स न कार्य इत्यर्थः । असत्यत्रग्रहणे प्रधानानन्तरमुच्यमानत्वात्प्रधानानन्तरं स्विष्टकृन्न भवती-त्यर्थः स्यात् । अन्ते च स्यादेव । ननु प्रधानानन्तरं स्विष्टकृतः प्राप्तिरेव नास्ति । तथा हि—'एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा' (३ । ५ । १०) इत्यत्र सौविष्टकृतं हुत्वेत्येतदपार्थकम् । प्रधानानन्तरं स्विष्टकृतः प्रकृतितः प्राप्तत्वात् । तत्कुर्वन्ज्ञापयति—अन्यत्र यान्याग्न्तून्यङ्गानि विहितानि तत्र तानि कृत्वा पश्चा-

१ क. ख. °यशिरस्तवयथा° । २ ख. °नाहुस्यन° । ३ घ. °विशेषो भ°।

स्विष्टकृत्कार्य इति । तर्हि प्रधानानन्तरं स्विष्टकृत्प्रतिषेधाशङ्कानिवृत्त्यर्थमन्त्रग्रहणं कुर्वञ्ज्ञापयति—अत्र प्रधानानन्तरं कर्मणोऽन्ते वा स्विष्टकृन्न भवतीति । तेनान्यत्र प्रधानानन्तरं कर्मणोऽन्ते वा स्विष्टकृदिति विकल्पः सिद्धः । अथवा सौविष्टकृतं हुत्वेत्येतत्क्रमार्थम् । असति तु तस्मिन्प्रधानानन्तरमेव प्राशनादि स्यात् । अत्र च प्रधानानन्तरं स्विष्टकृतः प्रकृतिप्राप्तत्वात्तस्य च प्रतिषेधे सति कर्मण्येव प्रतिषिद्धो भवति । कालान्तरे प्राप्त्यभावात् । एवं च सत्यन्त्रग्रहणं कुर्वञ्ज्ञापयति—अन्यत्र कर्मान्ते वा स्विष्टकृद्भवतीति ॥ ४ ॥

अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमना भवेति । हेमन्तं मनसा ध्यायात् ॥ ५ ॥

अर्थध्यानस्य मुख्यत्वेऽपि शब्दध्यानमेव कार्यमित्येवमर्थं मनोग्रहणम् । मन्त्रमुक्त्वा मनसा हेमन्तशब्दं संबुद्ध्यन्तं ध्यायेन्मन्त्रेण समानाधिकरणत्वाय ॥ ५ ॥

पश्चादग्नेः स्वस्तरः स्वास्तीर्णस्तस्मिन्नुपविश्य स्योना पृथिवी भवेति जपित्वा संविशेत्सामात्यः प्राक्शिरा उदङ्मुखः ॥ ६ ॥

यस्मिंस्तरणे स्वयं शेते स स्वस्तरः । स स्वास्तीर्णो भवति । स्वयमेव तमास्तृणीयादित्यर्थः । तस्मिन्ग्रहणममात्यानामपि तत्रैव प्रापणार्थम् । संविशेदिति । शयीतेत्यर्थः । अमात्याः पुत्रादयो गृह्याः । उदङ्मुखवचनं दक्षिणामुखनिवृत्त्यर्थम् ॥ ६ ॥

यथावकाशमितरे ॥ ७ ॥

अमात्या यथावकाशं प्राक्शिरस उदङ्मुखाः संविशेयुरित्यर्थः । उत्तरेण विकल्पार्थमिदम् ॥ ७ ॥

ज्यायाञ्ज्यायाननन्तरः ॥ ८ ॥

यो यो यस्माद्यस्माद्वृद्धतरः स स गृहिणोऽनन्तरं संविशेत् । यथावकाशं वेति विकल्पः ॥ ८ ॥

मन्त्रविदो मन्त्राञ्जपेयुः ॥ ९ ॥

स्योना पृथिवीत्यारभ्य स्वस्त्ययनपर्यन्तान्मन्त्रान्मन्त्रविदः सर्वे ब्रूयुर्गृह्याः ॥[1]

संहाय अतो देवा अवन्तु न इति त्रिः ॥ १० ॥

संहायेयुरुत्थायेत्यर्थः । प्राङ्मुखास्त्रिर्ब्रूयुः ॥ १० ॥

एतां दक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थम् ॥ ११ ॥

एतामिति वचनं योगविभागार्थम् । इतरथा त्रिदिङ्मुखास्त्रिर्ब्रूयुः । चतुर्थं चतु-

---

१ ख. 'तिषेधो भ' । २ 'त्रिः । दक्षिणादिदि' ।

र्गारं त्रिदिङ्मुखाः सकृदित्ययमर्थः स्यात्। योगविभागे सति प्राङ्मुखास्त्रिः। त्रिदिङ्मुखाः सकृदित्ययमर्थो लभ्यते। त्रिदिङ्मुखाश्च यथासंख्येन त्रीन्पादान्ब्रूयुः। चतुर्थवचनं त्रिरविकारनिवृत्त्यर्थम्। सर्वे प्रायश्चित्तादि समापयेत्। ततो यथाशय्यं शेरते ॥ ११ ॥

संहाय सौर्याणि स्वस्त्ययनानि च जपित्वाऽन्नं संस्कृत्य ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत ॥ १२ ॥ ख० ३ ॥

संहाय संगत्येत्यर्थः। इदानीं संगतिविधानात्पूर्वं यथाशय्यं शेरत इति गम्यते। समागम्योदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपेयुः। 'सूर्यो नो दिवः। उदुत्यं जातवेदसमिति नव। चित्रं देवानाम्। नमो मित्रस्य' इत्येतेषां सौर्यसंज्ञा कृता। स्वस्तिशब्दवन्ति स्वस्त्ययनानि 'आ नो भद्राः। स्वस्ति नो मिमीताम्। परावतो ये दिधिषन्त आप्यम्' इत्येतानि। अन्नसंस्कारवचनं चरुशेषाद्ब्राह्मणभोजननिवृत्त्यर्थम्। तेनानुप्रवचने चरुशेषादिति सिद्धम् ॥१२॥३॥

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः ॥ १ ॥

हेमन्तशिशिरावृतू। अपरपक्षाः कृष्णपक्षाः। अष्टका इति कर्मनाम। एतदुक्तं भवति। मार्गशीर्षादिचतुर्षु मासेषु ये कृष्णपक्षाश्चत्वारस्तेषु याश्चतस्रोऽष्टम्यस्तास्वष्टकाः कार्या इति। ऋतुद्वयमध्ये यदि मलमास आगच्छति तर्हि तस्मिन्मासे न कर्तव्यमित्येवमर्थं चतुर्ग्रहणम्। अपि च बहुवचनस्य त्रिष्वेव चारितार्थ्यात्वाच्छास्त्रान्तरदर्शनाच्चोर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका इति तिस्र एवाष्टकाः स्युस्तन्निवृत्त्यर्थं चतुर्ग्रहणम् ॥ १ ॥

एकस्यां वा ॥ २ ॥

एकस्यामेवाष्टम्यामष्टकाः कार्याश्चतसृषु वेति विकल्पः ॥ २ ॥

पूर्वेद्युः पितृभ्यो दद्यात् ॥ ३ ॥

सप्तम्यामित्यर्थः। पितृशब्देनात्र पितृपितामहप्रपितामहा उच्यन्ते। अन्वष्टक्ये 'पितृभ्यो दद्यात्' ( २। ५। ७ ) इत्यस्यां चोदनायां पिण्डदानं दृष्टम्। अतश्चोदनासामान्यादिहापि परिगृह्यते। ब्राह्मणभोजनं च कार्यमिति वक्ष्यामः। तेन पूर्वेद्युः पितृभ्यः पिण्डान्भोजनं च दद्यादित्यर्थः। पिण्डदान इतिकर्तव्यतापेक्षाऽस्ति। इह च तस्या अनाम्नानात्प्रकरणान्तरविहितोऽपि पिण्डपितृयज्ञकल्पः परिगृह्यते। शक्यते चासौ ग्रहीतुम्। शास्त्रसंबन्धकरणात्। अपि चान्वष्टक्येऽपि पिण्डपितृ-

१ ख. सर्वे प्रायश्चित्तादि समापयेयुः। २ ख. °ते। उत्तरत्र संगतिविधानात्। ३ ख. °ध्वेम पि°।

यज्ञकल्पो दृष्टः । स चोदनासामान्यादिहापि भवति । अत्रैव तर्हि पिण्डपितृयज्ञकल्पेनेति कस्मान्नोक्तम् । स्त्रीभ्यश्चेत्यत्राधिकारार्थं तत्रोक्तम् । स च कल्पोऽत्राग्नौकरणे पाकयज्ञतन्त्रस्य बाधको भवति । एककार्यत्वात् । भोजनं तु पार्वणवद्भवति । भोजनेऽपि तन्त्रस्यापेक्षितत्वात् । तच्च भोजनं पैतृकमेवेति कृत्वा पार्वणमेव तन्त्रं परिगृह्यते । तस्य पैतृकत्वात् ॥ ३ ॥

तस्य विशेषमाह—

ओदनं कृसरं पायसम् ॥ ४ ॥

पिण्डपितृयज्ञवत्कल्पो भवतीत्युक्तम् । तत्र च नित्येऽग्नौ चरुश्रपणमस्ति । तस्य स्थान एतानि त्रीणि नित्येऽग्नौ श्रपयेत् । 'ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः । ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य शृतो वा कृसरो भवेत्' इति ॥ ४ ॥

चतुःशरावस्य वाऽपूपान् ॥ ५ ॥

चतुःशरावपरिमितस्य वा धान्यस्य पेषणं कृत्वाऽपूपाञ्छ्रपयेत् । अपूपाः पिष्टमयाः । बहुसाधनसाध्यत्वादपूपानां स्त्रीकर्तृकत्वाच्च नित्येऽग्नौ श्रपणं न संभवतीति गृहसिद्धानामेवोपादानमिच्छन्ति । वाशब्दो विकल्पार्थः । पूर्वाणि वा त्रीणि, इदं वैकं द्रव्यमिति । भोजने तु नायं द्रव्यनियमोऽपि तु होम एव । 'अष्टका हि चतस्रः स्युः पूर्वाह्णानि तथैव च । द्रव्यत्रयत्वाद्धैकत्वान्न यथासंख्यसंभवः । प्रत्यष्टकं हि पूर्वेद्युस्त्रीणि द्रव्याण्यथापि वा । अपूपद्रव्यमेकं वा नान्या स्याद्दानकल्पना' ॥ ५ ॥

उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत ॥ ६ ॥

यावतीभिर्वाऽधिकाभिः पितृलिङ्गकाभिः कामयीत तावतीभिर्जुहुयात् । एतदुक्तं भवति । पिण्डपितृयज्ञविधानेनेध्माधानान्तं कुर्यात् । चरुश्रपणे विशेष उक्तः । ततो ब्राह्मणपञ्चौचाद्याच्छादनप्रदानपर्यन्तं पार्वणवत्कृत्वा, ओदनादिभ्यस्त्रिभ्योऽन्नमुद्धृत्य घृताक्तं कृत्वाऽनुज्ञाप्याग्नौकरणमन्त्रयोः स्थाने 'उदीरतामवर उत्परासः' इत्यष्टाभिश्चतुर्दशभिर्वा हुत्वा मेक्षणमनुप्रहृत्य ब्राह्मणेभ्योऽन्नदानादि शेषनिवेदनान्तं पार्वणवत्कृत्वा मुक्तवत्सु पिण्डपितृयज्ञवात्त्रिनयनादिपात्रोत्सर्गान्तं कृत्वा ततः श्राद्धशेषं समापयेदिति ॥ ६ ॥

अथ श्वोभूतेऽष्टकाः पशुना स्थालीपाकेन च ॥ ७ ॥

---

१ ख. "भिर्वैश्वातीयकाभिः पि" । २ ख. "त कामयेत ता" ।

अथेत्यानन्तर्यार्थः । श्वोभूतेऽष्टम्यामित्यर्थः । या अष्टकाः कार्या इत्युक्तास्ताः श्वोभूते पशुना स्थालीपाकेन च कार्या इत्यर्थः । अथाष्टका इत्येतावत्युच्यमानेऽथ-शब्दसंबन्धात्पूर्वेद्युश्चाष्टकाः कार्या इत्याशङ्का स्यात् । तस्माच्छ्वोभूतग्रहणम् । श्वो-भूतस्य स्थालीपाकस्याविधेयत्वात्स्थालीपाकान्तरमिदमिति गम्यते । चशब्दश्चायं वाशब्दस्य स्थाने द्रष्टव्यः । तेन पशुना वा स्थालीपाकेन वेत्यर्थः । शाखान्तरे च स्पष्टं वचनमस्ति 'पशोरभावे स्थालीपाकः प्रवर्तते' इति ॥ ७ ॥

अप्यनडुहो यवसमाहरेत् ॥ ८ ॥

अपिशब्दो विकल्पार्थः । एतदुक्तं भवति । पशुः कार्यस्तस्यासंभवे स्थालीपा-कस्तस्याप्यसंभवेऽनडुहो यवसं प्रयच्छेदिति । शकटवहनसमर्थो बलीवर्दोऽ-नड्वान् ॥ ८ ॥

अग्निना वा कक्षमुपोषेत् ॥ ९ ॥

त्रयस्याप्यसंभवेऽग्निना वा कक्षं दहेत् ॥ ९ ॥

एषा मेऽष्टकेति ॥ १० ॥

यवसदाने कक्षदहने चैवं मनसा ध्यायेदित्यर्थः ॥ १० ॥

न त्वेवानष्टकः स्यात् ॥ ११ ॥

इदमस्य प्रयोजनम् । चत्वारः पक्षा उक्तास्तत्र पूर्वाभाव उत्तरोत्तरः प्रवर्तत इति । एवमप्यष्टकाः कार्याः । न त्वेवानष्टकः स्यादित्यर्थः । अथवा शाखान्तरे यानि पक्षान्तराण्युक्तानि 'अपि वा अनूचानेभ्य उदकुम्भमाहरेत्' 'अपि वा श्राद्धमन्त्रानधीयीत' इति । तथा वा कुर्यात् । नत्वेवानष्टकः स्यादित्यर्थः ॥११॥

तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके सौर्यामेके प्राजापत्यामेके रात्रिदेवतामेके नक्षत्रदेवतामेक ऋतुदेवतामेके पितृदेवतामेके पशुदेवतामेके ॥ १२ ॥

एतेऽष्टौ देवताविकल्पाः । तत्र यदाऽऽग्नेय्यष्टका क्रियते तदा वपापशुस्था-लीपाकावदानानि त्रीण्यप्यग्नये स्वाहेति जुहुयात् । केवलस्थालीपाकमप्यनेनैव जुहुयात् । एवमितरेष्वपि ज्ञेयम् । तत्रानाचार्यो पक्षाणामयुक्तत्वज्ञापनार्थमाद्ये हशब्दं पठितवान् । मन्त्रास्तावदष्टकार्थत्वेन गृह्यन्ते स्मृतिपारम्पर्येण स्मर्यन्ते । स्मृतिश्च प्रमाणम् । एवमष्टकार्थत्वेन प्रमाणावगतेषु मन्त्रेषु तान्परित्यज्याग्न्यादीनां नामधेयेन होम इत्येतदयुक्तमिति हृदि कृत्वा हशब्दं पठितवान् । तस्मात्सर्वदा मन्त्रैरेव होमः कार्यो न कदाचिदपि नामधेयेनेति सिद्धम् । एतमेव पक्षमुत्तरत्रापि समर्थयते ।

---

१ ख. 'मित्यत्र' । २ ख. 'ना क' । ३ 'दा प' । ४ क. घ 'क्षमुत्तरे' ।

वैश्वदेवीं *ब्रुवत इति बहुदेवत्यां ब्रुवत इति । अयमर्थः—या या मन्त्रेषु लिङ्गिनी* सा सा सर्वाऽत्र देवता भवति । नैवाग्न्यादय एकैकैव देवता भवतीत्यर्थः । बहुदेवत्यो हि वैश्वदेवशब्दः श्रूयते । ' यथा मनुष्वितु देवी मनीषेति वैश्वदेवम् ' इति । उक्तं च नैरुक्ते—' यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते' इति । प्रकारान्तरेणास्मामिर्माष्टकारमतमेवाद्दृतमिति निरवद्यम् । अपि चैवं व्याख्या । आग्नेयीमेके । तेषामयमभिप्रायः—' सत्यमष्टकार्थत्वेन मन्त्राणां स्मरणात्सर्वदा मन्त्रैरेव होमः कार्यस्तथाऽप्याग्नेयी भवति । अग्निरेव सर्वेषु मन्त्रेषूद्देश्यो भवतीत्यर्थः । यानि तेषु देवतान्तरवाचीनि पदानि तानि कथंचिद्गौण्या लक्षणया वा योगेन वाऽग्निवाचीनि भवन्ति । यथा प्रयाजानामाग्नेयत्वे समिदादिशब्दास्तस्यैव कथंचिद्वाचकाः । एवमत्रापीति ' । एवमुत्तरेष्वपि पक्षेषु योज्यम् । एवं देवताविप्रतिपत्तौ सत्यां हशब्दं प्रयुक्तवान् । बहुदेवत्ये त्वयमेव पक्षो युक्तः । लक्षणाद्याश्रयणे कारणाभावादिति ज्ञापयितुम् । प्रयाजेषु तु कारणं निरुक्ताद्विज्ञेयम् ॥ १२ ॥

पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयात् । वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान् पराके मेदसः कुल्या उपैनान्स्रवन्तु सत्या एता आशिषः सन्तु सर्वाः स्वाहेति ॥ १३ ॥

पशुकल्पेनेति वचनं प्रोक्षणप्रतिषेधैः पशुकल्पस्थस्यैव प्रोक्षणस्य भवति न पश्वङ्गभूतस्थालीपाकप्रोक्षणस्येत्येवमर्थम् । संज्ञप्येत्ययमनुवादः । उत्खिद्येति वचनमुत्खिद्य सर्वदाऽनयैव वपां जुहुयादित्येवमर्थम् । तेनाग्न्यादिनामधेयेन होम इत्याद्याः पक्षा निरस्ता भवन्ति ॥ १३ ॥

अथावदानानां स्थालीपाकस्य च—अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवा अभया शरन्नः । संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा । शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु सर्वतः स्वाहा । आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापम् । भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माऽधिगुप्तः स्वाराक्षराणि स्वाहा । विश्व आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु । ऊर्जं प्रजाममृतं पिन्वमानः प्रजा-

१ क. घ. लिङ्गिता । २ ख. 'नि सन्ति ता' । ३ ख. 'धः पशुकल्पे' ।

पतिर्मयि परमेष्ठी दधातु स्वाहा । प्रजापते न त्वदेता-न्यन्यः ॥ १४ ॥

स्थालीपाकशब्देनात्र द्वयं गृह्यते । एकवचनं जात्यभिप्रायम् । तेनायमर्थः-'पश्वङ्गस्थालीपाकस्यावदानानां च स्थालीपाकान्तरस्य चैते सप्त होममन्त्रा भव-न्तीति ' ॥ १४ ॥

सौविष्टकृत्यष्टमी ॥ १५ ॥

अष्टमीग्रहणं सर्वदा त्रिष्वपीयमाहुतिरष्टमी भवतीत्येवमर्थम् । तेन मन्त्रैरेव होमो न कदाचिन्नामधेयेनेति सिद्धम् । अपि च—यदा पश्वङ्गभूतस्थालीपाकः पृथग्घूयते तदा स्विष्टकृदपि पृथक्कार्य इत्येतत्प्रदर्शितं भवति । सर्वत्र च पृथग्घोमे स्विष्टकृदपि पृथक्कार्यः । वस्तुतस्तु पृथग्घोमे ह्यवदानानां सप्त स्थालीपाकस्य च सप्त । ततः सौविष्टकृती पञ्चदशी स्यात् । सहपक्षे त्वष्टमी भवति । एवं च पृथग्घोमनिवृत्त्यर्थम-ष्टमीग्रहणं वेदितव्यम् ॥ १५ ॥

ब्राह्मणान्भोजयेदित्युक्तम् ॥ १६ ॥ ख० ४ ॥

ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीतेति यदुक्तं तदिहापि कार्यमित्यर्थः । एतदुक्तं भवति । होमं समाप्य ब्राह्मणपच्छौचाद्याच्छादनान्तं कृत्वा भोजनार्थो-दन्नादुद्धृत्य घृताक्तं कृत्वा पाणौ होमं कृत्वा भुक्तवत्स्वनाचान्तेषु पिण्डान्दत्त्वा स्वस्त्ययनं वाचयित्वा श्राद्धशेषं समापयेदिति । अथवा ब्राह्मणान्भोजयेदिदमनन्तरे कर्मणीत्युक्तम् । यच्चोक्तं पूर्वेद्युः कर्म तत्र च भोजयेदित्युक्तं द्रष्टव्यमित्यर्थः । इति-शब्दोऽत्र भोजनपरामर्शी । इदमष्टम्यां भोजनं श्राद्धमित्युपदेशः शास्त्रान्तरे च दृश्यते । तस्माच्छ्राद्धमिति सिद्धम् ॥ १६ ॥ ४ ॥

अपरेद्युरन्वष्टक्यम् ॥ १ ॥

अपरस्मिन्नहनि नवम्यामन्वष्टक्यं नाम कर्म कार्यमित्यर्थः ॥ १ ॥

तस्यैव मांसस्य प्रकल्प्य दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रि-त्योत्तरतः परिश्रितस्य द्वारं कृत्वा समूलं बर्हिस्त्रिरपसलैर(लव्य)-विधून्वन्परिस्तीर्य हवींष्यासादयेदोदनं कृसरं पायसं दधि मन्थान्मधुमन्थांश्च ॥ २ ॥

योऽष्टम्यां पशुः कृतस्तस्यैव मांसं ब्राह्मणभोजनार्थं प्रकल्प्य संस्कृत्येत्यर्थः । भोजनार्थत्वं तु शास्त्रान्तरादवगतम् । दक्षिणाप्रवण इति प्राक्प्रवणनिवृत्त्यर्थम् । उपसमाधायेति व्याख्यातम् । अग्नेस्तिरस्करण्यादिभिः परिश्रित्योत्तरतो द्वारं

१ च. 'यै: । पृ' ।

करोति । पुनः परिश्रितस्येति वचनं परिश्रयणस्यानित्यत्वज्ञापनार्थम् । अत्रापि पिण्डपितृयज्ञकल्पोऽस्ति । तत्र विशेषमाह—उभौ परस्तीर्येत्यस्मिन्काले समूलं बर्हिर्गृहीत्वाऽपसव्ये(व्यै)रपवासिणमविधूवस्तकम्पर्यंस्तिः परिस्तृणीयात् । आचादपेदामित्यर्थे रंधाजीवाकमित्यस्मिन्काले एतानि पश्चाऽऽसादयेत् । एषां नित्ये श्रपणं कार्यम् । गृह्यकर्मणि सर्वत्र चरूणां नित्येऽग्नावेव श्रपणं कार्यं न तु लौकिके । अन्यत्र प्रतिषेधात् । अपवित्रैककपालं चेत्यत्र श्रपयित्वेति वचनस्य चरुवर्जितानां धानादीनां नित्याग्निश्रपणनिषेधपरत्वेनापि संभवात् । 'सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः । मधुमन्थाः प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तव.' ॥ उल्लेखनकाले द्वे लेखे लिखेत् । उभे च सकृदाच्छिन्नैरवस्तृणीयात् ॥ २ ॥

पिण्डपितृयज्ञकल्पेन ॥ ३ ॥

इदं कर्म पिण्डपितृयज्ञविधानेन कार्यमित्यर्थः । (+अग्निप्रणयनं पात्रं सोमायेत्यादिमन्त्रकौ । उपस्थानं प्रवहणं निनयायतिदिश्यते )॥ ३ ॥

हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात् ॥ ४ ॥

इध्माधानान्तं कृत्वा ब्राह्मणपच्छौचाद्याच्छादनान्तं कृत्वौदनादिभ्यश्चतुर्भ्योऽन्नमुद्धृत्य मधुमन्थवर्जं घृताक्तमनुज्ञाप्याग्नावाहुतिद्वयं हुत्वा मेक्षणमनुप्रहृत्य शेषनिवेदनान्तं कृत्वा पितृभ्यः पिण्डान्निपृणीयादित्यर्थः । पिण्डदाने मधुमन्था अपि ग्राह्याः ॥ ४ ॥

स्त्रीभ्यश्च सुरा चाऽऽचाममित्याधिकम् ॥ ५ ॥

मात्रे पितामह्यै प्रपितामह्यै च पिण्डान्निपृणीयात् । तत्र चौदनादिपञ्चभ्यः सुरा चाऽऽचामं चाधिकं भवतीत्यर्थः । पित्रादित्रयाणामेव पिण्डपितृयज्ञस्य दृष्टत्वात्तद्विधानं स्त्रीणां न प्राप्नोतीति कृत्वा पिण्डपितृयज्ञकल्पेनेत्येतदत्रानुवर्तनीयम् । [1]ओदनाग्रमवं प्राहुराचामं हि मनीषिणः । गौडी माध्वी च पैष्टी च सुरा तु त्रिविधा स्मृता ' ॥ अधिकवचनं पञ्चानामभावनार्थम् ॥ ५ ॥

कर्षूष्वेके द्वयोः षट्सु वा ॥ ६ ॥

द्वयोर्लिङ्गयोरुभयेषां पिण्डनिपरणमुक्तम् । कर्षूर्नामावटाः । कर्ष्वौ च कर्ष्वश्च कर्ष्वः । तास्वेके इच्छन्ति । यदा द्वे कर्ष्वौ तदाऽऽयते भवतः । यदा षट् तदा परिमण्डलाः । द्वयोरिति वचनात्कर्ष्वाविरित्येकशेषो लभ्यः ॥ ६ ॥

---

+ वर्तुलकंसस्थितो ग्रन्थः कसंज्ञकपुस्तके नास्ति ।

---

1 क °ना नि° ।

पूर्वासु पितृभ्यो दद्यात् ॥ ७ ॥

पूर्वा च लेखा पूर्वा च कर्षूः पूर्वाश्च कर्ष्वः । ताः पूर्वाः । एतदुक्तं भवति । द्विलेखाद्विकर्षूपट्कर्षूपक्षेपु पूर्वस्यां लेखायां पूर्वस्यां कर्ष्वां पूर्वासु कर्षूषु पितृभ्यो निपृणीयादिति ॥ ७ ॥

अपरासु स्त्रीभ्यः ॥ ८ ॥

पूर्ववदेकशेषः । अत्र किंचिद्वक्तव्यमस्ति । द्वे लेखे इत्युक्तम् । पितृषु च स्त्रीषु च पृथक्पृथङ् नवावरा अयुजो वा ब्राह्मणा भवन्ति । ' प्रकृतौ समर्थनिगमेषु ' ( श्रौ० ३ । २ )। यजुर्निगदेषु विकृतावूह उक्तः । तेन स्त्रीपात्रेषु तिलावपने *तिलोसीति मन्त्रे पितृशब्दस्योहो न कार्यः । प्रकृतावसमर्थत्वात् । पार्वणं हि तस्य प्रकृतिः ।* तत्र च पित्रादयस्त्रयोऽभिधातुमभिप्रेताः । न च पितृशब्दस्त्रीन्वक्तुं समर्थः । अथोच्यते । तत्रापि पितृपात्रमेवास्य प्रकृतिः । उत्तरे विकृती । पितृपात्रे च पितृशब्दः समर्थः । विभक्तिमात्रं त्वसमर्थम् । तेनोत्तरयोः पात्रयोः पितृशब्दस्य स्थाने पितामहप्रपितामहशब्दौ बहुवचनान्तौ वक्तव्याविति । एतदयुक्तम् । समानप्रकरणे प्रकृतिविकृतिभावो नास्तीति ज्ञापितमेतद्व्यक्तकेण ' राश्यायदेन । इति तु प्रणयेत् ' ( श्रौ० २ । २ ) इत्यत्र । तेन त्रिष्वपि पितृशब्द एव प्रयोज्य इति सिद्धम् । यथा तत्र कथंचिद्गौण्या लक्षणया वाऽन्यथा वा त्रीनाह तथैवात्रापि मातृरभिदध्यात् । तेनोहो न कार्यः । अथ तत्रोत्तरयोः पात्रयोरूहोऽभ्युपगम्यते । तर्हि ' शुन्धन्तां पितरः ' इत्यत्र त्रयाणां वचनमवार्थकं स्यात् । तस्मात्पितृशब्द एव सर्वदा प्रयोज्य इति सिद्धम् । ' शुन्धन्तां पितरः ' ( श्रौ० २ । ६ ) इत्यत्र तु विभक्तिमात्रमसमर्थम् । प्रकृतिस्तु समर्थैव । तेन तस्या ऊहः कार्यः । शुन्धन्तां मातरः शुन्धन्तां पितामह्यः शुन्धन्तां प्रपितामह्य इति । ' एतत्तेऽसौ ये च त्वा ' ( श्रौ० २ । ६ ) इत्यत्र यदि द्वे मातरौ स्यातां पितामह्यौ प्रपितामह्यौ वा तदाऽसावित्यत्र द्वयोरपि नामनी ब्रूयात् । यदा बह्व्यस्तदा बह्वीनामपि नामानि ब्रूयात् । तेशब्दस्य स्थाने द्वे मातरौ चेद्वावित्यूहः । बह्व्यश्चेद्व इत्यूहः । येशब्दस्य केचिदूहेन स्त्रीलिङ्गं कुर्वन्ति तद्विचार्यम् । एतत्ते तत ये च त्वामत्रान्वित्यस्यायमर्थः– हे तत, एतत्पिण्डरूपमन्नं तुभ्यं ये चान्येऽत्र त्वामनुयन्ति तेभ्यश्चेत्यर्थः । अनुयायिनश्च यदि स्त्रिय एव स्युस्तदोहो युज्यते । यदि पुमांस एव पुमांसश्च स्त्रियश्च वा तदा न युज्यते । 'पुमान्स्त्रिया'(पा०सू० १।२।६७) इति पुंस एकशेषात् । आचार्येणाप्युक्तम्—'पुंवन्मिथुने' ( श्रौ० ३ । २ ) इति । ' अनुयायिनश्च पुमांसश्च

१ क. °धेरेतद् ।

स्त्रियश्चेति प्रतिभाति ' इति बौधायनवचनात् । इत्थं हि तेन पिण्डदाने पठितो मन्त्रः—' एतत्ते ततासो ये ते मातामहा ये त आचार्या ये ते सखायो ये ते गुरवो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्चैतत्ताभ्यश्च स्वधा नमः ' इति । तेनोहो न कार्यः । आपस्तम्बेन तु ' एतत्ते मातरसौ याश्च त्वामत्रानु ' इति मन्त्रः पठित इति कृत्वा केचिदूहं कुर्वन्ति । तच्चिन्त्यम् । स्त्रीद्वित्वे युवामत्रानु बहुत्वे युष्मानत्रान्विति । अत्र पितरोऽमीमदन्त पितर इत्यत्र च पितृशब्दस्योहो न कार्यः । प्रकृतावसमर्थत्वात् । पिण्डपितृयज्ञो हि तयोः प्रकृतिः । तत्र च त्रयोऽभिधातुमभिप्रेताः । तस्मादनूहः । उभयपिण्डानां च सकृदेवानुमन्त्रणं कार्यम् । शक्यत्वात् । न पृथक् । 'असावभ्यङ्क्ष्वासावङ्क्ष्वेति' ( श्रौ० २।७ ) अत्र च स्त्रीद्वित्वे बहुत्वे चासौशब्दस्योहः । अभ्यञ्जाथाम्, अभ्यङ्ध्वम्, अञ्जाथाम्, अङ्ध्वमिति च यथार्थम् । स्त्रीणां पृथग्वासो दद्यात् । असंसर्गित्वात् । एतद्वः पितर इत्यत्रोहो न कर्तव्यः । असमर्थत्वादेव । मन्त्रावृत्तिरस्त्येव । पितृपिण्डान्स्त्रीपिण्डांश्च सकृदेवोपतिष्ठते । शक्यत्वात् । न पृथक् । अनूहश्च पूर्ववत् । 'मनोन्वाहुवामहे' इत्यादेश्चानूहः पूर्ववत् । ' तस्मादचं नोहेत् ' ( श्रौ० १ । ४ ) इति प्रतिषेधाच्च । प्रवाहणं चोभयपिण्डानां युगपदेव । शक्यत्वात् । अनूहश्च पूर्ववत् । ऋक्त्वाच्च । ' वीरं मे दत्त पितरः ' ( श्रौ० २ । ७ ) इति पितॄणां मध्यमपिण्डमादायानेनैव स्त्रीणामपि मध्यममाददीत । अनूहश्च पूर्ववत् । 'आवत्त पितरः' ( श्रौ० २ । ७ ) इति पिण्डद्वयं प्राशयेत् । अनूहश्च पूर्ववत् । ऋक्त्वाच्च । यत्र त्वृच्यूहमिच्छति तत्र विदधाति ' आत्मनि मन्त्रान्संनमयेत् ' ( ३ । ८ । ७ ) इति । ' इति मन्त्रे ' ( श्रौ० २ । १४ ) इति च । एवं निनयनवर्जं पितृशब्दस्योहो नास्तीत्युक्तम् । तत्र पर्युच्यते । ' पितृशब्दो बहुवचनान्तः पित्रादीन्स्त्रीनेव वक्ति । साहचर्यात् । यथा मित्रावितिवरुणावितिचोक्ते मित्रावरुणौ प्रतीयेते । साहचर्यात् । तद्वदत्रापि । मातॄश्च वक्तुं न शक्नोति । तत्साहचर्यस्य क्वचिदप्यदृष्टत्वात् । तस्मादूहः कार्य इति ' । तत्र ब्रूमः । असमर्थत्वादूहो नास्तीत्युक्तमेव । केवलमभिधानं संपादनीयम् । सपिण्डीकरणेन हि प्रेतत्वं निवर्त्य पितृत्वं नाम संस्कारविशेषः शास्त्रगम्यः प्राप्यते । तच्च मातृष्वप्यविशिष्टमिति मातृष्वपि भवत्ते पितृशब्दः । एवं च कृत्वैकोद्दिष्टे शास्त्रान्तरदृष्टः पितृशब्दप्रतिषेधोऽप्युपपन्नः । ऊहवादिनोऽतिप्रसङ्गश्चास्ति । मात्रादयस्त्रयोऽपि शब्दाः प्रसज्यन्ते । तथाप्येवं पुनरपि । मेध्यते बहुभिर्विद्भिर्विचार्य कार्यमित्यलमतिविस्तरेण ॥८॥

---

१ क 'ण्डांश्च ।

एतेन माध्यावर्षं प्रोष्ठपद्या अपरपक्षे ॥ ९ ॥

एतेनेति पूर्वेद्युःप्रभृति कृत्स्नकर्मातिदेशः । एतदुक्तं भवति । प्रोष्ठपद्याः समीपे योऽपरपक्षस्तत्राष्टम्यां माध्यावर्षं नाम कर्म कर्तव्यम् । तच्चैतेनाष्टकाकर्मणा व्याख्यातमिति । अत्रापि त्रिष्वहःसु कार्यमित्यर्थः ॥ ९ ॥

मासि मासि चैवं पितृभ्योऽयुक्षु प्रतिष्ठापयेत् ॥ १० ॥

अपरपक्ष इत्यत्रापि संबध्यते । मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च । तच्च पूर्वपक्षनिवृत्त्यर्थम् । एवमित्यकृत्स्नोपदेशार्थम् । तेनान्वष्टक्यमिहातिदिश्यते । अनन्तरत्वात् । पितृभ्य इति मातृनिवृत्त्यर्थम् । प्रतिष्ठापयेत् । कुर्यादित्यर्थः । एतदुक्तं भवति । प्रतिमासमपरपक्षेऽयुग्मासु तिथिष्वन्वष्टक्यवत्पितृभ्य एव श्राद्धं कुर्यादिति । समानकालत्वात्समानकार्यत्वाच्च पार्वणस्यास्य विकल्पः । एवं वा सूत्रच्छेदः । 'मासि मासि चैवं पितृभ्यः' । प्रतिमासमपरपक्षेऽन्वष्टक्यवत्पितृभ्य एव कुर्यादित्यर्थः । 'अयुक्षु प्रतिष्ठापयेत्' । श्राद्धकर्मणि सर्वमयुग्मासु संख्यासु प्रतिष्ठापयेत् । गन्धमाल्यादि सकृद्देयं त्रिः पञ्चकृत्वो वेत्यादि ॥ १० ॥

नवावरान्भोजयेत् ॥ ११ ॥

नवप्रसङ्गं प्रकृतं निवर्तयति । तेनान्वष्टक्ये नवावरान्भोजयेन्नियमेन ॥ ११ ॥

अयुजो वा ॥ १२ ॥

अशक्तौ प्रागप्ययुजो भोजयेत्सप्त पञ्च त्रीनेकं वा । सप्तपक्ष एकस्यैक इतरयोस्त्रयस्त्रयः । पञ्चपक्ष एकस्य त्रय इतरयोरेकैकः । इदं चान्वष्टक्य एव ॥ १२ ॥

युग्मान्वृद्धिपूर्तेषु ॥ १३ ॥

पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चाग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषय इत्येके । अन्ये षोडश संस्काराः श्रवणाकर्मादयश्च श्रौतानि चेत्याहुः । 'अनिष्ट्वा तु पितॄन्श्राद्धे वैदिकं कर्म नाऽऽरभेत्' इति स्मृतेः । वापीकूपतडागारामाद्युद्यापनादि पूर्तश्राद्धस्य विषयः । उभयत्र युग्मान्भोजयेत् ॥ १३ ॥

अयुग्मानितरेषु ॥ १४ ॥

पूर्वेद्युरष्टम्यां काम्य एकोद्दिष्ट इति चतुर्विधं विधिः । मासि मासि चेत्यत्रान्वष्टक्यवत् । पार्वणे तु वक्ष्यति । एवमन्यविधेष्वपि श्राद्धेषु ब्राह्मणपरिमाणमुक्तम् ॥ १४ ॥

प्रदक्षिणमुपचारो यवैस्तिलार्थः ॥ १५ ॥ ख० ५ ॥

वृद्धिपूर्तेष्विति शेषः । अत्र प्रदक्षिणमिति वचनादितरश्राद्धेषु प्रसव्यमुपचार

---

१ क ख °र्थः । से° । २ एवम् ।

इति गम्यते । तिलकार्ये यथाकुर्यात् । यज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदम् ॥ ११ ॥ ॥ १ ॥

**रथमारोक्ष्यमाणः पाणिभ्यां चक्रे अभिमृशेत् । अहं ते पूर्वे पादावाक्षमेद्बृहद्रथंतरे ते चक्रे ॥ १ ॥**

इतिकारोऽध्याहार्यः । त्रयाणां वर्णानामिदं समानं भवति । रथो नाम बहुयुगो मण्डलाकृतिः । यदा रथमारोहति गमनार्थं ततः पूर्वपक्षे चक्रे पाणिभ्यां नाना अभिमृशेन्मन्त्रेण । नानाग्रहणं युगपदेव दक्षिणेन दक्षिणं सव्येन सव्यमभिमृशेन्न पर्यायेणेत्येवमर्थम् । दूरदेशगमने स्वाम्य एवाऽऽरोहणेऽयं विधिर्नस्वर्थप्राप्त्यारोहणेषु ॥ १ ॥

**वामदव्यमस इत्यक्षाधिष्ठाने ॥ २ ॥**

अभिमृशेदिति वर्तते । पाणिभ्यां युगपच्चक्रनाभी अभिमृशेन्मन्त्रेण ॥ २ ॥

**दक्षिणपूर्वाभ्यामारोहेत् । वायोष्ट्वा वीर्येणाऽऽरोहामीन्द्रस्यौजसाऽऽधिपत्येनेति ॥ ३ ॥**

दक्षिणः पादः पूर्वो यतोस्तौ तथोक्तौ । एवंभूताभ्यामारोहेन्मन्त्रेण ॥ ३ ॥

**रश्मीन्संमृशेदराश्मिकान्वा दण्डेन । ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वः संगृह्णामीति ॥ ४ ॥**

रश्मयः प्रग्रहास्तान्स्पृशेत् । अथ यद्यश्वा अराश्मिकाः स्युस्तानेव दण्डेन स्पृशेत् । मन्त्रस्तूभयत्र समान एव । बहुवचनाद्बहुयुगो रथोऽत्राभिप्रेत इति गम्यते ॥ ४ ॥

**अभिप्रवर्तमानेषु जपेत् । सहस्रसनिं वाजमभिवर्तस्व रथदेव प्रवह वनस्पते वीड्वङ्गो हि भूया इति ॥ ५ ॥**

चशब्दोऽध्याहार्यः । सारथिना नोदिता अश्वा यदेष्टां दिशमभिगच्छन्ति तदा ' सहस्रसनिं ' ' वनस्पते ' इत्यृचं(चौ) जपेत् । एतावद्रथारोहणम् ॥ ५ ॥

**एतयाऽन्यान्यपि वानस्पत्यानि ॥ ६ ॥**

अभिमृशेदिति शेषः । अन्यान्यपि शकटप्रभृतीनि वानस्पत्यान्यारोक्ष्यन्नेतया तान्यभिमृशेत् । एतयेत्यभिप्राप्तस्यान्यान्यपीत्यायुत्तरसूत्रस्यैव शेषः स्यात् । तस्माद्योगविभागार्थमेतयेति वचनम् ॥ ६ ॥

**स्थिरौ गावौ भवतां वीळु रथ इति रथाङ्गमभिमृशेत् ॥ ७ ॥**

यद्यदङ्गमस्यामृचि दृष्टं तत्तदभिमृशेत् । गावौ । अक्षं, ईषा, युगं चेत्यर्थः । इदं चाभिमर्शनं शकटादिषु । न रथे । गावाविति लिङ्गात् । न हि रथस्य गोयुक्तत्वं द्विगोयुक्तत्वं च संभवति । तस्य बहुयुगत्वादश्वयुक्तत्वाच्च ॥ ७ ॥

सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम् ॥ ८ ॥

आरोहेदिति शेषः । आरुहेमेति मन्त्रलिङ्गात् । यदा यदा च नावमारोहत्युदकतरणार्थं तदा तदैतयाऽऽरोहेत् ॥ ८ ॥

नवरथेन यशस्विनं वृक्षं हृदं वाऽविदासिनं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥

नवरथेन यदा गच्छति तदाऽयं विशेषः । वानस्पत्यजपान्तं कृत्वेदमपि कुर्यात् । नवोऽनुपभुक्तः । यशस्वी यशसा युक्तः । अविदास्यशोष्यः । आम्रजम्ब्वादिशाखा आहरेत् ॥ ९ ॥

अन्यद्वा कौटुम्बम् ॥ १० ॥

अन्यद्वा कुटुम्बोपयोगि द्रव्यमाहरेत् । आहृत्य ततः ॥ १० ॥

संसदमुपयायात् ॥ ११ ॥

गृहसमीपमागच्छेदित्यर्थः ॥ ११ ॥

अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वाऽवरोहेत् ॥ १२ ॥

जपित्वा नवरथादवरोहेत् ॥ १२ ॥

ऋषभं मा समानानामित्यभिक्रामन् ॥ १३ ॥

एतत्सूक्तं गृहं प्रतिपद्यमानो जपेत् ॥ १३ ॥

वयमद्येन्द्रस्य प्रेष्ठा इत्यस्तं यात्यादित्ये ॥ १४ ॥

जपेदिति शेषः । तस्मिन्नेवाहनि ॥ १४ ॥

वद्बो दिवो दुहितरो विभातीरिति व्युष्टायाम् ॥ १५ ख० ॥ ६ ॥

जपेत् । त्रीण्येतानि प्रतीकानि मन्त्रसंज्ञकानि । तस्मादुपांशु स्युः । एतावान्नवरथे विशेषः ॥ १५ ॥ ६ ॥

अथातो वास्तुपरीक्षा ॥ १ ॥

उच्यत इति शेषः । उक्तोऽर्थः । अत शब्दो हेत्वर्थः । यस्माद्गृहनिमित्ते समृद्धिवृद्धी भवतस्तस्माद्वास्तुपरीक्षोच्यत इति । यद्येवं काम्यकर्माण्यनर्थकानि । न । एतदेवं न्यायविदः परिहरन्ति 'तचैव हि कारणं शब्दश्चेति' ॥ १ ॥

एवंलक्षणयुक्ते देशे वास्तु कार्यमित्याह—

अनूखरमविवादिष्णु भूम ॥ २ ॥

भूमशब्दो भूमिवाचकः । यथा 'यवं न वृष्टिर्व्युनत्ति भूम' इति । यत्र विवादो नास्ति तदविवादिष्णु ॥ २ ॥

---

१ ख. 'नूपर'।

ओषधिवनस्पतिवत् ॥ ३ ॥

मतुपो वकारश्छान्दसः । एवंविधं यद्भूमं तत्र वास्तु कार्यम् ॥ ३ ॥

यस्मिन्कुशवीरिणं समूलम् ॥ ४ ॥

तत्र कार्यम् ॥ ४ ॥

कण्टकिक्षीरिणस्तु समूलान्परिखायोद्वासयेदपामार्गः शाकतिल्वकः परिव्याध इति चैतानि ॥ ५ ॥

समूलान्परिखायोद्वासयेदिति वर्तते । अपामार्गादीनां पुंलिङ्गत्वादेतानीति वक्तव्य एतानीति नपुंसकवचनमन्यान्यप्येवंप्रकाराणि वास्तुविद्यायां निषिद्धान्युद्वास्यानीत्येवमर्थम् ॥ ५ ॥

यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वं समृद्धम् ॥ ६ ॥

यस्मिन्देश आपः सर्वाभ्यो दिग्भ्य आगत्य मध्यं प्राप्य ततः प्रदक्षिणं शयनीयं परीत्य प्राङ्मुख्यो गच्छेयुः । अप्रवदत्यः । नलोपः छान्दसः । अशब्दवत्य इत्यर्थः । एतल्लक्षणयुक्तं वास्तु विद्यावृत्तधनधान्यादिभिः सर्वैः समृद्धं भवति । एवं ब्रुवतैतत्प्रदर्शितं भवति । सर्वत उच्छ्रिता मध्यतो निम्नामीषच्च प्राक्प्रवणां भूमिं कृत्वा गृहं कुर्यात् । तत्र प्राच्यां दिशि गृहिणः शयनीयं गृहं कुर्यात् । शयनीयगृहस्योत्तरतोऽपां शनैः प्रदक्षिणं निर्गमनार्थं स्यन्दनिका कुर्यादिति ॥ ६ ॥

समवस्रवे भक्तशरण कारयेत् ॥ ७ ॥

येन पथाऽऽपो निर्गच्छन्ति स देशः समवस्रवः । प्राच्यां दिशीत्यर्थः । तत्र महानसं कारयेच्छयनीयस्योत्तरतः ॥ ७ ॥

ननु शाखान्तरे प्राग्दक्षिणस्यां दिशि भक्तशरणं दृष्टमतः कथं प्राच्यां दिशीत्याशङ्क्य प्रकृतस्य स्तुतिमाह—

बहन्नं ह भवति ॥ ८ ॥

ऋद्धिमद्भवतीत्यर्थः । तस्मादत्रैव कार्यम् ॥ ८ ॥

दक्षिणाप्रवणे सभां मापयेत्साऽद्यूता ह भवति ॥ ९ ॥

यत्र गृही स्वैरमास्ते स्वजनैरागन्तुभिश्च सह सा सभा । तां दक्षिणाप्रवणे कुर्यादुदीच्यां दिशीत्यर्थः । तत्र कृताऽद्यूता द्यूतवर्जिता भवति ॥ ९ ॥

दोषाश्च सन्तीत्याह—

युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति ॥ १० ॥

अत्र कृता चेद्युवान एव सन्तः प्रमायुका भवन्ति । अल्पायुषो म्रियन्त इत्यर्थः ।

१ क ध. °ता द्यू° । २ ख, °युक्ता अ° ।

कलहप्रियाश्च कितवाश्च भवन्ति । ननु द्यूतवर्जितत्वात्कथं कितवा इति । उच्यते । कितवा इति दम्भिन इत्यर्थः । तस्मात्तत्र न कार्या । शाखान्तरेऽविहितत्वादनूद्य प्रतिषिद्धवान् ॥ १० ॥

क्व तर्हि कार्येत्याह—

यत्र सर्वत आपः प्रस्यन्देरन्सा स्वस्त्ययन्यद्यूता च ॥ ११ ॥ख० ७॥

यस्मिन्देशे सर्वाभ्यो दिग्भ्य आप आगच्छन्ति तत्र कार्या सभा, गृहमध्य इत्यर्थः । सा शुभकर्यद्यूता च भवति ॥ ११ ॥ ७ ॥

अथैतैर्वास्तु परीक्षेत ॥ १ ॥

पूर्वलक्षणासंभवे प्रथमुत्तरेषां बलीयस्त्वं स्यादित्येवमर्थोऽथशब्दः । अथ विशिष्टान्येतानीति । वास्तुग्रहणं सभाधिकारनिवृत्त्यर्थम् ॥ १ ॥

जानुमात्रं गर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् ॥ २ ॥

गर्तो नामावट. । तैरेव तत उद्धृतैरेवं ॥ २ ॥

अधिके प्रशस्तं समे वार्तं न्यूने गर्हितम् ॥ ३ ॥

पूरिते गर्तादधिके पांसुराशौ प्रशस्तं वास्तु भवति । तेन समे वृत्तिमद्भवति । तस्मान्न्यूने गर्हितं कुत्सितं भवति । तस्मात्तत्र न कार्यम् ॥ ३ ॥

अस्तमितेऽपां सुपूर्णं परिवासयेत् ॥ ४ ॥

अस्तमिते तमेव गर्तमद्भिः पूरयित्वा तं राशिं परिवासयेत् । ततो व्युष्टायां निरीक्षेत ॥ ४ ॥

सोदके प्रशस्तमार्द्रे वार्तं शुष्के गर्हितम् ॥ ५ ॥

पूर्वेण तुल्यम् ॥ ५ ॥

श्वेतं मधुरास्वादं सिकतोत्तरं ब्राह्मणस्य ॥ ६ ॥

सिकतोत्तरं सिकताबहुलमित्यर्थ. ॥ ६ ॥

लोहितं क्षत्रियस्य ॥ ७ ॥

मधुरास्वादं सिकतोत्तरमिति वर्तते ॥ ७ ॥

पीतं वैश्यस्य ॥ ८ ॥

अत्रापि द्वय वर्तते । श्वेतं लोहितं पीतमिति त्रयो वर्णास्त्रयाणां वर्णानां विशेषाः । अन्यत्सर्वं समानम् ॥ ८ ॥

तत्सहस्रसीतं कृत्वा यथादिक्समचतुरस्रं मापयेत् ॥ ९ ॥

---

१ क. °थ प्रतिपरयेत्।

एवं परीक्षितं वास्तु बहुसीतं कुर्यात् । बहुशः सीतया कर्षयेदित्यर्थः । ततः सर्वासु दिक्षु समचतुरस्रं स्थण्डिलं कुर्यात् । चतुरस्रं चतुःकोणं मापयेत्कुर्यात् । सहस्रशब्दोऽत्र बहुवाची ॥ ९ ॥

आयतचतुरस्रं वा ॥ १० ॥

प्रागायतं चतुरस्रं वा कुर्यात् । आयतं दीर्घम् । तत्रैवं क्रमः—परिव्याय इति चेताभीत्यन्तां बाह्यवास्तुपरीक्षां कृत्वा तत आन्तरीं परीक्षामर्थैर्वास्तु परीक्षेतेत्या-द्यायतं चतुरस्रं वेत्यन्तां कृत्वा यत्र सर्वत्राऽऽपो मध्यं समेत्येत्यादि विज्ञेयम् । ततो वक्ष्यमाणं प्रोक्षणं कुर्यात् ॥ १० ॥

तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षति ॥ ११ ॥

'शं न इन्द्राग्नी' इति सूक्तं शन्तातीयमिति प्रसिद्धम् । तेन सूक्तेन त्रिः परिव्रजन्प्रोक्षति । सर्वत्र मन्त्रान्ते कर्मारम्भः । सिद्धं हि करणं भवति नासिद्धम् । परशुना छिनत्तीति परशुवत् । मन्त्रावृत्तिरुक्ता । 'मन्त्रान्ते व्रजनारम्भः प्राचीप्रारम्भ पर्येति' इति ॥ ११ ॥

अविच्छिन्नया चोदकधारया । आपो हि ष्ठा मयोभुव इति तृचेन ॥ १२ ॥

त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षति । अत्रापि धारावृत्तिस्तृचावृत्तिश्च । व्रजनगुणत्वात् ॥ १२ ॥

वंशान्तरेषु शरणानि कारयेत् ॥ १३ ॥

यावन्तस्तत्र वंशाः संभवन्ति तत्र द्वयोर्द्वयोर्वंशयोरन्तरेषु कुड्यादिभिः पृथक्कृत्या-पवरकादिशरणानि कारयेत् । शरणान्यवान्तरगृहाणि ॥ १३ ॥

गर्तेष्ववकां शीपालमित्यवधापयेन्नास्याग्निर्दाहुको भवतीति विज्ञायते ॥ १४ ॥

सर्वासां स्थूणानां गर्तेष्ववकां शीपालं चावदध्यात् । एवं कृते नास्याग्निर्दाहुको भवतीति श्रूयते ॥ १४ ॥

मध्यमस्थूणाया गर्तेऽवधाय प्रागग्रोदगग्रान्कुशानास्तीर्य व्रीहियवमतीरप आसेचयेत् । अच्युताय भौमाय स्वाहेति ॥ १५ ॥

---

१ क. ध. "यतच" । २ क. ध. "म् । सू" ।

अस्या गर्तेऽयं विशेषः ; अवकां शीपालं चावधाय कुशानास्तीर्य पश्चादासिञ्चेन्मन्त्रेण । अवधायवचनमवकाशीपालयोरवधानप्राप्त्यर्थम् ॥ १५ ॥

अथैनामुच्छ्रियमाणामनुमन्त्रयेतेहैव तिष्ठ निमिता तिल्वला स्तादिरावती मध्ये पोषस्य तिष्ठन्तीम् । आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आ वत्सो जायतां सह । आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरयन्निति ॥ १६ ॥ ख० ८ ॥

मध्यमस्थूणां गर्ते आधीयमानामनुमन्त्रयेत मन्त्राभ्याम् ॥ १६ ॥ ८ ॥

वंशमाधीयमानम् ॥ १ ॥

अनुमन्त्रयेतेति वर्तते ॥ १ ॥

ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधाना इति ॥ २ ॥

अनेन मध्यमस्थूणाया उपर्याधीयमानं वंशमनुमन्त्रयेत । अन्ये तु प्रतिवंशमावृत्तिमिच्छन्ति ॥ २ ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत्पृथिव्या अधि संभवेति ॥ ३ ॥

चतस्रः शिलाः स्थापयित्वा तासु दूर्वा निधाय ततो मणिकं प्रतिष्ठापयेन्मन्त्रेण । मणिको नाम जलधारणार्थो भाण्डविशेषः ॥ ३ ॥

अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनिरामपबाधतामिति वा ॥ ४ ॥

अनया वा प्रतिष्ठापयेत् ॥ ४ ॥

अथास्मिन्नप आसेचयेत् । एतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु मोदमानः । इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्त्विति ॥ ५ ॥

अथ मणिकेऽपो निषिञ्चति पूरणार्थं मन्त्रेण ॥ ५ ॥

अथैनच्छमयति ॥ ६ ॥

एतद्वास्तुशान्तिं करोति ॥ ६ ॥

कथम् । इत्यमित्याह—

व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय पालाशेन शिरः प्रदक्षिणं परिव्रजन्प्रोक्षति ॥ ७ ॥

अप्सु हिरण्यमवधाय ताभिः प्रोक्षति ॥ ७ ॥

१ क ख. 'तैऽन्यो' । २ ख. 'द्रासु ग्राम्ये क' ।

अविच्छिन्नया चोदकधारया—आपो हि ष्ठा मयोभुव इति तृचेन ॥ ८ ॥

उक्तार्थे द्वे सूत्रे ॥ ८ ॥

मध्येऽगारस्य स्थालीपाकं श्रपयित्वा वास्तोष्पते प्रतिजानीह्य-स्मानिति चतसृभिः प्रत्यृचं हुत्वाऽग्निं संस्कृत्य ब्राह्मणान्भोज-यित्वा शिवं वास्तु शिवं वास्त्विति वाचयीत ॥ ९ ॥ ख०९ ॥

श्रपयित्वेति वचनमस्मात्स्थालीपाकात्प्रागस्मिन्गृहे पाकान्तरं न श्रपयितव्यमि-त्येवमर्थम् । भुक्तवतो ब्राह्मणान् 'शिवं वास्तु शिवं वास्त्विति भवन्तो ब्रुव-न्त्विति' वाचयीत । ते च तं 'शिवं वास्तु शिवं वास्तु' इति प्रत्यूचुः । उक्ता-र्थमन्यत् ॥ ९ ॥ ९ ॥

उक्तं गृहप्रपदनम् ॥ १ ॥

यदुक्तं गृहप्रपदनं 'प्रपद्येत गृहानहं सुमनस.' ( श्रौ० २ । ५ ) इत्यादि तदि-दानीमिहापि कार्यमित्यर्थः । अन्ये तु प्राहुः । यदुक्तं मणिकप्रतिष्ठापनादि शिवं वास्त्वित्यन्तं तद्गृहप्रपदनसंज्ञं भवति । किं सिद्धं भवति । मणिकस्थापनात्प्रागेव बीजानि स्थापयित्वा तूष्णीं प्रविशेदिति । अपि च—शास्त्रान्तरेण संस्कृतं विशीर्णं वा पुराणं गृहं संस्कृत्य प्रविशतो मणिकप्रतिष्ठापनादि सिध्यति ॥ १ ॥

बीजवतो गृहान्प्रपद्येत ॥ २ ॥

गृहानिति बहुवचनमाप इतिवत् । बीजवतः प्रपद्येतेत्येतावतैव सिद्धे गृहानिति वचनं यत्र गृहे प्रविशति शास्त्रान्तरसंस्कृतं विशीर्णं वा संस्कृत्य तत्राप्येवं प्रविशे-दिति । मणिकादिर्गृहप्रपदनान्तं तत्रापि कुर्यादित्यर्थः । तेन पूर्वस्यामप्यपि साध्वी ॥ २ ॥

क्षेत्र प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फल्गुनीभी रोहिण्या वा ॥ ३ ॥

फल्गुनीभिरित्यत्राप्युत्तराभिरित्येवं संबध्यते । तेन त्रीणि नक्षत्राणि । नित्य-कर्मणां द्रव्यसाध्यत्वाद्द्रव्यार्थं क्षेत्रं प्रकर्षयेत् । णिच्प्रयोगः स्वयं कृषिनिवृत्त्यर्थः । तथा चानापदि गौतमः 'कृषिवाणिज्ये वा स्वयंकृते' इति । मनुरपि—'ऋता-मृताभ्यां जीवेत मृतेन प्रमृतेन वा' ( म० ४ । ४ ) इति । 'प्रमृतं कर्षणं स्मृतम्' ( म०४।५ ) इति । अक्षसूक्ते चेयमेव वृत्तिरुक्ता 'अक्षैर्मा दीव्य कृषि-मित्कृषस्व' इति । प्रतिग्रहादयश्चापत्कल्पाः । त्रिषु नक्षत्रेषु कृषिं प्रारभेत ॥ ३ ॥

इदं च प्रारम्भदिवसे कुर्यादित्याह—

क्षेत्रस्यानु वा त्वं क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाऽज-

पेद्वा ॥ ४ ॥

क्षेत्रस्यानु वा तं देशं गत्वा तत्रोपलेपनादि कृत्वा जुहुयात् । जपेद्वेदं सूक्तं तत्रस्थ एव । पादग्रहणेऽपि सामर्थ्यात्सूक्तग्रहणम् । प्रत्यृचमिति व्याख्यातम् ॥४॥

गाः प्रतिष्ठमाना अनुमन्त्रयेत मयोभूर्वातो अभिवातूस्रा इति द्वाभ्याम् ॥ ५ ॥

भक्षणार्थमरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेताहरहरात्मीया अन्या वा । न नियमः ॥ ५ ॥

आयतीः । यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः । उप मैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः । दुहाना अक्षितं पयो मयि गोष्ठे निविशध्वं यथा भवाम्युत्तमो या देवेषु तन्वमैरयन्नेति च सूक्तशेषम् ॥६॥

भक्षयित्वा ग्रामं प्रत्यागच्छन्तीर्गा अनुमन्त्रयेताहरहर्यासामित्यृग्भ्यां सूक्तशेषेण च ॥ ६ ॥

आगावीयमेके ॥ ७ ॥

आयतीनामनुमन्त्रणे 'आ गावो अग्मन्' इत्येतत्सूक्तमेक इच्छन्ति । पूर्वासामनेन बाधः ॥ ७ ॥

गणानासामुपतिष्ठेतागुरुगवीनां भूताः स्थ प्रशस्ता स्थ शोभनाः प्रियाः प्रियो वो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम् ॥ ८ ॥ ख० १० ॥

इत्याश्वलायनगृह्यसूत्रे द्वितीयोऽध्यायः ॥ २ ॥

---

आसां गवामगुरुगवीनां संघानुपतिष्ठेताहरहर्भूताः स्थेति । गुरोर्गावस्तासु तिष्ठन्ति चेन्नोपतिष्ठेत । सर्वत्र स्थित्वैवोपस्थेयम् । नोपविश्य । तथा चोक्तम्— 'उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम्' इति । शं मयि जानीध्वमिति सकृदेव वक्तव्यम् । अध्यायपरिसमाप्तिलक्षणार्थं हि द्विर्वचनम् ॥ ८ ॥ १० ॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ द्वितीयोऽध्यायः ॥ २ ॥

अथ तृतीयोऽध्यायः ॥

---

ॐ अथातः पञ्चयज्ञाः ॥ १ ॥

उक्तोऽर्थः । अतःशब्दो हेत्वर्थः । यस्मादेतैर्महतो निःश्रेयसस्यावाप्तिस्तस्मात्पञ्चयज्ञा नाम यज्ञा वक्ष्यन्त इत्यर्थः ॥ १ ॥

इमे त इत्याह—

देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति ॥ २ ॥

॥ २ ॥

तेषां स्वरूपमाह—

तद्यदग्नौ जुहोति स देवयज्ञो यद्बलिं करोति स भूतयज्ञो यत्पि-तृभ्यो ददाति स पितृयज्ञो यत्स्वाध्यायमधीयते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति ॥ ३ ॥

वैश्वदेवे त्रयो यज्ञा उक्तास्तत्र यदग्नौ जुहोति दशाऽऽहुतीः स देवयज्ञः । यद्बलिं करोति 'अथ बलिहरणम्' ( गृ० १ । २ । ३ ) इति स भूतयज्ञः । यत्पि-तृभ्यो ददाति 'स्वधा पितृभ्यः' ( गृ० १ । २ । ११ ) इति स पितृयज्ञः । यत्स्वाध्यायमधीते 'अथ स्वाध्यायविधिः' ( गृ० ३ । २ । १ ) इत्यनेन विधा-नेन स ब्रह्मयज्ञः । यन्मनुष्येभ्यो ददाति 'ततोऽतिथीन्भोजयेत्' इति स्मृतिवि-धानेन स मनुष्ययज्ञः । अपूर्वाणां विधाने सति तद्यदग्नौ जुहोतीति सिद्धवदुपदेशो नोपपद्येत । अग्नौ जुहुयादित्येवावक्ष्यत् । अथ शाखान्तरसिद्धानामनुवादस्तर्ह्यथ स्वाध्यायविधिरिति ब्रह्मयज्ञविधानमपार्थकं स्यात् । तस्यापि तत्र सिद्धत्वात् । अथ—इष्टतन्त्रपरिग्रहार्थो ब्रह्मयज्ञस्योपदेशः । न तद्युक्तम् । तन्त्रभेदस्यासिद्धत्वात् । पञ्च-यज्ञानां हि तैत्तिरीयारण्यकं मूलम् । 'पञ्च वा एते महायज्ञाः' इत्यादि । तन्मू-लत्वे च सति कथं तन्त्रभेदसंभवः । तस्माद्वैश्वदेवादय एव पञ्चयज्ञा इति सिद्धम् । मनुनाऽप्येवमेवोक्तं पितृयज्ञवर्जम् । पितृयज्ञं त्वन्यथोक्तवान् । 'एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके । न चैवात्राऽऽशयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन्' (मनु० ३। ८२–८३ ) इति ॥ ३ ॥

तानेतान्यज्ञानहरहः कुर्वीत ॥ ४ ॥ ख० १ ॥

अस्येदं प्रयोजनम् । भोजनार्थात्पाकात्प्रवृत्तिर्वैश्वदेवस्येत्युक्तम् । यस्याग्नौ न क्रियते न तद्भोक्तव्यमिति निषेधात् । अत एव चान्नसंस्कारार्थम् । तत्र यदा परान्नं भुङ्क्त उपवसति वा तदा संस्कार्यस्य पाकस्याभावात्संस्कारकर्मणोऽप्य-भावः स्यात्तन्निवृत्त्यर्थमिदम् । तेन पञ्चयज्ञार्थं सर्वथा पक्तव्यमेवेति सिद्धम् । अनेनाभ्युपायेन वैश्वदेवमपूर्वार्थमपीति साधितं भवति । अपि च सर्वथा पाकासंभवे पुष्पैः फलैरद्भिर्वा कुर्यादित्येवमर्थं च । उक्तं च 'आपन्न(न्न)मपि दातव्यम् । भाकाठ-

---

१ ख. 'रस्य क' ।

मपि जुहुयात् । आचम्यमपि ब्रह्मयज्ञं कुर्यात् ' इति । ' न चेदुत्पद्यतेऽन्नं तु अद्भिरेनान्समापयेत् ' इति च । अकरणे प्रायश्चित्तार्थं च । उक्तं च बौधायनेन—' एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि तु हीयते । मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥ द्व्यहं वाऽपि त्र्यहं वाऽपि प्रमादादकृतेषु तु । तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्जपेत् ॥ दशाहं द्वादशाहं वा विनिवृत्तेषु सर्वतः । चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमतश्चरुः ॥ ' इति । केचिदाशौचदिवसेष्वपि वैश्वदेवं कार्यमित्येवमर्थमिति व्याचख्युः । तदयुक्तम् । ' पञ्चयज्ञविधानं तु न कुर्यान्मृतजन्मनोः ' इति निषेधात् ॥ ४ ॥ १ ॥

अथ स्वाध्यायविधिः ॥ १ ॥

उक्तोऽर्थः । विधिग्रहणं विधिरेव वक्ष्यते न क्रम इत्येवमर्थम् । तेन वैश्वदेवस्य पुरस्तादुपरिष्टाद्वाऽध्येतव्यं न क्रमनियम इति सिद्धम् ॥ १ ॥

**प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी संधाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति । द्यावापृथिव्योः संधिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम् ॥ २ ॥**

वाशब्दद्वयमन्यस्यां वाऽनिन्दितायां दिशि कार्यमित्येवमर्थम् । बहिरसंभवे ग्रामेऽध्येतव्यमित्येवमर्थं च[1] । तथा च श्रुतिः—' ग्रामे मनसा स्वाध्यायमधीयीत ' इति । आप्लुत्येति । स्नात्वेत्यर्थः । आप इति वचनमपोऽवगाह्य स्नायादित्येवमर्थम् । शुचौ देश इति वचनं शुचौ देशे यत्र क्वाप्यधीयीत न तीरनियम इत्येवमर्थम् । यज्ञोपवीतिग्रहणं नियमेनात्र यज्ञोपवीती स्यादित्येवमर्थम् । तेन दहनकर्मणि प्राचीनावीतित्वं सिद्धम् । आचम्येति वचनं धर्माङ्गाचमनविधानार्थम् । अक्लिन्नवासा इति । अनार्द्रवासा भवेत् । ततः प्राक्कूलानां दर्भाणां महदुपस्तीर्य तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी पवित्रवन्तौ संधायेति । महदिति । बह्वित्यर्थः । प्राक्कूलानाम् । प्रागग्राणामित्यर्थः । प्राङ्मुख इति वचनं नियमेनात्र प्राङ्मुखः स्यादित्येवमर्थम् । तेनान्यत्र क्वचिदुदङ्मुखताऽपि सिद्धा । दक्षिणोत्तरेणोपस्थं कुर्यात् । अपेतृकत्वात् । दक्षिण उत्तरो ययोः पाण्योस्तौ दक्षिणोत्तरौ पाणी । पवित्रे व्याख्याते । सव्यं पाणिं प्रागङ्गुष्ठमुत्तानं विधाय तस्मिन्प्रागग्रे पवित्रे निधाय दक्षिणं पाणिं न्यञ्चं प्रागङ्-

---

1 क. ख. ग. । १ ख. "मेदित्येवमर्थः । च" ।

गुलिं तेन संदध्यादित्यर्थः । विज्ञायते श्रूयत इत्यर्थः । श्रुत्याकर्षः सर्वमिदं गृह्यशास्त्रं श्रुतिमूलमिति दर्शयितुम् । द्यावापृथिव्योः संधिमीक्षमाणौ नोर्ध्वमधस्तिर्यग्वेक्षेतेत्यर्थः । संमील्य वाऽक्षिणी । अन्येन वा येन प्रकारेणाऽऽत्मानं समाहितमनसं मन्येत तथा युक्तोऽधीयीत । न संवीक्षणसंमीलननियमः । स्वाध्यायवचनं सावित्र्या अपि स्वाध्यायधर्मसिद्ध्यर्थम् । तेन 'सावित्रीमन्वाह' ( गृ० ३ । २ । ४ ) इति सावित्र्या अनुवचने सत्यपि सामिधेनीधर्मः, ऐकश्रुत्यं, ऋगन्ते च प्रणवो न भवतीति सिद्धम् ॥ २ ॥

ॐपूर्वा + व्याहृतीः ॥ ३ ॥

प्रणवमादौ सकृदुक्त्वा ततस्तिस्रो व्याहृतीः समस्ता ब्रूयात् । प्रतिव्याहृति प्रणवशङ्का नैव कार्या । सकृदुक्तेनैव प्रणवेन ॐपूर्वत्वसिद्धेः । यथा 'अध्वर्युमुखाः' ( श्रौ० ९ । २ ) । ( श्रौ० ८ । १३ ) इत्यत्रैकेनैवाध्वर्युणा सर्वेऽध्वर्युमुखा भवन्ति । तद्वदत्रापि । पृथक्कल्पनायां प्रमाणाभावाच्च । ननु चतसृणां सूत्रे व्याहृतिसंज्ञा कृता । सत्यं कृता । होमे तु सा । न सर्वत्र । तेनात्र तिस्र एवेति सिद्धम् । 'भूर्भुवः स्वरित्येता वाव व्याहृतयः' इति श्रुतिः । अपि च तैत्तिरीयश्रुतिरेषां मूलमित्युक्तम् । तत्र चैवं श्रूयते—'ओमिति प्रतिपद्य भूर्भुवः सुवरित्याह । सावित्रीं गायत्रीं त्रिरन्वाह । पच्छोऽर्धर्चशोऽनवानम् । स्वाध्यायमधीयीत । नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति । तस्माद्यदुक्तं तत्सम्यक् ॥ ३ ॥

सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयम् ॥ ४ ॥ख०२॥

सर्वामिति । अनवानमित्यर्थः । तृतीयवचनमुपक्रमणेऽपि पच्छोऽर्धर्चशोऽनवानमित्येवं ब्रूयादित्येवमर्थम् ॥ ४ ॥ २ ॥

अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानीति ॥ १ ॥

अथशब्दः पूर्वेण संबन्धार्थः । तेन प्रणवादित्रयं स्वाध्यायस्याङ्गमिति सिद्धम् । स्वाध्यायवचनमृगादिरेव स्वाध्यायो न प्रणवादित्रयमित्येवमर्थम् । तेनर्चमपि ब्रह्मयज्ञं कुर्यादित्यस्मिन्पक्षे सावित्रीपर्यन्तमुक्त्वा, ऋचमधीयीत । ततो नम इत्येतया परिदध्यात् । तेन प्रणवादित्रयस्य परिधानीयायाश्च नित्यत्वं साधितं भवति । अधीयीतेति

+ व्याहृतय इति वैदिकानां पाठः ।

१ ख. 'ण इति नो' । २ ग. 'कृदुक्ते' । ३ क. घ. 'यं त्रिर्'।

ध्ययनमत्वाद्यधिकारनिवृत्त्यर्थम् । तेनानुप्रवचनधर्मो न भवति । सूत्राण्येव कल्पा इत्युच्यन्ते । नन्वनित्यानां सूत्राणां नित्यश्रुत्योपदेशो न घटते । नन्वनित्यस्य पशोः पशुना यजेतेति विधिर्न घटते । अथ तत्राऽऽकृतेर्नित्यत्वादुपपद्यते । तदत्राप्यविशिष्टम् । सर्वकल्पेषु कल्पत्वं नामानुवृत्तं नित्यमस्ति । गाथा नाम ऋग्विशेषा इन्द्रगाथादयः । 'यदिन्द्रो दाशराज्ञे' इति इन्द्रगाथाः पञ्चर्चः । नाराशंस्यश्च ऋच एव 'इदं जना उपश्रुत' इत्यादयः । ऋक्त्वादेव सिद्धे पुनर्वचनं फलविशेषसिद्ध्यर्थम् । इतिहासं भारतमाहुः । यत्र सृष्टिस्थित्युत्पत्तिप्रलयाः कथ्यन्ते तत्पुराणम् । अनित्यचोद्यं पूर्ववत् ॥ १ ॥

> यदृचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि मध्वाहुतिभिर्यदथर्वाङ्गिरसः सोमाहुतिभिर्यद्ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानित्यमृताहुतिभिः ॥ २ ॥

इह हि द्रव्योत्सर्गनिमित्तं फलं दृष्टम् । अतः स्वाध्यायमात्रेणापि फलमस्तीति श्रुतिमुपन्यस्यति ॥ २ ॥

ब्रह्मयज्ञाध्ययनेन देवतास्तृप्यन्तीत्युक्तम् । पितरश्च तृप्यन्तीत्याह —

> यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा उपक्षरन्ति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्वः कुल्या यदथर्वाङ्गिरसः सोमस्य कुल्या यद्ब्राह्मणानि कल्पान्गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः ॥ ३ ॥

स्वधेति पितॄणामन्नमुच्यते । पयसो नद्यः स्वधाभूताः पितॄनुपतिष्ठन्तीत्यर्थः । एवमुत्तरत्रापि नेयम् ॥ ३ ॥

ऋगादिदशकमध्येतव्यमित्युक्तम् । तत्र नियमेन दशानामध्ययने प्राप्त इदमुच्यते—

> स यावन्मन्येत तावदधीत्यैतया परिदधाति । नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति ॥ ४ ॥ ख० ३ ॥

स यावत्कालमेकाग्रमनसमात्मानं मन्येत तावत्कालमेवाधीयीत न दशाप्यध्येतव्या इति नियमः । सर्वथा समाहितमनसैवाध्येतव्यम् । नेयत्तानियम इत्यर्थः । एतयेतिवचनं सदैतया परिदध्यादित्येवमर्थम् । तेनास्यापि नित्यत्वं सिद्धम् । एषां च निर्वाच्या । प्रथमायां दृष्टत्वाच्छ्रुतिदर्शनाच्च ॥ ४ ॥ ३ ॥

---

१ क. ग. घ. देवास्तृ° । २ °त्याऽपि नि° ।

देवतास्तर्पयति प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि च्छन्दांस्योंकारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि संख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि ॥ १ ॥

परिधानानन्तरमेता देवतास्तर्पयत्युदकेन । तर्पणे तस्य प्रसिद्धत्वात् । प्रजापतिरित्यारभ्य एकोनत्रिंशद्वाक्येषु तृप्यतु तृप्यतां तृप्यन्त्विति यथार्थमुक्त्वा तर्पयेत् । एवमन्तानीति पृथङ्मन्त्र एव ॥ १ ॥

अथ ऋषयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति ॥ २ ॥

अनन्तरं शतर्चिप्रभृतीन्द्वादशर्षींस्तर्पयति । प्रत्यृषिवाक्यभेदः पूर्ववत् । ऋषिग्रहणं निवीतप्राप्त्यर्थम् । 'यज्ञोपवीतशौचे च' ( श्रौ० १ । १ । १० ) इत्यनेन निवर्तितत्वात् । तीर्थविशेषस्तु स्मृतित एव सिद्धः ॥ २ ॥

प्राचीनावीती ॥ ३ ॥

प्राचीनावीती भूत्वा वक्ष्यमाणांस्तर्पयति । अयमपि प्रतिप्रसव एव ॥ ३ ॥

सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेया गर्गीवाचक्नवी वडवाप्रातीथेयी सुलभामैत्रेयी कहोलं कौषीतकं महाकौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं सांख्यायनमैतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति ॥४॥

त्रयोविंशतिवाक्यानि । तत्र कहोळादिष्वर्थात्तर्पयामिशब्दः कार्यः । सर्वत्र प्रतिवाक्यं तर्पणं कुर्यात् । एकमन्त्राणि कर्माणीति न्यायात् ॥ ४ ॥

प्रतिपुरुषं पितॄंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥५॥

पितरं पितामहं प्रपितामहं च तर्पयित्वा गृहानेत्य यद्दात्यतिथिभोजनभिक्षादानादि सा ब्रह्मयज्ञस्य दक्षिणा भवति । यद्ददातीति सिद्धवदुपदेशात्तत्पूर्वं विधीयत इति गम्यते । अपूर्वविधाने सति गृहानेत्य दद्यादित्यवक्ष्यत् । सदक्षिणत्वं ब्रुवता सोमयागसाम्यं

१ ख. 'वीतिप्रा' ।

प्रदर्शितं प्रशंसार्थम् । उत्तरत्र च 'मेघोहविर्धानम्' इत्यादि प्रशंसा श्रूयते । प्रतिपुरुषवचनं पृथक्पृथक् तर्पयेत्र पितॄंस्तर्पयामीति सकृत्तर्पयेदित्येवमर्थम् ॥ ५ ॥

पूर्वोक्तोपवेशनासंभवेऽप्येवं वा ब्रह्मयज्ञं कुर्यादिति श्रुतिमेवाऽऽह—

अथापि विज्ञायते स यदि तिष्ठन्व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवतीति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

'न शयानोऽधीयीत नाढ्यम्' इत्यादिनिषेधो नित्यस्वाध्यायस्यैव न ब्रह्मयज्ञस्येति श्रुतिमेवाऽऽह—

विज्ञायते तस्य द्वावनध्यायौ यदाऽऽत्माऽशुचिर्यद्देशः ॥ ७ ॥ ख० ४ ॥

तस्य ब्रह्मयज्ञस्य द्वावेवानध्यायौ । यदाऽऽत्माऽशुचिः सूतकेन मृतकेन वा मलादिना वा । यदा च देशोऽशुचिरमेध्यादिना तत्रोभयत्रैवेत्यर्थः । कालस्त्वस्य श्रुतौ श्रूयते—'मध्यंदिने प्रबलमधीयीत य एवं विद्वान्महारात्र उषस्युदिते च' इति ॥ ७ ॥ ४ ॥

अथातोऽध्यायोपाकरणम् ॥ १ ॥

अध्ययनमध्यायस्तस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणम् । उक्तोऽर्थः । अतःशब्दो हेत्वर्थः । यस्माद्ब्रह्मयज्ञो नित्योऽतोऽध्यायोपाकरणं ब्रूम इति ॥ १ ॥

तस्य कालमाह—

ओषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य ॥ २ ॥

ओषधीनां प्रादुर्भावे सति श्रावणमासस्य श्रवणेन कर्तव्यम् । ओषधीनां प्रादुर्भाव इति वचनं यदा श्रावणे प्रादुर्भावो न स्यात्तदा भाद्रपदे श्रवणेन कर्तव्यमित्येवमर्थम् । वृद्ध्यपकर्षे कर्मापकर्षशङ्कैव नास्ति । यदा भाद्रपदादुत्कर्षो भवति तदाऽपि कर्मोत्कर्षशङ्का नैव कार्या । वार्षिकमितिसमाख्याबलात् । वर्षासु क्रियत इति वार्षिकम् । श्रावणभाद्रपदमासौ हि वर्षर्तुः । श्रावणे प्रादुर्भावाभावे कर्माकरणशङ्काऽप्यनेनैव निरस्ता । श्रवणेनेति । श्रवणेन युक्ते काल इत्यर्थः । 'नक्षत्रेण युक्तः कालः' ( पा० सू० ४ । २ । ३ ) इत्यनेनाण् । 'लुबविशेषे' ( पा० सू० ४ । २ । ४ ) इति तस्य लुप् । नक्षत्रे च लुपि' ( पा० सू० २ । ३ । ४५ ) इति सप्तम्यर्थे तृतीया । नक्षत्रशब्देषु सर्वत्रैवं योज्यम् ॥ २ ॥

पञ्चम्यां हस्तेन वा ॥ ३ ॥

---

१ ख. 'म् । 'क्रतुना तेनास्येष्टम्' इ' ।

अत्रापि श्रावणस्येति संबध्यते । मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च । श्रावणमासस्य पञ्चमी यदा हस्तेन युज्यते तदा वेत्यर्थः । इति कालत्रयमुक्तम् ॥३॥

आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयात् । सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्य ऋषिभ्यश्चेति ॥ ४ ॥

आज्यभागवचनं नित्यार्थम् । द्रव्यानादेशादेवाऽऽज्ये सिद्ध आज्याहुतिवचनमुत्सर्जनेऽप्येता नवाऽऽज्येनैव जुहुयान्नान्येनेत्येवमर्थम् । परिस्तरणविकल्पस्यासंभवात् ॥४॥

अथ दधिसक्तूञ्जुहोति ॥ ५ ॥

दधिमिश्रान्सक्तूनित्यर्थः ॥ ५ ॥

मन्त्रानाह—

अग्निमीळे पुरोहितमित्येका ॥ ६ ॥

एकाग्रहणं कुशुम्भकादिवद्द्व्यृचनिवृत्त्यर्थम् ॥ ६ ॥

कुशुम्भकस्तदब्रवीदावदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामं ते विश्वं भुवनमधिश्रितं गन्ता नो यज्ञं यज्ञियाः सुशमि यो नः स्वो अरणः प्रतिचक्ष्व विचक्ष्वाऽऽग्ने याहि मरुत्सखा यत्ते राजञ्छृतं हविरिति द्व्यृचाः ॥ ७ ॥

एते नव द्व्यृचाः ॥ ७ ॥

समानीव आकूतिरित्येका ॥ ८ ॥

एकाग्रहणं द्व्यृचानन्तरमियमेवैका न वक्ष्यमाणेत्येवमर्थम् ॥ ८ ॥

तच्छंयोरावृणीमह इत्येका ॥ ९ ॥

अत्र चैकाग्रहणं द्व्यृचानन्तरमियमेवैका न पूर्वेत्येवमर्थम् । एवमनयोर्विकल्पः शाकलसमाम्नायस्य बाष्कलसमाम्नायस्य चेदमेव सूत्रं गृह्यं चेत्यध्येतृप्रसिद्धम् । तत्र शाकलानां ' समानीव आकूतिः ' इत्येषा भवति । संहितान्त्यत्वात् । बाष्कलानां तु ' तच्छंयोरावृणीमहे ' इत्येषा भवति । संहितान्त्यत्वादित्येवं विनियोगो युक्तः ॥ ९ ॥

अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून्प्राश्य ततो मार्जनम् ॥ १० ॥

अध्यापयितव्यैरित्यर्थः । अध्याप्यैरन्वारब्ध इत्येतावतैव सिद्धेऽध्येष्यमाण इति वचनमध्याप्याभावेऽप्यध्येष्यमाणः स्वयमेव कुर्यादित्येवमर्थम् । ' वर्षासु

च्छन्दांस्युपाकृत्याधीयीरन्' इति श्रुतेः। पञ्चम्यां हस्तेने वाऽध्येष्यमाणोऽध्या-प्यैरन्वारब्ध आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयादित्येवं वक्तव्य एताभ्यो देवताभ्यो हुत्वेति वचनं सावित्र्यादिनवानामग्निमीळ आदिविंशतीनां च देवताग्रहणेन ग्रहणार्थम्। क। एताभ्यो देवताभ्योऽन्नेन हुत्वा, एता एव देवता इत्यत्र च। स्विष्टकृद्वचनं व्याख्यातं प्राक्। दधिसक्तुवचनमाज्यनिवृत्त्यर्थम्। 'परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनम्' (श्रौ० १।७)। प्राशनादि वेदारम्भणान्तं शिष्याणामपि कार्यम्॥ १०॥

अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान्कृत्वा ब्रह्माञ्जलिकृतो जपेत्॥ ११॥

पश्चादग्नेः प्रागग्रेषु दर्भेषूपविशन्ति। ततः शरावादावुदकमासिच्य तत्र दर्भान्निदध्यात्। ततो ब्रह्माञ्जलिकृतो जपेत्। स्वयं शिष्यैः सह। सन्ति येते। जपतिचोदनायां गृह्यकर्मण्यनित्यमुपांशुत्वमिति ज्ञापयिष्यामः। तस्मादुच्चैरेव जपेत्। अध्यापनविरोधाच्च॥ ११॥

ॐपूर्वा + व्याहृतीः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत्॥ १२॥

पूर्वमोंकारम्। ततस्तिस्रो व्याहृतीः समस्ताः। ततः सावित्रीम्। एवमेतात्रितयं त्रिरभ्यस्य वेदादिमग्निमीळे इत्यारभ्य सूक्तमनुवाकं वाऽऽरभेत। चशब्दः प्रणवव्याहृतीनामभ्यासार्थः। अथ सर्वप्रायश्चित्तादि समापयेत्॥ १२॥

तयोत्सर्गे॥ १३॥

अत्रैतेनेत्यभावान्न कृत्स्नकर्मातिदेशः किंतु वेदारम्भणमात्रमतिदिश्यते। एताभ्यो देवताभ्योऽन्नेने हुत्वेति च प्रधानहोमः। तेन प्राशनमार्जने उत्सर्जने न भवत इति सिद्धम्॥ १३॥

षण्मासानधीयीत॥ १४॥

इदं वचनमुपाकृत्य, नियमेन षण्मासानधीयीत नोपरमेतेत्येवमर्थम्॥ १४॥

समावृत्तो ब्रह्मचारिकल्पेन॥ १५॥

ब्रह्मचारिधर्मैरित्यर्थः। स्वाध्यायकाले ये विहिता धर्मा मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयस्तैर्युक्तोऽधीयीत। समावृत्तस्य मेखलादयस्तु न भवन्ति। अस्वाध्यायधर्मत्वात्॥ १५॥

---

+ व्याहृतय इति वैदिकानां पाठः।

---

१ क. °म्। ए°। २ क ष. °न च। ३ क. प. °ने म।

यथान्यायमितरे ॥ १६ ॥

ब्रह्मचारिण इत्यर्थः । अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम् । इतरथा समावृत्तानामेवेति शङ्का स्यात् ॥ १६ ॥

जायोपेयेत्येके ॥ १७ ॥

समावृत्तो जायां गच्छेदित्येक आहुः ॥ १७ ॥

ऋतावेव गच्छेन्नानृताविस्याह—

प्राजापत्यं तत् ॥ १८ ॥

तद्गमनं प्रजापतित्वसिद्ध्यर्थं कार्यम् । प्रजोत्पत्त्यर्थमित्यर्थः । तदर्थं कार्यम् । नानृतावित्यर्थः । ऋतुगमनं सर्वथा कार्यमिति तेषामभिप्रायः । अगमने दोषश्रवणात् । 'ऋतुस्नाता तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' ( मनु० टी० ३ । ४५ पराशरः ) इति ॥ १८ ॥

वार्षिकमित्येतदाचक्षते ॥ १९ ॥

एतदुपाकरणमित्यर्थः । आचक्षत इति ब्रुवन्वैदिकीयं संज्ञा न पारिभाषिकीति दर्शयति । अन्वर्थसंज्ञेयमिति दर्शितं प्राक् ॥ १९ ॥

मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति ॥ २० ॥

मध्यमाष्टकाग्रहणं षण्मासान्तोपलक्षणार्थम् । तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः । शाखान्तरे चैवं दृश्यते । 'एताभ्यो देवताभ्यो हुत्वा सावित्र्यादिभ्य आज्यम्' इत्युक्तम् । अग्निमीळ इत्यादिभ्योऽन्नेन हुत्वा स्थालीपाकग्रहणमकृत्वाऽन्नेनेति यत्नेन ब्रुवन् गृहसिद्धमन्नं ग्राह्यमिति दर्शयति । ततः स्विष्टकृत् । ततो वेदारम्भणम् । ततो होमशेषं समाप्यापोऽवगाहन्त इत्यर्थः ॥ २० ॥

एता एव तद्देवतास्तर्पयन्ति ॥ २१ ॥

स्नात्वा सावित्र्याद्या अग्निमीळ इत्याद्याश्च विंशतिं तर्पयन्तीत्यर्थः । ऋग्देवता आदिश्य तर्पयेयुः । द्वितीयान्तं कृत्वा तर्पयामीत्येकोनत्रिंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः ॥ २१ ॥

आचार्यानृषीन्पितृंश्च ॥ २२ ॥

यच्च ब्रह्मयज्ञाङ्गं तर्पणमुक्तं तदेतदङ्गत्वेनेदानीमपि कार्यमित्यर्थः । चशब्दो देवतातर्पणसमुच्चयार्थः । तेन प्राजापत्याद्या अपि तर्प्याः । देवतास्तर्पयन्तीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम् । क्रमश्च तत्रोक्त एव ॥ २२ ॥

---

१ क ग 'भ्यो हु'।

एतदुत्सर्जनम् ॥ २३ ॥ ख० ५ ॥

अस्येयं संज्ञा । ततः षण्मासान्षडङ्गान्यधीयीत । षण्मासानधीयीतेत्यारभ्य, एवं मन्ता धर्मो ग्रहणाध्ययन एवेत्याहुरेके । अन्ये त्वविशेषेणेत्याहुः ॥ २३ ॥ ५ ॥

अथ काम्यानां स्थाने काम्याः ॥ १ ॥

त्रेतायां या इष्टयः 'पशावश्चाऽऽयुष्कामेष्टचाम्' इत्याद्याः 'वायव्यं श्वेतमालभेत भूतिकामः' इत्याद्याश्च तेषां स्थाने काम्याः पाकयज्ञाः कार्या इत्यर्थः । काम्यसोमस्थाने सोमो न कार्यः । सोमतन्त्रस्य गृह्येऽविधानात् ॥ १ ॥

तत्र द्रव्यमाह—

चरवः ॥ २ ॥

त्रेतायां ये पुरोडाशास्तेषां स्थाने चरवः कार्याः । पशुस्थाने तु पशुरेव कार्यः । समानजातीयस्यैव हि बाधो भवति । ओषधिसाम्यात् । न पशोः उक्तं च । बौधायनेन—'येऽमुत्र पुरोडाशास्त इह चरवः' इति । नामधेयेन होम इत्युक्तम् ॥२॥

तानेव कामानाप्नोति ॥ ३ ॥

अन्ये पाकयज्ञा आहिताग्नेरनाहिताग्नेश्च साधारणा इत्युक्तम् । काम्यास्त्वनाहिताग्नेरेव भवन्तीत्येवमर्थमिदं वचनम् ॥ ३ ॥

नैमित्तिकान्याह—

अथ व्याधितस्याऽऽतुरस्य यक्ष्मगृहीतस्य वा षळाहुतिश्चरुः ॥ ४ ॥

व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगः । यक्ष्मगृहीतः क्षयव्याधिगृहीतः । त्रिषु निमित्तेषु षडाहुतिर्नाम चरुः कार्यः । षडाहुतिरिति कर्मनामधेयम् । चरुग्रहणमाज्यनिवृत्त्यर्थम् ॥ ४ ॥

मुञ्चामि त्वा हविषा जीवनायकमित्येतेन ॥ ५ ॥

प्रत्यृचं पञ्चाऽऽहुतीर्हुत्वा स्विष्टकृतं षष्ठं कुर्यात् । अत्र हीनपादग्रहणमेव कथं न कृतम् । षष्ठमेतेनेति च न वक्तव्यं भवति । उच्यते । एतेनेत्यन्यसूक्तनिवृत्त्यर्थम् । क । शौनकेनोक्तं 'रक्षोघ्न. षडाहुतिः' इति तत्राप्यनेनैव सूक्तेन होतव्यमित्येवमर्थम् । ऐतरेयिभिस्तु 'ब्रह्मणाऽग्निः' इत्यनेन षडाहुतिराम्नातः । तच्च सूक्तं रक्षोहलिङ्गम् । तस्मात्तत्प्राप्नुयात्तन्निवृत्त्यर्थमेतेनेति वचनम् । प्रत्यृचमेव पञ्च हुत्वा स्विष्टकृतं षष्ठं कुर्यात् । सूक्तमेवाऽऽवर्त्य षडाहुतयो मा भूवन्नित्येवमर्थं पादग्रहणम् ॥ ५ ॥

स्वप्नमप्रमनोज्ञं दृष्ट्वाऽद्या नो देव सवितरिति द्वाभ्यां यच्च गोषु दुष्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत ॥ ६ ॥

अशुभं स्वप्नं दृष्ट्वा द्वाभ्यां पञ्चभिश्चोपतिष्ठेत ॥ ६ ॥

यो मे राजन्युज्यो वा सखा वेति वा ॥ ७ ॥

अनयैव वा पूर्वाभिर्वा सप्तभिरिति विकल्पः ॥ ७ ॥

क्षुत्वा जृम्भित्वाऽमनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति जपेत् ॥ ८ ॥

अमनोज्ञं दृष्ट्वाऽप्रियं प्रत्यक्षेण दृष्ट्वेत्यर्थः । षट्सु निमित्तेष्वेतां जपेत् ॥ ८ ॥

अगमनीयां गत्वाऽयाज्यं याजयित्वाऽभोज्यं भुक्त्वाऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा । इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पताम् । वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरममृतस्य केतुः स्वाहेत्याज्याहुती जुहुयात् ॥ ९ ॥

अगमनीयां गत्वेति । स्वभार्यां रजस्वलां गत्वा षष्ठ्यादिषु वा प्रतिषिद्धरात्रिषु गत्वा । अयाज्यो न्यस्तमार्त्विज्यमिति निषिद्धः । अभोज्यं लशुनादि गणिकान्नादि च । अप्रतिग्राह्यं शस्त्रं विषमित्यादि । अप्रतिग्राह्यं पुरुषद्रव्यं वा । अग्निचयनस्थं यूपं स्पृष्ट्वा च । तेषु पञ्चसु निमित्तेषु द्वाभ्यामेताभ्यां जुहुयात् । आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते ॥ ९ ॥

समिधौ वा ॥ १० ॥

आदध्यादिति शेषः ॥ १० ॥

जपेद्वा ॥ ११ ॥ ख० ६ ॥

जपपक्षे स्वाहाकारं त्यजेत् । प्रदानाभावात् ॥ ११ ॥ ६ ॥

अभ्याधितं चेत्स्वपन्तमादित्योऽभ्यस्तमियादप्रयतोऽनुपविशन्रात्रिशेषं भूत्वा येन सूर्य ज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत ॥ १ ॥

अभ्याधितं स्वपन्तं सन्तं यद्यभ्यस्तमियाद्रविस्ततो वाग्यतोऽनुपविशंश्च रात्रिशेषं स्थित्वा तत उदिते पञ्चभिरुपतिष्ठेत ॥ १ ॥

अभ्युदियाच्चेदकर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तराभिश्चतसृभिरुपस्थानम् ॥ २ ॥

---

१ ख. 'शलवि' । २ ख.'आलापु' ।

अथाधितं स्वपन्तं सन्तं विहितकर्मणाऽश्रान्तमकर्मश्रान्तमभ्युदियाच्चेत् । विहितकर्मणा श्रान्ते तु न भवति प्रायश्चित्तम् । अनभिरूपेणाविहितेन कर्मणा नृत्यादिना श्रान्तमभ्युदियाच्चेद्वाग्यतोऽनुपविशंश्चाह.शेषं स्थित्वाऽपरेद्युरुदित आदित्ये ' यस्य ते विश्वा ' इति चतसृभिरुपतिष्ठेत ॥ २ ॥

अथ नित्यकर्मोच्यते—

यज्ञोपवीती नित्योदकः संध्यामुपासीत वाग्यतः ॥ ३ ॥

यज्ञोपवीतीति व्याख्यातम् । नित्योदकः स्मृत्युक्तोदककर्मेत्यर्थः । अतो मार्जनादि कार्यम् । संध्यामुपासीत वाग्यतः । एतावत्संध्याद्वये समानम् ॥ ३ ॥

प्रतिसंध्यमित्थमुपासीतेत्याह—

सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मण्डल आनक्षत्रदर्शनात् ॥ ४ ॥

सायंकाल उत्तरापराभिमुखः । वायव्यभिमुख इत्यर्थः । तत्रापि नाञ्जसाभिमुखः । अपि त्वन्वष्टमदेशमभिमुखः । प्रतीच्यां दिशि य उत्तरो भागस्तदभिमुख इत्यर्थः । सावित्रीं जपेत् । इतः कालादारभ्य आ इतः कालात् ॥ ४ ॥

एवं प्रातः ॥ ५ ॥

एवमेव प्रातःकाल उपासीत ॥ ५ ॥

तत्र विशेषमाह—

प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ६ ॥

प्राङ्मुख इति वायव्यभिमुखत्वनिवृत्त्यर्थम् । तिष्ठन्नित्युपवेशननिवृत्त्यर्थम् । अतो ज्ञायतेऽविशेष उपवेशनं भवतीति । पूर्वावधिरस्त्वर्धास्तमितेषु नक्षत्रेषु । कुतः । पूर्वस्माद्विपरीतत्वात् । उत्तरावधिस्त्वत्रैवोक्तः ॥ ६ ॥

कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा ॥ ७ ॥

कपोतो रक्तपादः शुक्लवर्णोऽरण्यवासी । स यद्यगारमुपहन्यान्निषीदेत् । तस्मिन्पदं कुर्यादित्यर्थः । अगारसमीपं वाऽऽगच्छेत् । ततोऽनेन जुहुयात् । जपेद्वेदं सूक्तम् । प्रत्यृचं व्याख्यातम् ॥ ७ ॥

वयमु त्वा पथस्पत इत्यर्धर्चशो परिष्वन् ॥ ८ ॥

अर्धार्धे गर्च्छसनेन प्रत्यृचं जुहुयात् । जपेद्वेदम् । अत्र पादग्रहणेऽपि सामर्थ्यात्सूक्तग्रहणम् ॥ ८ ॥

१ ख. "च्छमेनं प्र"।

संपूपन्विदुषेति नष्टमधिजिगमिषन्मूल्हो वा ॥ ९ ॥

नष्टं वस्तु लब्धुमिच्छन्मार्गाद्धीनो वा जुहुयाज्जपेद्वेदम् ॥ ९ ॥

संपूषन्नध्वन इति महान्तमध्वानमेष्यन्प्रतिभयं वा ॥ १० ॥ ख० ७ ॥

महान्तमध्वानं गमिष्यन्नल्पमपि प्रतिभयं भयानकमध्वानमेष्यन्ननेन जुहुयाज्जपेद्वेदम् ॥ १० ॥ ७ ॥

अथैतान्युपकल्पयीत समावर्तमानो मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाऽऽचार्याय च ॥ १ ॥

उक्तोऽर्थः । उपकल्पयीतेतिशब्दोऽयं छान्दसः । समावर्तनं नाम संस्कारः । तेन संस्क्रियमाण इत्यर्थः । अर्थादेवोपकल्पने सिद्ध उपकल्पनवचनमात्मने चाऽऽचार्याय चैतान्येकादश द्रव्याण्युपकल्पयेदिति विधानार्थम् ॥ १ ॥

यद्युभयोर्न विन्देताऽऽचार्यायैव ॥ २ ॥

यद्युभयोर्न लभेत तदाऽऽचार्यायैव केवलायोपकल्पयेत् ॥ २ ॥

समिधं त्वाहरेदपराजितायां दिशि यज्ञियस्य वृक्षस्य ॥ ३ ॥

यज्ञियस्य वृक्षस्य याऽपराजिता दिक्ततो गृहीत्वाऽऽहरेत् । यज्ञियस्येति वचनं होमार्थेयं समिदिति ज्ञापयितुम् । तेन 'तिष्ठन्समिधमादध्यात्' (३ ८।११) इत्यत्रेमामादध्यादिति सिद्धम् ॥ ३ ॥

आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा ब्रह्मवर्चसकाम उपवाताम् ॥ ४ ॥

उपवातां शुष्कामित्यर्थः ॥ ४ ॥

उभयीमुभयकामः ॥ ५ ॥

आर्द्रशुष्कामित्यर्थः । एको भाग आर्द्रः । अपरो भागः शुष्कः ॥ ५ ॥

उपरि समिधं कृत्वा गामन्नं च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म कुर्वीत ॥ ६ ॥

आहृतां समिधमुपरि निदध्यात् । न भूमौ । ततो ब्राह्मणेभ्यो गां दक्षिणां दद्यात् । कर्माङ्गत्वेन भोजनं च देयम् । ततो गोदानोक्तं कर्मेहापि कुर्यात् । कर्मग्रहणं कर्मैव कुर्यान्नाऽऽप्लुत्य वाग्यत इत्यादिनियमाः कार्या इत्येवमर्थम् । इदं कर्म स्वयमेव करोति । समावर्त्यमान इत्यधिकाराद्दूरदर्शनाच्च ॥ ६ ॥

आत्मनि मन्त्रान्संनमयेत् ॥ ७ ॥

मन्त्रानात्मवाचकान्कुर्यादित्यर्थः । ऊह्यानि ब्रूमः— ='ओषधे त्रायस्व माम् । स्वधिते मा मा हिंसीः । वपतेदं ममाऽऽयुष्मान् । यथासं ते न म आयुषः' इत्यु- मयत्र । 'शिरो मुखं मा म आयुः प्रमोषीः' इति ॥ ७ ॥

एकक्लीतकेन ॥ ८ ॥

उन्मर्दनं कुर्वीतेति शेषः । करञ्जबीजस्य यत्रैकं बीजं तदेकक्लीतकम् । तत्पेषयित्वा तेनोन्मर्दनं कारयेत् ॥ ८ ॥

शीतोष्णाभिरद्भिः स्नात्वा युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्याश्मनस्तेजोऽसि चक्षुर्मे पाहीति चक्षुषी आञ्ज- यीत ॥ ९ ॥

प्रतिचक्षं मन्त्रावृत्तिः । द्विवचनस्य देवतापरत्वात् । सव्यं पूर्वमञ्जयित्वा ततो दक्षि- णमाञ्जयीत । 'सव्यं मनुष्या अञ्जते प्रथमम्' इति श्रुतेः । प्रतिचक्षुर्मन्त्रावृत्तिः ॥९॥

अश्मनस्तेजोऽसि श्रोत्रं मे पाहीति कुण्डले आवध्नीत ॥ १० ॥

अनेन कुण्डले आवध्नीत । सुवर्णकुण्डले इत्यर्थः । अत्र दक्षिणं पूर्वं पश्चात्स- व्यम् । मन्त्रावृत्तिरुक्ता ॥ १० ॥

अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेद्बाहू राजन्य उदरं वैश्य उपस्थं स्त्र्यूरू सरणजीविनः ॥ ११ ॥

पश्चादङ्गाणि । कुतः । अग्रेवचनात् । अनुलेपनं कुङ्कुमादि । बाहू राजन्योऽ- ग्रेऽनुलिम्पेत् । उदरं वैश्योऽग्रेऽनुलिम्पेत् । उपस्थं स्त्र्यग्रेऽनुलिम्पेत् । ऊरू सरण- जीविनोऽग्रेऽनुलिम्पेरन् । अयं विधिः सार्वत्रिकः । कुतः । स्त्रीविधानात् ॥ ११ ॥

अनार्तोऽस्यनार्तोऽहं भूयासमिति स्रजमपि वध्नीत न मालो- क्ताम् ॥ १२ ॥

मालेत्युक्तां स्रजमपि न बध्नीत ॥ १२ ॥

मालेति चेद्ब्रूयुः स्रगित्यभिधापयीत ॥ १३ ॥

यद्यज्ञानान्मालेति ब्रूयुस्ततः स्रगित्यभिधाप्य बध्नीत ॥ १३ ॥

देवानां प्रतिष्ठे स्थः सर्वतो मा पातमित्युपानहावास्थाय दिवश्छ- दासीति च्छत्रमादत्ते ॥ १४ ॥

उपानहौ चर्ममय्यौ ते आतिष्ठेत् । सकृन्मन्त्रः । द्विवचनात् । ततश्छत्रमादत्ते ॥ १४ ॥

= ( पा० १ । १७ । ८–९–१०–१२–१५ ) तत्रत्योऽयमतिदेशः ।

१ क. "न मणिकु" ।

वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहीति वैणवं दण्डम् ॥१५॥

आदत्ते ॥ १९ ॥

आयुष्यमिति सूक्तेन मणिं कण्ठे प्रतिमुच्योष्णीषं कृत्वा तिष्ठन्नसमिधमादध्यात् ॥ १६ ॥ ख० ८ ॥

आयुष्यमिति सूक्तग्रहणमायुष्यमित्येतावान्मन्त्र इति शङ्कानिवृत्त्यर्थम् । कुतः शङ्का । वाक्यस्य परिपूर्णत्वात् । आयुष्यमिति । आयुष्करमित्यर्थः । तेन 'नेजमेष' इत्यस्य लिङ्गत्वेऽपि सूक्तग्रहणं सिद्धम् । मणिः सुवर्णमयः । उष्णीषं कृत्वा । अहतेन वाससा शिरो वेष्टयित्वेत्यर्थः । तिष्ठन्ग्रहणमन्यत्राऽऽसीनस्य कर्माणि भवन्तीति ज्ञापनार्थम् ॥ ११ ॥ ८ ॥

स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी । इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम् । यदग्ने सेन्द्रस्य सप्रजापतिकस्य सऋषिकस्य सऋषि राजन्यस्यसपितृकस्य सपितृराजन्यस्य समनुष्यस्य समनुष्यराजन्यस्य साकाशस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतमिदमहमग्ने सर्वव्रतो भवामि स्वाहेति ॥ १ ॥

स्मृतं च मे अस्मृतं च मे तन्म उभयव्रतमिति द्वादशाप्येवमेवोक्त्वा ततो यदग्न इत्यादि यथासूत्रमित्येवमुपदिशन्ति । तत उपानहौ विसृज्य समिदाधानं कार्यम् । तथा च गौतमः—' सोपानत्क आसनाभिवादननमस्कारान्वर्जयेत् ' इति देवतानमस्कारस्यापि तावत्प्रतिषेधः किं पुनर्होमादीनाम् ॥ १ ॥

ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात् ॥ २ ॥

अत्र लिङ्गस्यापि ग्रहणं भवति । ' अपेतस्य समाम्नायस्य ' ( श्रौ० १ । १ ) इत्यत्र समाम्नायग्रहणस्य वितानविशेषणत्वात् । समाम्नायस्य विताने इति । कुत एतत् । सूत्रे लिङ्गाना पाठात् । इह च प्रतीकग्रहणात् । तस्मादृग्भिर्होम इति सिद्धम् । प्रत्यृचमिति व्याख्यातम् । आदध्यादिति प्रकृते पुनरादध्यादिति वचनं पूर्वस्याधिकारनिवृत्त्यर्थम् । तेनोपविश्याऽऽदध्यान्न तिष्ठन् । स्विष्टकृदादिहोमशेषं समापयेत् ॥ २ ॥

यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रीं वसेत् ॥ ३ ॥

यत्राऽऽस्मानं मधुपर्केण पूजयन्ति तत्रैतां रात्रिं वसेद्वसतिं कुर्यात् । कुत एतत् ।

स्नातकायोपस्थितायेति वचनान्मधुपर्केण पूजनमिति लब्धम् ॥ ३ ॥

अस्य कालमाह—

विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम् ॥ ४ ॥

विद्यान्ते गुरुमर्थेन निमन्त्रयते—' कमर्थमहं ते करवाणि ' इति । गुरुर्यमर्थमाह तं कृत्वा स्नानं करोति । अथवाऽनुज्ञातः स्नायात् । स्नानं समावर्तनमित्यर्थः । विद्यान्त इति व्याख्यातं प्राक् ॥ ४ ॥

तस्यैतानि व्रतानि भवन्ति ॥ ५ ॥

उपदेशादेव व्रतत्वे सिद्ध इदं वचनं नक्तं न स्नायामित्येवं संकल्पयेदित्येवमर्थम् ॥ ५ ॥

न नक्तं स्नायान्न नग्नः स्नायान्न नग्नः शयीत । न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् । वर्षति न धावेत् ॥ ६ ॥

न धावेदिति द्रुतगमनप्रतिषेधः ॥ ६ ॥

न वृक्षमारोहेन्न कूपमवरोहेन्न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येत ॥ ७ ॥

न संशयम् । अन्यांश्च प्राणसंशयान्नाभ्यापद्येत । यस्मादिदं श्रूयत इत्यर्थः । वर्षति न धावेदित्यादिप्रतिषेधोऽस्य प्राणसंशयाभ्यापादनप्रतिषेधत्वज्ञापनार्थः । अर्थसंशयाभ्यापादने न दोषः ॥ ७ ॥

महद्वै भूतं स्नातको भवतीति विज्ञायते ॥ ८ ॥ ख० ९ ॥

स्नातको हि महद्भूतमिति च श्रूयते । कथं पुनः स्नातकस्य महत्त्वम् । उच्यते—' देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च । गृहस्थः सेव्यते यस्मात्तस्माज्ज्येष्ठो गृहाश्रमी ॥ ' इति स्मृतेः ॥ ८ ॥ ९ ॥

गुरवे प्रसक्ष्यमाणो नाम प्रब्रुवीत ॥ १ ॥

समावृत्तः सन्निवत्स्यमाणः शिष्यः गुरोर्नाम प्रब्रूयादेवदत्तेति । गुरव इति चतुर्थी षष्ठ्यर्थे । यथाऽऽस्या इति ॥ १ ॥

इदं वत्स्यामो भो ३ इति ॥ २ ॥

तत्र एवं प्रब्रुवीत । इदंशब्दस्य स्थाने आश्रमं निर्दिशेत् । देवदत्त गार्हस्थ्यं वत्स्यामो भो इति । वत्स्याव इति द्विवचनपाठेऽर्थोऽनुपपन्नः ॥ २ ॥

उपांशूर्ध्वं नाम्नः ॥ ३ ॥

नाम्न ऊर्ध्वमुपांशुर्ब्रूयात् । गुरुनाम तूच्चैरेव ब्रूयादित्यर्थः ॥ ३ ॥

प्राणापानयोरुपांशु ॥ ४ ॥

ततः प्राणापानयोरुरुव्यचा इत्येतं मन्त्रमुपांशु ब्रूयाच्छिष्य इत्यर्थः । ननूत्तरत्र बह्वपत्यतो वृद्धो जपतीति तस्मादाचार्यस्योपांशु दृष्टत्वादस्याप्युपांश्वेव भविष्यत. उपांश्विति न वाच्यम् । उच्यते । जपतीतिचोदनायामुपांशुत्वमनित्यमिति ज्ञापनार्थमिदम् । तेन वेदारम्भण उच्चैःप्रयोगः सिद्धः । अथवोर्ध्वमित्यधिकारनिवृत्त्यर्थमिदम् । वेदारम्भणे तूच्चैस्त्वे(त्वे) कारणमन्यदप्युक्तमेव ॥ ४ ॥

आ मन्द्रैरिन्द्र हरिभिरिति च ॥ ५ ॥

एतं चोपांशु ब्रूयाच्छिष्यः ॥ ५ ॥

अतो वृद्धो जपति प्राणापानयोरुरुव्यचास्तया प्रपद्ये देवाय सवित्रे परिददामीत्यृचं च ॥ ६ ॥

अतो वृद्ध आचार्यो जपत्येतौ मन्त्रौ । अतो वृद्धो जपतीति वचनात्पूर्वं शिष्योऽप्येतौ मन्त्रौ जपतीति ज्ञायते । ऋचं चेत्या मन्द्रैरित्येतामित्यर्थः ॥ ६ ॥

समाप्यों शावस्वस्तीति जपित्वा महित्रीणामित्यनुमन्त्र्य ॥ ७ ॥

अतिसृजेदिति शेषः । समाप्येति वचनमाचार्य एवों भागिति मन्त्रं जपेदित्येवमर्थम् । जपित्वा ' महित्रीणामवोऽस्त्विति ' सूक्तेन शिष्यमनुमन्त्र्य वत्स्यपेत्यतिसृजेत् ॥ ७ ॥

एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते ॥ ८ ॥

प्रशंसेयं श्रुतिमूलत्वदर्शनार्था ॥ ८ ॥

वयसाममनोज्ञा वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेदेवीं वाचमजनयन्त देवा इति च ॥ ९ ॥

वयांसि पक्षिणः । अमनोज्ञा अप्रियाः ॥ ९ ॥

स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य ॥ १० ॥

मृगस्यामनोज्ञा वाचः श्रुत्वैतां जपेत् ॥ १० ॥

यस्या दिशो बिभीयात्तस्माद्वा तां दिशमुल्मुकमुभयतःप्रदीप्तं प्रत्यस्येत्मन्थं वा प्रसव्यमाक्रोडयाभयं मित्रावरुणा मह्यमस्तवर्चिषा शत्रून्दहन्तं प्रतीत्य मा ज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उपयन्तु मृत्युमिति संसृष्टं धनमुभयं समाकृतावित्ति मन्थं न्यञ्चं करोति ॥ ११ ॥ ख० १० ॥

---

१ ख. °व्यत्यत । २ ख. °पवो° ।

यस्या दिशो बिभीयाद्यस्माद्वा बिभीयात्पुरुषाद्ग्रामादन्यतो वा तां दिशं प्रत्युन्मयतःप्रदीप्तमुल्मुकं प्रत्यस्येदभयमित्यनेन । मन्थं वा प्रसव्यमालोड्य तां दिशमभिमुखं न्यञ्चं कुर्यात्संसृष्टमित्यनेन । मन्थं न्यञ्चमेव कुर्यान्न प्रत्यस्येदित्येवमर्थं पुनर्मन्थग्रहणम् ॥ ११ ॥ १० ॥

सर्वतोभयादनाज्ञाताद्दष्टावाज्याहुतीर्जुहुयात्पृथिवी वृता साऽग्निना वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । अन्तरिक्षं वृतं तद्वायुना वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । द्यौर्वृता साऽऽदित्येन वृता तया वृतया वर्त्र्या यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद्भयाद्बिभेमि तद्वारये स्वाहा । सर्वं वृतं तद्ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद्भयाद्बिभेमि तद्वारये स्वाहेति ॥ १ ॥

यदि सर्वतो दिग्भ्यो भयमुत्पद्यते । न च ज्ञायतेऽस्मात्पुरुषादिति । तत्सर्वतोभयमज्ञातम् । तस्माद्यदि बिभीयात्ततो लौकिकाग्नावष्टावाज्याहुतीर्जुहुयात्पृथिवीवृतेत्याद्यैः । अष्टौवचनमाज्यभागस्विष्टकृन्निवृत्त्यर्थम् । आज्याहुतिवचनं परिस्तरणविकल्पार्थम् ॥ १ ॥

अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यत इन्द्र भयामह इति च सूक्तशेषम् ॥ २ ॥ ख० ११ ॥

स्वस्त्यात्रेयमिति स्वस्ति नो मिमीतामिति सूक्तं सखिलम् । ततः सर्वप्रायश्चित्तादि समापयेत् । एवमतिसृष्टस्य न कुतश्चिद्भयं भवतीत्युक्तम् । तत्र यद्यमनोज्ञा वाचः शृणुयाद्भयं वोत्पद्येत, तत एवं कुर्यादिति सर्वमिदमतिसृष्टविषयम् ॥ २ ॥ ११ ॥

संग्रामे समुपोढ्ले राजानं संनाहयेत् ॥ १ ॥

संग्रामे समुपोढ्ले समुपस्थिते राजानं संनाहयेत्पुरोहितो वक्ष्यमाणविधिना ॥१॥

आ त्वाऽहार्षमन्तरभूरिति पश्चाद्रथस्यावस्थाय ॥ २ ॥

जपेदिति शेषः । अत्र ऋषभं मा समानानामित्यत्र च पादग्रहणे सूक्तग्रहणं भवतीति ज्ञापितं च प्राक् ॥ २ ॥

जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् ॥ ३ ॥

अस्य सूक्तस्याऽऽद्यया कवचं प्रयच्छेद्राज्ञे ॥ ३ ॥

उत्तरया धनुः ॥ ४ ॥

प्रयच्छेदिति शेषः ॥ ४ ॥

उत्तरां वाचयेत् ॥ ५ ॥

राजानं वाचयेत् ॥ ५ ॥

स्वयं चतुर्थीं जपेत् ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

पञ्चम्येषुधिं प्रयच्छेत् ॥ ७ ॥

इषवो यत्र धीयन्ते स इषुधिः ॥ ७ ॥

अभिप्रवर्तमाने षष्ठीम् ॥ ८ ॥

यथेष्टां दिशमभिप्रवर्तमाने रथे षष्ठीं जपेत् । एवंविधो मन्त्रो मन्त्रसंज्ञः ॥ ८ ॥

सप्तम्याऽश्वान् ॥ ९ ॥

अनुमन्त्रयेतेति शेषः ॥ ९ ॥

अष्टमीमिषूनवेक्षमाणं वाचयति ॥ १० ॥

इषूनवेक्षमाणं राजानमष्टमीं वाचयेत् । १० ॥

अहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानम् ॥ ११ ॥

ज्याघातपरित्राणं तलमुच्यते । तलं नह्यमानं राजानमेतां वाचयेत् ॥ ११ ॥

अथैनं सारथमाणमुपारुह्याभीवर्तं वाचयति प्र यो वां मित्रावरुणेति च द्वे ॥ १२ ॥

सारथिना सारथमाणं राजानं रथं उपारुह्याभीवर्तेनेति सूक्तं वाचयेत् । प्रयो वामित्यृचौ च ॥ १२ ॥

अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः ॥ १३ ॥

एनं राजानमन्वीक्षेतैतैः सूक्तैः । 'आशुः शिशानः' इति सूक्तमप्रतिरथम् । 'शास इत्थेति' सूक्तं शासः ॥ १३ ॥

सौपर्णसूक्तानां बहुत्वाद्विशेषमाह—

प्रधारयन्तु मधुनो घृतस्येत्येतत्सौपर्णम् ॥ १४ ॥

एतत्सूक्तं सौपर्णं भवति । नान्यत् ॥ १४ ॥

---

१ क. ख. 'थ आह'।

सर्वा दिशोऽनुपरियायात् ॥ १५ ॥

अथ राजा सर्वा दिशो रथेनानुक्रमेण गच्छेत् ॥ १५ ॥

आदित्यमौशनसं वाऽवस्थाय प्रयोधयेत् ॥ १६ ॥

यस्यां दिश्यादित्यस्तां दिशमास्थायाहनि चेत् । रात्रौ चेद्यस्यां दिशि शुक्रस्तां दिशं परिगृह्य योधयेद्राजा । न प्रत्यादित्यं युध्येत । नापि प्रतिशुक्रमित्यर्थः ॥१६॥

उपश्वासय पृथिवीमुत द्यामिति तृचेन दुंदुभिमभिमृशेत् ॥ १७ ॥

राजा ॥ १७ ॥

अवसृष्टा परापतेतीषून्विसर्जयेत् ॥ १८ ॥

राजा ॥ १८ ॥

यत्र बाणाः संपतन्तीति युध्यमानेषु जपेत् ॥ १९ ॥

पुरोहितः ॥ १९ ॥

संशिष्याद्वा संशिष्याद्वा ॥ २० ॥ ख० १२ ॥

इत्याश्वलायनगृह्यसूत्रे तृतीयोऽध्यायः ॥ ३ ॥

अथवा राज्ञे पुरोधा आचक्षीतैकस्मिन्काले ' इयमृक् तवेति ' । यथा—आ त्वाऽहार्षमिति सूक्तं पश्चाद्रथस्यावस्थाय ब्रूहि जीमूतस्येति कवचं गृहाणेत्येवमादि । अध्यायान्तलक्षणं द्विर्वचनम् ॥ २० ॥ १२ ॥

इत्याश्वलायनगृह्यसूत्रविवरणे नारायणीयायां वृत्तौ तृतीयोऽध्यायः ॥ ३ ॥

अथ चतुर्थोऽध्यायः ॥

ॐ आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् ॥ १ ॥

आहिताग्निं चेद्व्याधिरुपतपेत्पीडयेत्तदा सत्याहिताग्निरग्निभिः सह ग्रामान्निष्क्रम्य प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येद्गच्छेत् । गत्वा तत्रैव तावत्तिष्ठेद्यावदगदो भवति ॥ १ ॥

ग्रामकामा आग्नेय इत्युदाहरन्ति ॥ २ ॥

अग्नयो ग्रामकामा इति ब्रह्मवादिनः प्रवदन्ति । तस्मादुदवस्येत् ॥ २ ॥

ग्रामकामत्वे सत्यपि किमित्युदवस्येदित्याशङ्क्याऽऽह—

आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदं कुर्युरिति ह विज्ञायते ॥ ३ ॥

ग्राममागन्तुमिच्छन्तोऽथ एनमाहिताग्निमाशंसन्तेऽयमगदो भवेदिति । आशंसन्तश्चैनमगदमरोगं कुर्युरेवं ह श्रूयते । सर्वत्र श्रुत्याकर्षो गृह्यकर्म समुच्छिन्नश्रुतिमूलमिति दर्शनार्थः ॥ ३ ॥

**अगदः सोमेन पशुनेष्टयेष्ट्वाऽवस्येत् ॥ ४ ॥**

अगदोऽरोगः । सोमादिभिरिष्ट्वा ग्रामं प्रविशेत् । अथ कः सोमः कार्यः । अग्निष्टोमः । कुतः । सर्वसोमानां प्रकृतित्वात् । उक्तं च—'स एव हेतुः प्रकृतिभावः' ( श्रौ० १२ । १९ ) इति । कः पशुः कार्यः । ऐन्द्राग्नः । निरूढानां प्रकृतित्वात् । इष्टीनां पौर्णमासातिदेशोऽस्ति । 'सर्वत्र देवतागमे नित्यानामपायः' ( श्रौ० २ । १ ) इति ब्रुवताऽनागमेऽनपाय इत्यपि दर्शितं भवति । तेनेष्टौ पशौ च प्रकृता एव देवता इति सिद्धम् । तर्हीष्टौ तिस्रः प्रसज्येरन् । न । अग्नीषोमयोः स्थान इन्द्राग्नी इति ब्रुवताऽग्नेः स्थिरत्वं दर्शितम् । तेनाग्निरेव केवलो भवति । नान्ये द्वे । अत्र 'पूर्वाभाव उत्तरोत्तरम्' ( श्रौ०३।१४ ) कर्मेत्युपदिशन्ति ॥४॥

**अनिष्ट्वा वा ॥ ५ ॥**

ग्रामं प्रविशेत् ॥ ५ ॥

**संस्थिते भूमिभागं खानयेद्दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा ॥ ६ ॥**

अगदे सत्युक्तम् । अथ संस्थिते मृते सत्युच्यते । भूम्येकदेशं खानयेत् । आग्नेय्यां नैर्ऋत्यां वा ॥ ६ ॥

**दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ॥ ७ ॥**

खातं दक्षिणाप्रवणं खानयेत् । आग्नेयीप्रवणं वा ॥ ७ ॥

**यावानुद्बाहुकः पुरुषस्तावदायामम् ॥ ८ ॥**

यावत्परिमाण ऊर्ध्वबाहुकः पुरुषस्तावत्परिमाणं दीर्घं भवति खातम् ॥ ८

**व्याममात्रं तिर्यक् ॥ ९ ॥**

पञ्चारत्निमात्रं व्यामं भवति । तिर्यक्त्वा तावन्मात्रं भवेत् ॥ ९ ॥

**वितस्त्यवाक् ॥ १० ॥**

द्वादशाङ्गुलो वितस्तिः । तावन्मात्रमधस्तः कुर्यात् ॥ १० ॥

खातलक्षणमुक्त्वा तस्य देशमाह—

**अभित आकाशं श्मशानम् ॥ ११ ॥**

१ ख. 'न्' । अ' ।

श्मशानग्रहणेनात्र श्मशानद्वयं गृह्यते । कुतः । उत्तरत्र विशेषणादादहनस्य लक्षणं श्मशानस्येति । दहनदेशश्च श्मशानम् । संचित्य यत्रास्थीनि निधीयन्ते तच्च श्मशानम् । तद्द्वयं सर्वत आकाशं भवेत् । अभित आकाशमिति ब्रुवता मध्ये तदनाकाशं भवेदिति ज्ञाप्यते ॥ ११ ॥

बहुलौषधिकम् ॥ १२ ॥

तदुभयं बहुलौषधिकं भवेत् ॥ १२ ॥

कण्टकिक्षीरिणास्त्विति यथोक्तं पुरस्तात् ॥ १३ ॥

कण्टकिक्षीरिणास्त्विति यथोक्तं वास्तुपरीक्षायां तथेहापि कुर्यात् । कण्टक्यादीनि पडुद्वासयेत् । उभयश्मशानेऽपीत्यर्थः ॥ १३ ॥

यत्र सर्वत आपः प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य ॥१४॥

यस्मिन्देशे सर्वत्राऽऽपो गच्छन्ति तदादहनश्मशानस्य लक्षणम् । नास्थिनिधानश्मशानस्य । पूर्वाणि तूभयस्येत्युक्तम् । सर्वतो निम्नो मध्यत उच्छ्रितो यो देशः पूर्वोक्तलक्षणयुक्तश्च भवेत्तत्र खानयेदित्यर्थः ॥ १४ ॥

केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात् ॥ १५ ॥

केशश्मश्रुलोमनखानीति यदुक्तं पुरस्तात्सूत्रस्य षष्ठाध्याये दीक्षितमरणे तदिहापि कुर्यादित्यर्थः । तत्रैवमुक्तम्—' संस्थिते तीर्थेन निर्हृत्यावभृथे प्रेतालंकारान्कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति नलदमालां प्रतिमुञ्चन्ति । निष्पुरीषमेके कृत्वा पृषदाज्यं पूरयन्ति । अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यग्दशेनाविःपादम् ' ( श्रौ० ६ । १० ) नलदमं[1]मिपुर्केभ्यो विज्ञेयम् । मूलं पाशः । अग्रं दशा । प्राक्शिरसं प्रेतं शाययित्वा प्रेतं प्रोर्णुयुः । वासोऽग्रं पादतो यथा भवेदित्यर्थः । अवच्छेदं प्रेतस्य पुत्रा अमात्याः कुर्वीरन्निति । संगृह्णीयुरित्यर्थः ॥ १५ ॥

विगुल्फं बर्हिराज्यं च ॥ १६ ॥

विगुल्फं प्रभूतं बर्हिराज्यं च । उपकल्पयेदिति शेषः ॥ १६ ॥

दध्यन्यत्र सर्पिरानयन्त्येतत्पित्र्यं पृषदाज्यम् ॥१७॥ ख० १ ॥

अत्र प्रेतकर्मणि दधनि सर्पिरानयन्ति । एतत्पृषदाज्यं भवति । तच्च उपकल्पयेत् । आसेचनवन्ति पृषदाज्यस्येत्यत्रैतद्गृह्णीयात् । अत्रग्रहणं प्रेतकर्मणि सर्वत्रैतदेव पृषदाज्यं भवतीत्येवमर्थम् । तेन निष्पुरीषमेके कृत्वा पृषदाज्यस्य[2] पूरयन्तीत्यत्राप्यस्यैव पृषदाज्यस्य ग्रहणं सिद्धम् । आनयन्तीति बहुवचनं कर्तृनियमार्थम् ।

1 ख. 'न्ति । नलदम' । २ क. ग. 'दाज्यस्य पू'।

पित्र्यमिति। पितृकर्मसंबन्धि। एतत्—पित्र्यं पृषदाज्यमित्यर्थः। एवं ब्रुवता प्रेतकर्मापि पितृकर्मेत्युक्तं भवति। तेनास्मिन्कर्मणि प्राग्दक्षिणाभिमुखत्वं कर्मणां कर्तुणां च सिद्धम्। प्राचीनावीतित्वं च भगवता बौधायनेनाप्युक्तम्—किमु खलु प्राचीनावीतिना पितृमेधः कार्यो यज्ञोपवीतिना वेति। प्राचीनावीतिनेत्येव ब्रूयात्। 'पितॄणां वा एष मेधो देवानां वा अन्ये मेधा भवन्ति' 'निवीतिनस्त्वेवैनं वहेयुः'। इति। आग्नेयीं दिशं प्रस्तुत्य 'एषा हि पितॄणां प्राची दिगिति विज्ञायते' इति चोक्तम्॥ १७॥ १॥

अथैतां दिशमग्नीन्नयन्ति यज्ञपात्राणि च॥ १॥

यस्यां दिशि भूमिभागः खानितस्तां दिशं प्रत्यग्नीन्यज्ञपात्राणि च नयन्ति बान्धवाः॥ १॥

अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः॥ २॥

यज्ञपात्राणामन्वञ्चं पृष्ठमागतः प्रेतं नयन्ति। अयुजो विषमाः। अमिथुना स्त्रियः पुरुषाश्च न मिश्राः स्युरित्यर्थः। प्रवयसः। प्रगतवयसो वृद्धा इत्यर्थः। उपदेशादेव पृष्ठतोभावे सिद्धेऽन्वञ्चग्रहणं पूर्वत्रानियमज्ञापनार्थम्। तेनाग्नयो वा प्रथमं नीयेरन्यज्ञपात्राणि वेत्यनियमः सिद्धः॥ २॥

पीठचक्रेण गोयुक्तेनेत्येके॥ ३॥

एके गोयुक्तेन पीठचक्रेण शकटादिना प्रेतनयनं कार्यमित्याहुः॥ ३॥

अनुस्तरणीम्॥ ४॥

अत्राप्येकग्रहणं संबध्यते। मध्यगतत्वस्य विशेषाभावात्प्रयोजनवत्त्वाच्च। तेनानुस्तरण्यनित्या। वात्स्यायनेनाप्युक्तम्—'न वाऽस्थिसंदेहात्' इति। अनुस्तरणी कृता चेदस्थिसंचयनकाले कानि यजमानस्यास्थीनि कानि वाऽनुस्तरण्या इति संदेहः स्यात्। तस्मान्न भवतीत्यर्थः। प्रेतमनुस्तीर्यते या स्त्रीपशुः साऽनुस्तरणी। तामेक इच्छन्ति॥ ४॥

पशुविशेषमाह—

गाम्॥ ५॥

तामनुस्तरणीं गां कुर्यात्॥ ५॥

अजां वैकवर्णाम्॥ ६॥

अजां वा येन केनचिदेकेन वर्णेन युक्तां कुर्यात्॥ ६॥

कृष्णामेके॥ ७॥

इच्छन्ति ॥ ७ ॥

सव्ये बाहौ बद्ध्वाऽनु संकालयन्ति ॥ ८ ॥

पशोः सव्ये बाहौ रज्जुं बद्ध्वाऽनु प्रेतस्य पृष्ठतः संकालयन्ति नयन्ति बान्धवाः ॥ ८ ॥

अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥ ९ ॥

गच्छेयुरिति शेषः । प्रेतस्य पृष्ठतोऽमात्या बान्धवा अधो निवीतं येषां तेऽधोनिवीताः । अनुपरिकृतवासस[1]ः । यज्ञोपवीतानि चाधः कृत्वेत्यर्थः । प्रवृत्तशिखा विमुक्तकेशाः । ज्येष्ठप्रथमा इत्युच्यमाने सर्वेषां यो ज्येष्ठः स प्रथमः स्यादितरेषामनियमः स्यात् । तस्माद्यो यो ज्येष्ठः स स प्रथमो गच्छेत् । यो यः कनिष्ठः स स पृष्ठतो गच्छेदित्यानुपूर्वीसिध्यर्थमुभयवचनम् । एवंभूता गच्छेयुः ॥ ९ ॥

प्राप्यैवं भूमिभागं कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन्प्रोक्षत्यपेत वीत वि च सर्पतात इति ॥ १० ॥

एवं सर्वे भूमिभागं प्राप्य ततो दहनस्य कर्तोदकेन शमीशाखया त्रिरप्रदक्षिणमायतनं परिव्रजन्प्रोक्षति—अपेत वीतेत्यनया । मन्त्रावृत्तिरुक्ता ।आयतनं खातमित्यर्थः । अन्ये गर्तोदकेनेति पठन्ति । अयमर्थः—खातखननकाल उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्तं खात्वा तत्रापो निषिच्य[2] शवकां शैवालं चावधाय तदुदकेनेति । कर्ता तु स्मृतिगम्यः ॥ १० ॥

दक्षिणपूर्वे उद्धतान्त आहवनीयं निदधाति ॥ ११ ॥

दक्षिणपूर्वे देशे खातस्यान्त एकदेश आहवनीयं निदध्यात् । खाताद्बहिरित्येके । उत्तरत्राप्येवं ज्ञेयम् ॥ ११ ॥

उत्तरपश्चिमे गार्हपत्यम् ॥ १२ ॥

उद्धतान्ते निदधातीति वर्तते ॥ १२ ॥

दक्षिणपश्चिमे दक्षिणम् ॥ १३ ॥

द्वयं वर्तते ॥ १३ ॥

अथैनमन्तर्वेदीध्मचितिं चिनोति यो जानाति ॥ १४ ॥

अथशब्दः कर्मान्तरारम्भज्ञापनार्थः । तेन प्रणीता अस्मिन्काले चमसेन प्रणयेत् । अनुमन्त्रणदर्शनात् । अन्यत्तु तन्त्रं नेति वक्ष्यामः । अपि चास्मिन्काले

---

१ घ. °रिता°। २ क. घ. °नसमय उ°।

खाते हिरण्यशकलं निधाय तिलानवकीर्य तत इध्मचितिं चिनुयादित्युक्तत्वात् । अग्नीनां मध्ये खात इध्ममूतां चितिं दहनसमर्थां चिनोति कुशलो यो जानातीति कर्तृनियमः । एनमिति वचनमिदानीमेनं चिनुयादुपरिष्टाद्यार्थप्राप्तमपि कुशल एव चिनुयादित्येवमर्थम् ॥ १४ ॥

तस्मिन्बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन्प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाऽऽहवनीयमभिमुखशिरसम् ॥ १५ ॥

अथ कर्ता तस्मिंश्चितौ बर्हिरास्तृणाति । ततः कृष्णाजिनं चोर्ध्वलोमाऽऽस्तृणाति कर्तैव । क्त्वाप्रत्यये पूर्वकालतामात्रमेव विवक्षितं न समानकर्तृत्वमिति साधितं प्राक् । अथ तस्मिन्कृष्णाजिन उत्तरेण गार्हपत्यं प्रेतं नीत्वा तत आहवनीयमभिमुखशिरसं प्रेतं संवेशयन्ति बान्धवाः ॥ १५ ॥

उत्तरतः पत्नीम् ॥ १६ ॥

ततः प्रेतस्योत्तरतः प्रेतस्य पत्नीं संवेशयन्ति । शाययन्तीत्यर्थः । चितावेश उपवेश इति लिङ्गात् । एतावद्वर्णत्रयस्यापि समानम् ॥ १६ ॥

धनुश्च क्षत्रियाय ॥ १७ ॥

प्रेतः क्षत्रियश्चेद्धनुरप्युत्तरतः संवेशयन्ति ॥ १७ ॥

तामुत्थापयेद्देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्व नार्यभिजीवलोकमिति ॥ १८ ॥

अथ पत्नीमुत्थापयेत् । कः । देवरः पतिस्थानीयः । स पतिस्थानीय इत्युच्यते । अनेन ज्ञायते ' पतिकर्तृकं कर्म पुंसवनादि पत्यसंभवे देवरः कुर्यादिति ' । अन्तेवासी शिष्यः । स वा । यो बहुकालं दास्यं कृत्वा वृद्धोऽभूत्स वा ॥ १८ ॥

कर्ता वृषले जपेत् ॥ १९ ॥

जरद्दास उत्थापयितरि कर्ता मन्त्रं ब्रूयात् । अन्यदोत्थापयितैव ब्रूयात् ॥ १९ ॥

धनुर्हस्तादाददानो मृतस्येति धनुः ॥ २० ॥

धनुरित्यृचा धनुरुत्थापयेदपनयेदित्यर्थः । कः । देवरादिः ॥ २० ॥

उक्तं वृषले ॥ २१ ॥

कर्ता वृषले जपेदित्यर्थः ॥ २१ ॥

अधिज्यं कृत्वा संचितिमचित्वा संशीर्यानुप्रहरेत् ॥ २२ ॥ ख० २ ॥

अर्थप्राप्तं यत्प्रेतस्योपरि संचयनं तस्मिन्काले संचितेः प्रागधिज्यं कृत्वा धनुः—

---

१ घ. 'वेशय इ' ।

परिव्यं कृत्वा संधार्य मद्वत्वा क्षिपेत् । प्रेतस्योत्तरतश्चितावेवोपरि । संचितिस्तु-राप्ति होमानन्तरं कार्या । धनुःसंवेशनं धनुरपनयनं धनुरनुप्रहरणमिति क्षत्रियस्य विशेषः । अन्यत्सर्वं त्रयाणां समानम् ॥ २२ ॥ २ ॥

अथैतानि पात्राणि योजयेत् ॥ १ ॥

अथशब्दोऽस्मिन्काले कर्मान्तरास्तित्वज्ञापनार्थः । तेन हिरण्यशकलैः प्रेतस्य सप्तच्छिद्राणि शीर्षण्यान्यपिधत्ते । आस्यं नासिकाद्वयमक्षिद्वयं कर्णद्वयमिति । घृत-सिक्तांश्च तिलान्प्रेतेऽवकिरेत् । ततः पात्रयोजनम् । एतानीति विद्यमानानि निर्दि-श्यन्ते प्राकृतानि वैकृतानि च । तत्र प्राकृतानां पात्राणां यावज्जीवं धारणमस्ति । अग्निवत्सर्वकर्मशेषत्वात् । अन्याधान उत्पन्नानि प्राकृतानि । विकृतौ तु वरुणप्रघासा-दावुत्पन्नानां कर्मान्त उत्सर्गः । विकृतिमध्ये मृतश्चेत्तेषामपि योजनं कार्यम् । विनि-योगविधानसामर्थ्यादेव वैकृतानामपि ग्रावादीनां धारणं कार्यमित्याशङ्का न कार्या । विधानस्य कर्ममध्ये कृतार्थत्वात् । प्राकृतानां धारणे कारणमन्यदुक्तम् । तेन 'याव-न्ति पात्राणि विद्यन्ते प्राकृतानि वैकृतानि च । तावतां सर्वेषामेव योजनं कार्यम् । न पुनर्विनियोगविधानसामर्थ्याद्धारणं कार्यम् । अन्यतो धृतानां योजनमेव विधीयते' इति सिद्धम् ॥ १ ॥

दक्षिणे हस्ते जुहूम् ॥ २ ॥

योजयेदिति सर्वत्र संबन्धनीयम् । वरुणप्रघासादौ मृतश्चेज्जुहूद्वयमपि योजनी-यम् । एकवचनं तु दशापवित्रेण ग्रहं संमार्ष्टीतिवदविवक्षितम् ॥ २ ॥

सव्य उपभृतम् ॥ ३ ॥

एकवचनं पूर्ववत् ॥ ३ ॥

दक्षिणे पार्श्वे स्फ्यं सव्येऽग्निहोत्रहवणीम् ॥ ४ ॥

यथाऽग्निहोत्रं हूयते साऽग्निहोत्रहवणी ॥ ४ ॥

उरसि ध्रुवां शिरसि कपालानि दत्सु ग्राव्णः ॥ ५ ॥

सोममध्ये मृतश्चेत्तर्हि दन्तेषु ग्राव्णो योजयेत् । अन्यत्र स्वयमृथे त्यज्यन्ते । अत एव ज्ञायते—सोमयाजिनोऽग्निचितश्चैतदेव संचयानान्तं विधानं नाधिकमिति । यत्तु परैरुक्तम्—'चैत्यान्तं सोमयाजिनः' 'चित्यन्तमग्निचितः' इति । तदाचार्यस्य नेष्टम् । अत एव न प्रदर्शितम् । कात्यायनादिभिरपि तन्न विहितमेव । न बह्वृ-चैर्वाजसनेयिभिर्वा पुनर्दहनं लोष्टचितिर्वा स्वयमाचर्यते । बह्वल्पं वा स्वगृह्योक्तमिति वचनाच्च कार्यम् ॥ ५ ॥

---

१ फ. °न्तरसत्त्व° ।

नासिकयोः स्रुवौ ॥ ६ ॥

द्विवचनं विकृत्यपेक्षमध्वर्युकत्वादग्निहोत्रार्थं वा द्वितीयम् ॥ ६ ॥

भित्त्वा चैकम् ॥ ७ ॥

एकश्चेत्स्रुवस्तथा सति तं स्रुवं भित्त्वा नासिकाद्वये योजयेत् ॥ ७ ॥

कर्णयोः प्राशित्रहरणे ॥ ८ ॥

द्विवचनं पूर्ववत् ॥ ८ ॥

भित्त्वा चैकम् ॥ ९ ॥

पूर्ववदिदम् ॥ ९ ॥

उदरे पात्रीम् ॥ १० ॥

यस्यां हवींष्यासाद्यन्ते सा पात्री ॥ १० ॥

समवत्तधानं च चमसम् ॥ ११ ॥

यस्मिन्नुपह्वानार्थमवत्ता इडा धीयते स चमसः समवत्तधानः । तं चोदरे योजयेत् ॥ ११ ॥

उपस्थे शम्याम् ॥ १२ ॥

ऊर्ध्वोरूर्ध्वप्रदेश उपस्थः ॥ १२ ॥

अरणी ऊर्वोरुलूखलमुसले जङ्घयोः ॥ १३ ॥

यथासंख्यम् ॥ १३ ॥

पादयोः शूर्पे ॥ १४ ॥

इदमपि द्विवचनं विकृत्यपेक्षम् ॥ १४ ॥

छित्त्वा चैकम् ॥ १५ ॥

एकं चेच्छूर्पं छित्त्वा पादयोर्योजयेत् । अनिर्दिष्टानि तु पात्राण्यनियतकालान्य-नियतदेशानि च भवन्ति ॥ १५ ॥

आसेचनवान्ति पृषदाज्यस्य पूरयन्ति ॥ १६ ॥

यानि पात्राण्यासेचनवन्ति बिलवन्ति । पृषदाज्यधारणसमर्थानीत्यर्थः । तानि पृषदाज्यस्य पूरयन्ति । बहुवचनं कर्तुरनियमार्थम् । पूरयित्वा ततो योजयेत् । कुत एतत् । धर्मोत्पादने तथा दृष्टत्वात् ॥ १६ ॥

अमा पुत्रो दृषदुपले ॥ १७ ॥

दृषदुपले पुत्रोऽमा कुर्वीत । आत्मन उपयोगार्थं संगृह्णीयादित्यर्थः । तेन गृहा-न्आऽऽनयेदिति ॥ १७ ॥

---

१ क. घ. °धीयते स°। २ ख. °त्वा पूरयित्वा यो°।

लोहायसं च कौलालम् ॥ १८ ॥

संगृह्णीयात् । अन्यानि सर्वाणि यज्ञायुधानि योजयेत् ॥ १८ ॥

अनुस्तरण्या वपामुत्खिद्य शिरो मुखं प्रच्छादयेदग्नेर्वर्मपरिगोभि-र्व्ययस्वेति ॥ १९ ॥

वपामुत्खिद्य प्रेतस्य शिरो मुखं च प्रच्छादयेत्—अग्नेरित्यृचा । उत्खिदवचनमु-त्खेदनमेव कार्यं नान्यत्पाशुकं तन्त्रमित्येवमर्थम् । संज्ञपनं त्वर्थप्राप्तम् ॥ १९ ॥

वृक्का उद्धृत्य पाण्योरादध्यादतिद्रवसारमेयौ श्वानाविति दक्षिणे दक्षिणं सव्ये सव्यम् ॥ २० ॥

ततो वृक्कावुद्धृत्य प्रेतस्य पाण्योरादध्यात् । अतीत्यृचा । दक्षिणे पाणौ दक्षिणं वृक्कम् । सव्ये सव्यम् । सकृन्मन्त्रः ॥ २० ॥

हृदये हृदयम् ॥ २१ ॥

हृदयमुद्धृत्य हृदय आदध्यात्तूष्णीम् ॥ २१ ॥

पिण्ड्यौ चैके ॥ २२ ॥

एके पिण्ड्यौ च पाण्योरादध्यादित्याहुः । एवं वृक्कयोः पिण्ड्ययोश्च समु-च्चयः ॥ २२ ॥

वृक्कापचार इत्येके ॥ २३ ॥

एके वृक्काभावे पिण्ड्यावादध्यादित्याहुः । अनुस्तरणी नित्या चेद्वृक्कापचारो नोपपद्यते । तस्मादनित्येति मन्यामहे । अनुस्तरण्यपचार इति वक्तव्ये वृक्कापचार इति वचनं पिण्ड्ययोर्वृक्काधानस्थान आधानसिद्ध्यर्थम् । तेन पाण्योरिति सिद्धम् । अथ किंद्रव्यौ पिण्ड्यौ । अन्नपिण्ड्यावित्येके । सक्तुपिण्ड्यावित्यपरे । उक्तं च कात्यायनेन—अथ यदाऽनुस्तरणी नास्ति तदा सक्तुहवींषि तत्स्थाने कुर्यात् । पिण्ड्यग्रहणमुपलक्षणम् । तेन वपादि सर्वं पशुना कार्यं सक्तुभिरेव निर्वर्तयेदित्येके । अत्र पक्षे वपास्थानेऽपूपः । वृक्कस्थाने पिण्ड्यौ । अन्यान्यपि तत्तदङ्गसदृशानि सक्तुभिरेव कार्याणि ॥ २३ ॥

सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्येममग्ने चमसं मा विजि-ह्वर इति प्रणीताप्रणयनमनुमन्त्रयते ॥ २४ ॥

अनुस्तरण्याश्चर्म पृथक्कृत्य सर्वामिति वचनादखण्डितामेव यथाङ्गमिति प्रेतस्य यद्यदङ्गं पादादि तस्मिंस्तस्मिन्नङ्गे पशोरपि तत्तदङ्गं यथा भवेत्तथा विनिक्षिप्य-

१ ख. "ध तेषां मते च" ।

तस्या एव चर्मणा प्रच्छाद्य तत इममित्यृचा पूर्णं चमसमनुमन्त्रयते । यः पूर्वं निहितः ॥ २७ ॥

सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहुयादग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहाऽनुमतये स्वाहेति ॥ २५ ॥

सव्यमिति दक्षिणनिवृत्त्यर्थम् । तज्जानु निपात्य दक्षिणाग्नावाज्याहुतीर्जुहुयाच्चतुर्भिः । जानुनिपातनमुभयोश्चानयोराविशेषेण कर्तव्यं सर्वत्रान्यामावे वचनादिना गृह्यकारेण दोषस्योक्तत्वात् । आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते । होमार्थश्चान्यः स्रुवः कार्यः । पूर्वस्य योजितत्वात् ॥ २५ ॥

पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयं त्वदधिजायतामसौ स्वर्गाय लोकाय स्वाहेति ॥ २६ ॥ ख० ३ ॥

प्रेतस्य हृदये पञ्चमीमाहुतिं जुहुयादस्मादिति मन्त्रेण । पञ्चमीमिति वचनमिमामपि जान्वाच्य जुहुयादित्येवमर्थम् । प्रेतग्रहणमनर्थकं पश्यामः । यथा दक्षिणे हस्ते जुहूमित्युक्ते प्रेतस्येति गम्यते । प्रेताधिकारात् । एवमिहापि गम्यतेव । उच्यते । प्रेतग्रहणं सर्वस्यापि प्रेतस्येमां पञ्चमीं जुहुयान्नाऽऽहिताग्नेरेवेत्येवमर्थम् । एतदुक्तं भवति—'यस्य यस्य प्रेतस्य स्मृतौ दहनं विहितं तं प्रेतमनेन विधिना दहेदिति'। विशेषस्तूत्तरत्र वक्ष्यामः । असावित्यस्य स्थाने प्रेतस्य नाम संबुद्ध्या निर्दिशेत् ॥ २६ ॥ ३ ॥

प्रेष्यति युगपदग्नीन्प्रज्वालयतेति ॥ १ ॥

अथ परिकर्मिणः कर्ता प्रेष्यति युगपदेव सर्वानग्नीन्प्रज्वालयतेति । ते च तथा कुर्युः ॥ १ ॥

अत्र विज्ञापनमाह—

आहवनीयश्चेत्पूर्वं प्राप्नुयात्स्वर्गलोक एनं प्रापदिति विद्याद्राऽस्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ २ ॥

आहवनीयश्चेदाहिताग्निशरीरं प्रथमं प्राप्नुयात्स्वर्गे लोक एनमाहिताग्निं प्रापयेदिति जानीयात् । रात्स्यति ऋद्धिमाप्स्यति । असावाहिताग्निरमुत्र स्वर्गे । एवमयं पुत्रोऽस्मिन्मनुष्यलोक ऋद्धिं प्राप्स्यतीति विद्यात् । एवमुत्तरत्रापि योज्यम् । अनेनानुष्ठितस्य कर्मणः फलविज्ञानमुक्तम् । न तु पूर्वप्राप्तेरिदं फलम् ॥ २ ॥

गार्हपत्यश्चेत्पूर्वं प्राप्नुयादन्तरिक्षलोक एनं प्रापदिति विद्याद्रा-

१ ख. 'न्नयेत् । च' ।

स्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ३ ॥

गार्हपत्यस्य पूर्वप्राप्तावाहिताग्निरन्तरिक्षलोकं प्राप्य तत्र रंस्यति । पुत्रस्त्वस्मिन्निति विद्यात् ॥ ३ ॥

दक्षिणाग्निश्चेत्पूर्वं प्राप्नुयान्मनुष्यलोक एनं प्रापदिति विद्याद्रास्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ४ ॥

दक्षिणाग्नेः पूर्वप्राप्तौ क्षिप्रमेवोत्पद्य महत्त्वं प्राप्नोति मनुष्यलोक आहिताग्निः । पुत्रश्चास्मिँल्लोके महत्त्वो भवतीति विद्यात् ॥ ४ ॥

युगपत्प्राप्तौ परामृद्धिं वदन्ति ॥ ५ ॥

यदि सर्वेऽग्नयो युगपच्छरीरं प्राप्नुयुस्तदाऽऽहिताग्नेर्विशिष्टे स्थानेऽत्युत्कृष्टामृद्धिं वदन्ति ब्रह्मवादिनः । पुत्राणां चास्मिँल्लोके परामृद्धिं वदन्ति ॥ ५ ॥

तं दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानम् ॥ ६ ॥

तं ग्रहणं तं प्रति कर्मान्तरमप्यस्तीति ज्ञापनार्थम् । तेन प्रेतं दत्त्वा स्त्रिभाता विलौकिकं कुर्यात् । दह्यमानं प्रेतमनुमन्त्रयते । प्रेहि प्रेहि पथिभिः पूर्व्यैरिति समानं प्रागुक्तेनानुद्रवणेन प्रेहि प्रेहि पथिभिरिति पञ्चानां तृतीयमुद्धरेत् । मैनमग्ने विदह इति षट् । पूषा त्वेतश्च्यावयतु प्रविद्वानिति चतस्रः । उपसर्पेति चतस्रः । सोम एकेभ्य इति पञ्च । ऊरूणसावसुतृपेति चतुर्विंशति ऋचोऽनुद्रवण उक्ताः । अत्रापि तावतीभिरनुमन्त्रयीतेत्यर्थः ॥ ६ ॥

स एवंविदा दह्यमानः सहैव धूमेन स्वर्गं लोकमेतीति ह विज्ञायते ॥ ७ ॥

प्रशंसेयम् । सा च विदुषा कर्म कर्तव्यमिति ज्ञापयितुम् । न्यायविदश्च ज्ञात्वा चानुष्ठानमित्याहुः ॥ ७ ॥

उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्तं खात्वाऽवकां शीपालमित्यवधापयेत्ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति विज्ञायते ॥ ८ ॥

जानुमात्रे गर्ते एतावत्कालमातिवाहिकं शरीरमास्थायाऽऽहिताग्निः संस्कारं प्रतीक्षते । ततोऽस्मिन्काले दग्धः सन्नवटान्निष्क्रम्य धूमेन सह स्वर्गमेतीति श्रूयते ॥ ८ ॥

इमे जीवा विमृतैराववृत्रन्निति सव्यावृतो व्रजन्त्यनवेक्षमाणाः ॥९॥

---

१ ख. च. °शिखया° । २ क. घ. °सर्पमातरं भूमिमेतामिति । ३ ख. °स्मिलोके द° ।

अथ 'इमे' इत्यृचं कर्ता जपित्वा ततः सर्वे सव्यावृतो भूत्वा गच्छेयुः पृष्ठतोऽनीक्षमाणाः ॥ ९ ॥

**यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम च गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेतान्यापीड्योदग्दशानि विसृज्याऽऽसत आ नक्षत्रदर्शनात् ॥ १० ॥**

ततो यत्रोदकमवहारियरं भवति तत्प्रतिगच्छन्ति । तत्प्राप्य सकृन्निमज्जन्ति । सकृदवगाहन्त इत्यर्थः । तत एकाञ्जलिमुत्सृजन्ति समानोदकाः । सर्वे एकैकमञ्जलिमुत्सृजेयुरित्यर्थः । पुरुषाः स्त्रियश्च । तस्य गोत्रं नाम गृहीत्वा । प्रेतस्य गोत्रं नाम च गृहीत्वा । काश्यपगोत्र देवदत्त, एतत्त उदकमित्येवमुक्त्वा सिञ्चन्ति दक्षिणामुखाः । ' अयुग्मा दक्षिणामुखाः ' इति स्मृतेः । निनयनदेशस्तु स्मृतितोऽवगन्तव्यः । तत उदकादुत्तीर्यान्यानि वासांसि परिदध्युः । ततः सकृदार्द्राणि पीडयन्ति । अभ्यासो न कार्यः । तत उदगग्राणि वासांसि विसृजन्ति शोषणार्थम् । ततस्तत्रैवाऽऽसत आ नक्षत्रदर्शनात् । ततो नक्षत्रेषु दृश्यमानेषु गृहं प्रविशेयुः सर्वेऽमात्याः ॥ १० ॥

**आदित्यस्य वा दृश्यमाने प्रविशेयुः ॥ ११ ॥**

आदित्यस्य वा दृश्यमाने कस्मिंश्चिन्मण्डले रश्मिवर्जिते प्रविशेरन्[1] । अस्मिन्पक्ष आ मण्डलदर्शनादासते ॥ ११ ॥

**कनिष्ठप्रथमा ज्येष्ठजघन्याः ॥ १२ ॥**

प्रविशेयुः । उभयवचनमानुपूर्वीसिद्धयर्थम् ॥ १२ ॥

**प्राप्यागारमश्मानमग्निं गोमयमक्षतांस्तिलानप उपस्पृशन्ति ॥ १३ ॥**

गृहं प्राप्याश्मादीनुपस्पृशन्ति । ततः प्रविशेयुः ॥ १३ ॥

**नैतस्यां रात्र्यामन्नं पचेरन् ॥ १४ ॥**

एतस्यां रात्र्यामन्नं न पचेरन्नमात्याः ॥ १४ ॥

**क्रीतोत्पन्नेन वा वर्तेरन् ॥ १५ ॥**

क्रीतेन वोत्पन्नेन वा वर्तेरन् । केचिदेतत्सूत्रं न पठन्ति ॥ १५ ॥

**त्रिरात्रमक्षारलवणाशिनः स्युः ॥ १६ ॥**

सर्वेऽमात्याः ॥ १६ ॥

---

[1] घ. प्रविशेरन् ।

द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन् ॥ १७ ॥

मातापितरौ यश्चोपनीय कृत्स्नं वेदमध्यापयत्येते महागुरवः । एतेषु मृतेषु द्वादशरात्रं वा दानाध्ययने वर्जयेरन् । दशाहं वेति वक्ष्यमाणेन सह विकल्पः । नात्राऽऽशौचं विधीयते । अपि तु दानाध्ययनवर्जनमात्रम् । आशौचं तु स्मृत्युक्तं द्रष्टव्यं 'दशाहं शावमाशौचम्' इत्यादि ॥ १७ ॥

दशाहं सपिण्डेषु ॥ १८ ॥

मृतेषु दानाध्ययने वर्जयेरन्निति सर्वत्र संबन्धनीयम् ॥ १८ ॥

गुरौ चासपिण्डे ॥ १९ ॥

उपनीय कृत्स्नवेदाध्यापके गुरावसपिण्डेऽपि दशाहं द्वादशाहं वेति पूर्वेण सह विकल्पः । मातापित्रोस्तु सपिण्डत्वाद्दशाहं द्वादशाहं वा विकल्पः ॥ १९ ॥

अप्रत्तासु च स्त्रीषु ॥ २० ॥

दशाहमेव ॥ २० ॥

त्रिरात्रमितरेष्वाचार्येषु ॥ २१ ॥

एकदेशाध्यापकेष्वित्यर्थः ॥ २१ ॥

ज्ञातौ चासपिण्डे ॥ २२ ॥

त्रिरात्रमेव समानोदक इत्यर्थः । 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने' ॥ २२ ॥

प्रत्तासु च स्त्रीषु ॥ २३ ॥

त्रिरात्रमेव ॥ २३ ॥

अदन्तजाते ॥ २४ ॥

त्रिरात्रमेव ॥ २४ ॥

अपरिजाते च ॥ २५ ॥

अपरिजातो नाम संपूर्णो गर्भः । तत्र च त्रिरात्रमेव ॥ २५ ॥

एकाहं सब्रह्मचारिणि ॥ २६ ॥

सहाध्यायी सब्रह्मचारी । तस्मिन्मृत एकाहं वर्जयेत् ॥ २६ ॥

समानग्रामीये च श्रोत्रिये ॥ २७ । ख०४॥

समानग्रामवासिनि च श्रोत्रिये मृत एकाहं वर्जयेत् । अनाशौचनिमित्तेषु गुर्वादिषु श्रोत्रियपर्यन्तेषु मृतेष्वध्ययनमात्रं वर्जयितव्यं न दानमित्युपदेशः । अत्रान्ये

---

१ क "न । एकाद" ।

ख्याचख्युः—त्रिरात्रमक्षारलवणाशिनः स्युः। महागुरुषु तु द्वादशरात्रं वाऽक्षारलवणाशिनः स्युरिति विकल्पः। 'दानाध्ययने वर्जयेरन्दशाहं सपिण्डेषु' इत्यनेन प्रकरणेनाऽऽशौचं विधीयते। आशौचादिविचयम्[1] तेन स्मृतेराशौचविस्तारो विज्ञेय इति।

धर्मशास्त्रेषु दाहश्च विहिता चोदकक्रिया।
येषां तेषां तु सर्वेषां दाहकर्मेति भाषितम्।
अत्र त्वनाहिताग्न्यादेर्विशेषो वक्ष्यतेऽधुना॥
त्रिगुल्फं बर्हिराज्यं चेत्येवमन्तं समं भवेत्।
नास्त्यानुस्तरणी कार्या पात्राणां योजनं तथा।
पृषदाज्यं तथा चार्यादिति गृह्यविदां मतम्॥
'नानाहिताग्नेः पात्रचयो विद्यते' इति बौधायनः।
'तां दिशं तु नयेदग्निं[2] प्रेतं चापि ततः परम्॥
अयुजोऽमिथुना वृद्धाः पठिचक्रेण वा भवेत्।
प्रेतस्य पृष्ठतोऽमात्या ईयुः पूर्ववदेव च॥
भूमिभागं ततः प्राप्य कर्ता प्रोक्षति पूर्ववत्।
गृह्येणानाहिताग्निं तु दहेत्पत्नीं च पूर्ववत्॥
कपालाग्निर्दहेदन्यमुपनीतं तथा परम्।
प्राक्तूपनयनात्प्रेतं लौकिकाग्निर्दहेन्नरम्॥
अग्निवर्णं कपालं तु तप्त्वा तत्राग्निं निक्षिपेत्।
करीषादि ततो योऽग्नेर्जातः स तु कपालजः॥
उद्धृतान्ते निधेयोऽग्निर्देशे तूत्तरपश्चिमे।
तथा शाखान्तरे दृष्टेः प्रणीताः प्रणयेत्ततः॥
खाते हिरण्यशकलं तिलांश्चापि विनिक्षिपेत्।
तन्त्रं नेति पुरेवोक्तमिध्माचित्यादि पूर्ववत्॥
पत्न्युत्थापनपर्यन्तं धनुरन्तमथापि वा।
ततो हिरण्यशकलैश्छिद्राण्यपिदधाति वै॥
घृतसिक्तांस्तिलांश्चापि किरेत्प्रेतकलेवरे।
अथेममग्ने चमसं पूर्णपात्रानुमन्त्रणम्॥

---

१ घ. °शौचादिसंक्षेपः। ते°। २ घ. नयेत्।

सव्यं जानु निपात्याथ चतस्रोऽग्नौ जुहोति वै।
तथामृतश्च जुहुयात्पञ्चमीं हृदये ततः ॥
तिस्रातादि ततः कुर्याच्चतोऽर्थप्राशसञ्चितम् ।
ततः प्रज्वालयेदग्निं प्रेषो नात्र भवेदिति ॥
तं दह्यमानमित्यादि सर्वं पूर्ववदेव तु।
अस्थिसंचयनादेस्तु सर्वसाम्यात्र कथ्यते ' इति ॥ २७ ॥ ४ ॥

**संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे ॥ १ ॥**

संचीयन्तेऽस्थीनि येन कर्मणा तत्संचयनम् । कृष्णपक्षस्य दशम्या ऊर्ध्वमयुक्षु तिथिष्वेकादशी त्रयोदशी पञ्चदशीत्यासु । एकनक्षत्रे । येन नाम्नैकमेव नक्षत्रमभिधीयते तन्नामके नक्षत्र इत्यर्थः । आषाढाद्वयं फल्गुनीद्वयं प्रोष्ठपदाद्वयमिति षड्भ्योऽन्यत्र नक्षत्रे कर्तव्यमित्यर्थः । अन्तर्दशाहेऽतीते वा दशाहे कृष्णपक्षागमनमात्र इदं कार्यम् । नातीत एव दशाह इति नियमः । अतीते दशाह इत्ययं पक्षः संवत्सरे सपिण्डीकरणपक्ष एवोपपद्यते । द्वादशाहे सपिण्डीकरणपक्षे तु नोपपद्यते । सपिण्डीकृतस्य प्रेतस्य पृथक्पिण्डे नियोजनस्य प्रतिषेधात् । ' य. सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायते ॥' इति शातातपः ' संचित्य वैकोद्दिष्टं विधीयते श्राद्धमस्मै दद्युरिति ' । तस्मात्तस्मिन्पक्षे द्वितीयेऽहनि चतुर्थेऽहनीत्यादिकालो द्रष्टव्यः ॥ १ ॥

**अलक्षणे कुम्भे पुमांसमलक्षणायां स्त्रियमयुजोऽमिथुनाः प्रवयसः ॥ २ ॥**

अमङ्गले कुम्भे पुमांसं संचिनुयुः । स्तनरहितः कुम्भः । अलक्षणायां कुम्भ्यां स्त्रियं संचिनुयुः । स्तनवती कुम्भी । अयुज इत्यादि पूर्ववत् ॥ २ ॥

**क्षीरोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन्प्रोक्षति शीतिके शीतिकावतीति ॥ ३ ॥**

क्षीरमिश्रोदकेन कर्ता प्रोक्षति । मन्त्रावृत्तिरुक्ता । शेषं व्याख्यातम् ॥ ३ ॥

**अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्रादयन्तोऽवदध्युः पादौ पूर्वं शिर उत्तरम् ॥ ४ ॥**

कर्ता प्रोक्षति । संचेतारोऽङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थि गृहीत्वाऽसंह्रादयन्तः शब्दो यथा न स्यात्तथा कुम्भेऽवदध्युः । पादौ पूर्वमवदध्युः । शिर उत्तरमवदध्युः । उभयवचनमानुपूर्वीसिद्ध्यर्थम् ॥ ४ ॥

**सुसंचितं संचित्य पवनेन संपूय यत्र सर्वत आपो नाभिस्यन्दे-**

---

१ घ. " चित्यैको " । २ क. मिश्रेणोद० ।

रक्षन्त्या वर्षाभ्यस्तत्र गर्तेऽनवदध्युरुपसर्प मातरं भूमिमेतो-
मिति ॥ ५ ॥

शिरःपर्यन्तं कुम्भेऽवधाय, ततो भस्म शूर्पेण संशोध्य, सूक्ष्माण्यस्थीनि शिरस उपरि संचित्य ततोऽमित आकाशमित्यादिलक्षणयुक्ते देशे गर्तं खात्वा यत्र गर्ते सर्वतोऽपि दिग्भ्योऽधरितर्यक् चाऽऽपो न निष्यन्देरन्वर्षाभ्योऽन्यास्तस्मिन् गर्ते कुम्भमवदध्युः । उपेत्यृचा । मन्त्रं कर्ता ब्रूयात् । उत्तरांश्च मन्त्रान्कर्तैव ब्रूयात् ॥ ५ ॥

उत्तरया पांसूनवकिरेत् ॥ ६ ॥

उच्छ्वं च स्वेत्येतया पांसून्प्रक्षिपेदवटे । यथा कुम्भ आननपर्यन्तं निमग्नो भवति ॥ ६ ॥

अवकीर्योत्तराम् ॥ ७ ॥

अवकीर्णे गर्ते कुम्भाननपर्यन्ते तत उच्छ्वं च मानेत्येतां जपेत् । अवकीर्यवचनं पांसुप्रक्षेपो न धर्ममात्रं कार्योऽपि तु कुम्भाननपर्यन्तं गर्तपूरणाथाऽ कर्तव्य इत्येवमर्थम् ॥ ७ ॥

उत्ते स्तभ्नामीति कपालेनापिधायाथानपेक्षं प्रत्याव्रज्याप उपस्पृश्य श्राद्धमस्मै दद्युः ॥ ८ ॥ ख० ५ ॥

तत उत्ते इत्यृचा घटादिकपालेन कुम्भमपिधाय ततो गर्तस्यार्धमात्रं पूर्णं करोति । यथा कुम्भो न दृश्यते । कर्मान्तरारम्भज्ञापनार्थोऽथशब्दादयमर्थो लभ्यः । ततोऽनवेक्षं पृष्ठतोऽनीक्षमाणाः प्रत्याव्रजन्ति । ततोऽप उपस्पृश्य । स्नात्वेत्यर्थः । ततोऽस्मिन्नहनि श्राद्धमस्मै प्रेताय केवलाय दद्युरेकोद्दिष्टविधानेन ॥ ८ ॥ ५ ॥

गुरुणाऽभिमृता अन्यतो वाऽपक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् ॥ १ ॥

गुरुणा अभिमृताः । गुरुर्येषां मृतः । अन्यतो वा पुत्रपशुहिरण्यादिभिरपक्षीयमाणाः सन्तोऽमावास्यायां शान्तिकर्मनाम कुर्युः । तत्र मन्त्रवती क्रियां ज्येष्ठः करोति । इतरे तूपासते ॥ १ ॥

पुरोदयादग्निं सहभस्मानं सहायतनं दक्षिणा हरेयुः क्रव्यादमग्निं प्रहिणोमि दूरमित्यर्धर्चेन ॥ २ ॥

प्रागादित्योदयादग्निं सहभस्मानमायतनेन सह दक्षिणस्यां दिशि हरेयुः। दक्षिणां दिशं प्रति नयेयुरित्यर्थः। क्रव्यादमग्निमित्यर्थवचेन। पचनाग्नेरेवायमुत्सर्गः। गृह्यस्येत्यभ्युपगम्यमानेऽतिप्रसङ्गः। त्रेताग्नीनामपि प्रसज्येत। अथ तेषां आयज्जीवं धार्यत्वादुत्सर्गो नोपपद्यते। तदत्रापि समानम्। औपासनोऽपि यावज्जीवं धार्य एव। 'पाणिग्रहणादि गृह्यं परिचरेत्' ( १ । ९ । १ ) इति वचनात्। तस्मात्पचनस्येति सिद्धम्। आयतनशब्देनाधिश्रयणार्था मेखलादय उच्यन्ते ॥ २ ॥

तं चतुष्पथे न्युप्य यत्र वा त्रिः प्रसव्यं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः ॥ ३ ॥

अथ तमग्निं चतुष्पथे प्रक्षिप्य यत्र वाऽदक्षिणस्यां वाऽचतुष्पथे वा न्युप्याथ तमग्निमप्रदक्षिणं त्रिः परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानास्ताडयमानाः ॥ ३ ॥

अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केशश्मश्रुलोमनखानि वापयित्वोपकल्पयीरन्नवान्मणिकान्कुम्भानाचमनीयांश्च शमीसुमनोमालिनः शमीमयमिध्मं शमीमय्यावरणी परिधींश्चाऽऽनडुहं गोमयं चर्म च नवनीतमश्मानं च यावत्यो युवतयस्तावन्ति कुशपिञ्जूलानि ॥ ४ ॥

अथानवेक्षं पृष्ठतोऽनीक्षमाणाः प्रत्याव्रजन्ति। अथशब्द ऊर्ध्वोहननस्य प्रत्यागमनाङ्गत्वाशङ्का निवृत्त्यर्थः। ततः सर्वे स्नान्ति। ततः सर्वे केशादीन्वापयन्ति। पुनरपि स्मृतिप्राप्तं स्नानं कुर्युः। ततो वक्ष्यमाणान्युपकल्पयीरन्। शब्दोपदेशान्नवाः। उपकल्पनविधानात्पुराणानामुत्सर्गः। अनुक्तोपयोगानां यथार्थमुपयोगः कार्यः। मणिको नाम जलधारणार्थो भाण्डविशेषः। कुम्भा उक्ताः। आचमनीया नाम आचमनसाधना उदञ्चनकमण्डलुप्रभृतयः। शमीसुमनोमालिनः। शमीपुष्पमालिनः। मणिकादीन्नीलवानुपकल्पयेयुः। शमीसुमनोमालिन इति मणिकादीनां विशेषणमित्येके। कर्तृणां विशेषणमित्यन्ये। शमीमयमिध्ममुपकल्पयेयुः। प्राकृतस्यायं विकारः। शमीमय्यावरणी चोपकल्पयेत्। अरणी इत्येतावत्युच्यमान एकेन वाक्येन द्रव्यचोदना गुणचोदना च विधातुं न शक्यत इति कृत्वा शमीमयग्रहणं नैवाधिक्रियेत। अरणी ह्यपूर्वे विधीयेते। अतः पुनः शमीमयग्रहणं कृतम्। परिधींश्चो-

---

१ घ. 'वादेर्वि'। २ ख. 'रणीर्ह्यपूर्वे विधीयते। अ'।

पकल्पयेरन् । किमर्थमिदमिति न विद्मः । द्रव्यचोदना तावन्न कार्या । इध्माबर्हिषोश्च संनहनमिति स्थालीपाक इध्मसंनहनस्य दर्शपूर्णमासातिदेशोऽस्ति । इतरेषां च स्थालीपाकातिदेशोऽस्ति । 'पाकयज्ञानामेतत्तन्त्रम्' ( १ । १० । २९ ) इति । दर्शपूर्णमासयोश्च परिधयो विहिताः । 'एकविंशतिमिध्मदारूणि भवन्ति' इति । मन्त्रलिङ्गाच्च । 'एकविंशतिधा संभराभीति । 'अथ परिधीन्परिदधाति रक्षसामपहत्यै' इत्यर्थवादाच्च । तस्मादतिदेशादेव सिध्येयुः । शमीमयत्वसिद्ध्यर्थमिति चेत् । तदपि न । इध्मस्तावच्छमीमयोऽत्र विहितः । दर्शपूर्णमासयोश्चेध्मपरिधीनामेकद्रव्यत्वं दृष्टम् । 'पालाशः खादिरो वेध्मः' इति बौधायनः । तत्र चेध्मग्रहणेनैकविंशतेर्ग्रहणम् । एकविंशतिमिध्मदारूणीति विधिवाक्ये श्रवणाद्वृक्षान्तरानुक्तेश्च । अत्र चेध्मग्रहणेन परिधिग्रहणे सति परिधयोऽपि शमीमया एव भवन्ति । इध्मसंख्या चावश्यमतिदेष्टव्यैव । अन्यथा संनहनमात्रातिदेशेनारत्निमात्रत्वपालाशत्वादयोऽपि गुणा न स्युरिध्यन्ते च तर्हि सर्वासामभ्याधानं प्राप्नोतीति शङ्का न कार्या । 'पञ्चदशेध्मदारूण्यभ्यादधातीति' श्रुतेः । इतरेषां च प्रेरिवाद्विनियोगः कार्यः । तत्र केचित्परिहरन्ति । 'गुणचोदनैवेयम् । सा च ज्ञापनार्थम् । 'अन्यत्रेध्मपरिधीनां नानावृक्षत्वं कार्यमिति । रक्षोहननार्थं चावश्यं परिधातव्या एवेति', चशब्दः शमीमयत्वसमुच्चयार्थः । उपकल्पसमुच्चयार्थत्वे सति सर्वत्र चशब्दं कुर्यात् । एवं ते परिहृतवन्तः । तदयुक्तमित्यन्ये । अस्मच्छास्त्र इध्मग्रहणेन पञ्चदश दारुकस्य ग्रहणं दृष्टम् । 'प्राचीनावीतीध्ममुपसमाधाय' (श्रौ० २ । ६) 'इध्ममभिघार्य' ( १ । १० । १२ ) इति च । एकविंशतिधादिनाऽप्युभयत्र पञ्चदशत्वमभ्युपगम्यत एव । तत्र स्वशास्त्रदर्शनसामान्यादिध्माबर्हिषोश्च संनहनमित्यत्रापि पञ्चदशदारुकस्यैव ग्रहणम् । तत्र च पञ्चदशदारुकस्य सतः संनहनाद्यतिदेशेन प्राप्यते । यथा । 'शास्त्रेष्वेव होत्रकाणामभिहिंकारः' ( श्रौ० १।२ ) इत्यत्र शाखान्तरे होत्रकशब्दस्य सप्तसु त्रिषु वा दृष्टत्वेऽप्यस्मच्छास्त्रे मुख्यवर्जितेषु दृष्ट इति कृत्वा द्वादशापि गृह्यन्ते । स्वशास्त्रदर्शनसामान्यात् । एवमिहापि स्वशास्त्रदर्शनसामान्यात्पञ्चदशदारुकस्य ग्रहणम् । एवं च कृत्वा प्रकृतौ पार्वणे परिधयो नैव संभवन्ति । तदतिदेशादितरेष्वपि पाकयज्ञेषु नैव संभवन्ति । प्रकृतौ परिध्यादीनामाचार्येण विनियोगानुक्तेश्च पञ्चदशदारुकस्यैव ग्रहणम् । अथोच्येत । 'एकविंशतिधा संभराभीति संनहनमन्त्रे संख्या श्रूयते । मन्त्रश्चातिदेशा-

---

१ ख. इतरथा । २ क. °मभ्याधा° । ३ क °र्थं परिधय. प° ।

त्पाकयज्ञेष्वपि भवति । पञ्चदशकाष्ठत्वे लिङ्गानुपपत्तिः । न चोहः कर्तुं शक्यः । न प्रकृतावूहो विद्यत इति न्यायादिति' । तदयुक्तम् । नह्यस्य मन्त्रस्य स्थालीपाकः प्रकृतिः । किं तर्हि । दर्शपूर्णमासौ । तस्मादत्रास्योह एव कार्यः । अन्ये तु मन्त्रं नेच्छन्ति । अपि चेध्मपरिधीनां नानावृक्षत्वमपि दर्शपूर्णमासयोर्भगवताऽऽपस्तम्बेनोक्तम् । यत्तूक्तं 'रक्षोहननार्थं परिधातव्याः' इति । तदप्ययुक्तम् । पूर्णपात्रेणैव रक्षोहननस्य कृतत्वात् । न चात्र प्रणयनस्य हविःश्रपणार्थत्वमुपपद्यते । आज्यहोमत्वेऽपि दहनकर्मणि प्रणयनदर्शनात् । 'अपः प्रणयति' 'आपो वै रक्षोघ्नी रक्षसामपहत्यै' इति श्रुतेः । रक्षोहननार्थत्वं यत्कार्यार्थं यदुपादीयते तच्चेत्कार्यमन्येन कृतं किमिति तदुपादीयते । रक्षोहननं च परिधिकार्यं पूर्णपात्रेणैव कृतमिति न परिधय उपादेयाः । अतः सर्वत्र पञ्चदशदारुक एवेध्म इति सिद्धम् । अनेनैव चाभिप्रायेणाऽऽचार्योऽपि पार्वणे परिध्यादीनां विनियोगमनुक्तवान् । बह्वृचानां समाचारश्च सर्वत्रैवमेव । पारम्पर्योपदेशश्चैवमेव । अनेन तु वचनेन परिधयोऽपूर्वाः सगुणा विधीयन्ते । तेनात्राप्यूर्ध्वसमिधो अनुयाजसमिच्च न कार्या । विध्यभावात् । नन्वतिदेशप्राप्तेन पूर्णपात्रेणैवात्र रक्षोहननस्य कृतत्वात्परिधिविधानं नोपपद्यत इत्याशङ्का न कार्या । न ह्यत्र परिधिविधानस्यानेनैव कार्येण भाव्यमित्यत्र किंचन प्रमाणमस्ति । विधिभेदात् । तस्य कार्यस्येहान्येन कृतत्वाच्च कार्यान्तरं कल्पनीयमित्यलमतिविस्तरेण । आनडुहं गोमयं चर्म चोपकल्पयेयुः । नवनीतं चाश्मानं च यावत्यो युवतयः स्वगृहे तावन्ति कुशपिञ्जूलानि चोपकल्पयेयुः ॥ ४ ॥

अग्निवेलायामग्निं जनयेदिहैवायमितरो जातवेदा इत्यर्धर्चेन ॥ ५ ॥

अथाग्निहोत्रविहरणकालेऽपराह्णे शमीमयीभ्यामरणीभ्यामग्निं मन्थयेदर्धर्चेन । अयं चाग्निः पचनो भवति ॥ ५ ॥

तं दीपयमाना आसत आ शान्तरात्रादायुष्मतां कथाः कीर्तयन्तो माङ्गल्यानीतिहासपुराणानीत्याख्यापयमानाः ॥ ६ ॥

तं ग्रहणं मन्त्रस्योत्तराङ्गत्वाशङ्कानिवृत्त्यर्थम् । आयुष्मतां कुलवृद्धानामन्येषां च कथाः कीर्तयन्त इतिहासादीनि माङ्गल्यानि ब्रुवन्तो मथितमग्निं दीपयमानां गृहाद्बहिरेवाऽऽसते । आ शान्तरात्रात् । निशि यस्मिन्काले तूष्णीमासते जनास्तच्छान्तरात्रम् ॥ ६ ॥

---

१ क. किंतु द° । २ ख. °नस्य वेने° ।

उपरतेषु शब्देषु संप्रविष्टेषु वा गृहं निवेशनं वा दक्षिणाद्द्वार-पक्षात्प्रक्रम्याविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुम-न्विहीत्योत्तरस्मात् ॥ ७ ॥

ततो यदा न शब्दाः कचिदुच्चरन्ति तदा । उत्तरविवक्षार्थमनुवादोऽयम् । संप्रविष्टेषु वाऽमात्येषु गृहं निवेशनं वा । किमुक्तं भवति । शान्तराप्रात्प्रागपि यद्यमात्या गृहं निवेशनं वा प्रवेष्टुं कामयन्ते तदा वा तेषु प्रविष्टेषु । एवं शान्तरा-प्रेण सह विकल्पः । निवेशनशब्देनात्र संवेशनमुच्यते । शयनस्थानमित्यर्थः । उप-सर्गव्यत्ययो द्रष्टव्यः । उक्तं च नैरुक्तैः—निरित्येष समित्येतस्य स्थान इति । तद्वदत्रापि । अनयोरन्यतरे काले कर्ता दक्षिणाद्द्वारपक्षात्संततामुदकधारां सिञ्चे-त्तन्तुमित्यृचा ॥ ७ ॥

अथाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीव-मुत्तरलोम तस्मिन्नमात्यानारोहयेदारोहताऽऽयुर्जरसं वृणाना इति ॥ ८ ॥

अथशब्दोऽस्मिन्कालेऽनन्तरमौपासनमुपसमादध्यादिति ज्ञापनार्थम् । ततः पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्येत्यादि व्याख्यातम् । ततश्चर्मण्यमात्यानारोहयेदा-रोहतेत्यृचा । कर्तृवर्जं गृह्याः सर्वे पुमांसः स्त्रियश्चामात्या इत्युच्यन्ते ॥ ८ ॥

इमं जीवेभ्यः परिधिं दधामीति परिधिं परिदध्यात् ॥ ९ ॥

आज्यसंस्कारान्तं कृत्वा, इममित्यृचाऽग्नेः पश्चात्परिधिं परिदध्यात् । ततो दक्षि-णतस्तूष्णीम् । तत उत्तरतस्तूष्णीमेव । परिधिमित्येकवचनादाद्यस्यैव समन्त्रकत्वमि-तरौ तूष्णीम् ॥ ९ ॥

अन्तर्मृत्युं दधतां पर्वतेनेत्यश्मानमित्युत्तरतोऽग्नेः कृत्वा परं मृत्यो अनु परेहि पन्थामिति चतसृभिः प्रत्यृचं हुत्वा यथाऽहा-न्यनुपूर्वं भवन्तीत्यमात्यानीक्षेत ॥ १० ॥

अथान्तर्मृत्युमिति पादेनाश्मानमुत्तरतोऽग्नेर्निदधाति । 'ऋचं पादग्रहणे' (श्रौ० १।१) इत्यत्र पादशब्दो मूलवाची । यथा 'पादः पत्' (पा०सू० ६ ४।१३०) इति । तेनात्र पादमात्रस्य ग्रहणम् । न ऋचः । तत आज्यभागान्तं कृत्वा 'परं मृत्यो' इति चतसृभिः प्रत्यृचं व्याख्यातं तथा हुत्वा । यथेत्यृचाऽमात्यानीक्षेत ॥ १० ॥

युवतयः पृथक्पाणिभ्यां दर्भतरुणकैर्नवनीतेनाङ्गुष्ठोपकनिष्ठि-

काभ्यामक्षिणी आञ्ज्य पराञ्चो विसृजेयुः ॥ ११ ॥

अमात्येषु या युवतयः स्त्रियस्ता दर्भतरुणकैर्नवनीतं गृहीत्वा, तेनाङ्गुष्ठोपकनिष्ठिकाभ्यां पाणिभ्यामक्षिणी अञ्जते । पृथक्पाणिभ्यामिति वचनं पृथक्पृथक् युगपदेवाञ्जीरन्न पर्यायेणेत्येवमर्थम् । तेन द्वित्वं कुशपिञ्जूलानां नास्त्येव । ततोऽनवेक्षमाणाः पृष्ठतो विसृजेयुः कुशपिञ्जूलानि ॥ ११ ॥

इमा नारीरविधवाः सुपत्नीरित्यञ्जाना ईक्षेत ॥ १२ ॥

इमा इत्यृचा कर्ता अञ्जाना युवतीरीक्षेत ॥ १२ ॥

अश्मन्वतीरीयते संरभध्वमित्यश्मानं कर्ता प्रथमोऽभिमृशेत् ॥१३॥

तत एतयाऽश्मानं कर्ता पूर्वमभिमृशेत् । प्रथमवचनात्पश्चादितरेऽभिमृशेयुस्तूष्णीम् ॥ १३ ॥

अथापराजितायां दिश्यवस्थायाग्निनाऽऽनडुहेन गोमयेन चाविच्छिन्नया चोदकधारयाऽऽपो हि ष्ठा मयो भुव इति तृचेन परीमे गामनेषतेति परिक्रामत्सु जपेत् ॥ १४ ॥

अग्निनाऽऽनडुहेन गोमयेन चाविच्छिन्नया चोदकधारयाऽऽपोहिष्ठेति तृचेन सिच्यमानयाऽमात्येष्वौपासनाग्निं परियत्सु, तस्मिन्कालेऽपराजितायां दिशि स्थित्वा, कर्ता 'परीम' इत्यृचं जपेत् ॥ १४ ॥

पिङ्गलोऽनड्वान्परिणेयः स्यादित्युदाहरन्ति ॥ १५ ॥

एवंगुणयुक्तोऽनड्वान्परिणेतव्यः । अथ स्विष्टकृदादि समापयेत् । उत्तरत्राथशब्दात् ॥ १५ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्त्यहतेन वाससा प्रच्छाद्य ॥१६॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्ति । यो देशोऽभीष्टस्तत्राहतेन वाससा प्रच्छाद्योपविशन्ति ॥ १६ ॥

आसतेऽस्वपन्त ओदयात् ॥ १७ ॥

तत्रैव आ उदयादस्वपन्त आसते ॥ १७ ॥

उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपित्वाऽन्नं संस्कृत्याप नः शोशुचदघमिति प्रत्यृचं हुत्वा ब्राह्मणान्भोज-

---

१ क "भ्याम" । २ ख. "तरोऽभिमृशेत्" । ३ क. परिक्रामत्सु ।

यित्वा स्वस्त्ययनं वाचयीत गौः कंसोऽहतं वासश्च दक्षिणा ॥ १८ ॥ ख० ६ ॥

तत उदित आदित्ये सौर्याणि स्वस्त्ययनानि च व्याख्यातानि जपित्वा । आज्यं संस्कृत्येति वचनमाज्यभागान्तं कृत्वा तत एवाग्नाद् 'अप नः शोशुचदघमिति' होमः कार्य इत्येवमर्थम् । प्रत्यृचं व्याख्यातम् । तथा हुत्वा । अन्नस्य तु नानावस्संस्कारः । ततो होमशेषं समाप्य तत एवाग्नाद्ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत । ततो गौः कंसोऽहतं वास इति त्रीणि भुक्तवच्चो दक्षिणां दद्यात् । ओदयादित्येव सिद्ध उदित आदित्य इति वचनमस्यापनकालेऽपि सौर्याणि दिवैवाध्येतव्यानि । न कदाचिद्रात्रौ कर्तव्यानीत्येवमर्थम् । तेन प्रत्यवरोहणे स्वपन्तमभ्युदियाचेदित्यत्र चापरेद्युरुदिते जप इति सिद्धम् ॥ १८ ॥ ६ ॥

अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ॥ १ ॥

अथशब्दोऽधिकारार्थः । इत उत्तरं वक्ष्यमाणो विधिः श्राद्धे वेदितव्य इति । अतःशब्दो हेत्वर्थः । यस्माच्छ्राद्धानि श्रेयसपा'त्रिभिर्वैरपि च क्रियते । तस्माद्वक्ष्याम इति । पार्वणमिति श्राद्धनाम । अन्वर्थसंज्ञा चेयं पर्वणि भवं पार्वणमिति । तथाऽप्येकस्मिन्नेव पर्वणि भवत्यमावास्यायाम् । नोभयोः पर्वणोः । कुतः । पिण्डपितृयज्ञेन सह व्यतिषङ्गदर्शनात् । स्मृतेश्च—'पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्' इति मनुः । 'अमावास्यायां पितृभ्यः' इति गौतमः । पितॄनुद्दिश्य यद्दीयते ब्राह्मणेभ्यः श्रद्धया तच्छ्राद्धम् । काम्यं श्राद्धं 'पञ्चम्यां पुत्रकामस्येत्यादि' । वृद्धिपूर्तनिमित्तमाभ्युदयिकम् । एकमेवोद्दिश्य यच्छ्राद्धं 'श्राद्धमस्मै दद्युरेकादशाह एकोद्दिष्टम्' इत्यादि तदेकोद्दिष्टम् । धर्मभेदात्पृथगुपदेशः । श्राद्ध इत्येतावतैव सिद्धे पार्वणादिग्रहणं धर्मभेदप्रदर्शनार्थं कर्तव्यताविध्यर्थं च । धर्मभेदमुपरिष्टाद्वक्ष्यामः ॥ १ ॥

ब्राह्मणाञ्श्रुतशीलवृत्तसंपन्नानेकेन वा काले ज्ञापितान्स्नातान्कृतपच्छौचानाचान्तानुदङ्मुखान्पितृवदुपवेश्यैकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन्वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषाम् ॥ २ ॥

ब्राह्मणग्रहणं क्षत्रियवैश्यादिनिवृत्त्यर्थम् । श्रुतं स्वाध्यायः । शीलं स्वभावः । शमदमादियुक्तत्वं क्रोधरागादिवर्जितत्वं च । वृत्तम् । विहितकरणं निषिद्धवर्जनं च । एतैस्त्रिभिर्गुणैर्युक्तानेकेन वा गुणेन युक्तानुपवेश्येत्यनेन संबन्धः । काले ज्ञापितान् ।

---

१ क 'वैद्यानि'।

स्मृत्युक्तनिमन्त्रणकाले निमन्त्रितानित्यर्थः। उक्तं च मनुना—'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते। निमन्त्रयीत त्र्यवरान्सम्यग्विप्रान्यथोदितान्' इति। तेषां चैते नियमा भवन्ति—'निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा। न च च्छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत्॥' इति मनुः। स्नातानिति वचनं नियमेन स्नातान्भोजयेत्केनचित्कारणेन स्नानाशक्तान्न भोजयेदित्येवमर्थम्। अन्ये स्नातानिति समावृत्तानिति व्याचख्युः। अन्ये स्नानद्रव्यैः स्नातानिति। तच्च स्नानं स्वेन द्रव्येण कारयितव्यमिति च व्याचख्युः। प्रक्षाल्य पादौ पाणी चेत्याचमनाङ्गत्वेन विहितं पच्छौचं शुद्धपादस्यानित्यमिति ज्ञापनार्थं कृतपच्छौचवचनम्। तेन शुद्धपादत्वेऽप्यत्र नियमेन पच्छौचं कार्यमित्यर्थः। अन्ये तु स्वयमेव तेषां पादान्प्रक्षालयेदित्येवमर्थमिति व्याचख्युः। आचान्तानिति कर्माङ्गमाचमनं विधीयते। तेन भोजनाङ्गं श्राद्धाङ्गं च द्विराचमेयुः। एवंगुणविशिष्टानुदङ्मुखान्पितृनुपवेशयेत्। उदङ्मुखवचनं प्राङ्मुखत्वनिवृत्त्यर्थम्। पितृवदिति वचनं ममैते पितर इत्येवं मनसा ध्यायन्नुपवेशयेदित्येवमर्थमित्येके। अन्ये तु पित्रे वृद्धं पितामहाय वृद्धतरं प्रपितामहाय वृद्धतममित्येवं यथावय उपवेशनार्थमिति। एकैकस्यैकैकमुपवेशयेत्। द्वौ द्वौ त्रींस्त्रीन्वा। अतोऽपि ब्राह्मणा अधिका भवेयुः। सर्वथा ब्राह्मणाधिक्ये फलाधिक्यमस्त्येव। सर्वथाऽल्पकर्मणो महाकर्मणश्च क्वचिदपि समानफलताशङ्का न कार्या। महाकर्मविधानानर्थक्यप्रसङ्गात्। न त्वेवैकं सर्वेषां त्रयाणां भोजयेत्। 'द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा। भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥' इति मनुनोक्तस्यैकैकमुभयत्र वेत्यस्य पक्षस्यायं प्रतिषेधः। अस्य प्रतिषेधं कुर्वता मनूक्तमन्यदनुज्ञातं भवति। तेनैतत्सिद्धं भवति। दैवमपि भोजनमत्र कार्यम्। तस्य विधिः स्मृतितोऽवगन्तव्यः। आचार्येण तु पित्र्यस्यैव विधिरुच्यते। अस्मद्गृह्योक्तेतिकर्तव्यतामात्रमेव कार्यम्। न शास्त्रान्तरं दृष्ट्वा विस्तरः कार्यः। एतदाह मनुरपि—'सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम्। पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्। महदल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥' इति गृह्यविदः। 'ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः' इत्याद्याश्च वर्ज्या इति॥ २॥

---

१ ग. पितुर्दै°। २ क ग. घ. ह्मणवृद्धौफ°।

काममनाद्ये ॥ ३ ॥

आद्यं सपिण्डीकरणम्। यौनुद्दिश्य क्रियमाणश्राद्धमध्ये तदेव हि प्रथमम्। तद्वर्जितेषु सर्वेषु श्राद्धेषु कामं त्रयाणामेकं भोजयेत्। सपिण्डीकरणे तु नियमेन त्रयाणां त्रिभिर्भाव्यम्। काममिति वचनमापत्कल्पोऽयमिति ज्ञापनार्थम्। अन्ये त्वनाद्ये पार्वणवर्जित इति व्याचख्युः। तद्ध्यत्र प्रथमं निर्दिष्टम्। अन्ये त्वनाद्येऽभोजने आमहिरण्यश्राद्धादाविति। 'आमैर्वा फलमूलैर्वा प्रदानमात्रं हिरण्येन वा प्रदानमात्रम्' इति बौधायनः। अन्ये त्वनाद्ये दुर्भिक्ष इति। अन्ये त्वनाद्य आद्याभावेऽलाभावे संपद्भाव इति ॥ ३ ॥

पिण्डैर्व्याख्यातम् ॥ ४ ॥

जीवमृतानां पिण्डनिवरणमधिकृत्य ये पक्षाः पिण्डपितृयज्ञे उक्तास्ते श्राद्धेऽपि विज्ञेयाः ॥ ४ ॥

अपः प्रदाय ॥ ५ ॥

उपवेशनादनन्तरं ब्राह्मणपाणिष्वपो ददाति। आग्नेयीमुखः प्राचीनावीती पितृकर्म कुर्यात् ॥ ५ ॥

दर्भान्द्विगुणभुग्नानासनं प्रदाय ॥ ६ ॥

ततो दर्भान्द्विगुणभुग्नानासनेषु ददाति। आसनं प्रदायेति सप्तम्यर्थे द्वितीया। आवेशनस्य प्राक् चोदितत्वात् ॥ ६ ॥

अपः प्रदाय ॥ ७ ॥

ततः पुनरपो ददाति ॥ ७ ॥

तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य शंनोदेवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वधा नम इति ॥८॥

ततस्तैजसमेकं पात्रमश्ममयमेकं मृन्मयमेकम्। एतेषु त्रिषु पात्रेषु। त्रिद्रव्यासंभव एकद्रव्येषु वा त्रिषु पात्रेषु। त्रीण्यपि तैजसानि वा। त्रीण्यप्यश्ममयानि वा। त्रीण्यपि मृन्मयानि वा। तान्यासेयादिसंस्थानि निधाय तेषु दर्भानन्तर्धाय ततस्तेष्वपो निषिच्य ततः शंनो देवीरित्यृचा पात्रत्रयस्था अपोऽनुमन्त्रयेत्। सकृदेव शक्यत्वान्न मन्त्रावृत्तिः। ततस्त्रिषु पात्रेषु तिलानावपति तिलोऽसीति मन्त्रेण।

अत्र प्रतिपात्रं मन्त्रावृत्तिः । पितृशब्दस्योहो नास्तीत्युक्तं प्राक् । पात्रेषु गन्धमाल्याद्यावपेत् ॥ ८ ॥

प्रसव्येन ॥ ९ ॥

पित्र्यं कर्म सर्वं प्रसव्येनाप्रदक्षिणेन कार्यम् । अप्रदक्षिणं कार्यमित्यर्थः । तृतीया तु प्रकृत्यादित्वाद्द्रष्टव्या । समेन धावतीतिवत् । 'प्रदक्षिणमुपचारः' (२।९।१९) इत्याभ्युदयिकेऽपवाददर्शनाद्योगविभागोऽवगतः ॥ ९ ॥

इतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यं प्रपितामहेदं ते अर्घ्यमिति ॥ १० ॥

उत्तरत्रोपवीतिविधानात्सर्वमिदं पित्र्यं प्राचीनावीतिना कार्यमित्युक्तम् । अधुना, उपवीतित्वादिति हेतुनिर्देशादत आरभ्यार्वाग्गन्धमाल्यादिदानादि यज्ञोपवीतिना कर्म कर्तव्यमिति गृह्यविदः। इतरस्य सव्यस्य पाणेरङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेत् । उपवीतित्वाद्धेतोः । पित्र्ये तावत्प्राचीनावीतिना भाव्यमयं चोपवीती तस्मादित्यर्थः । येन पाणिना कर्म करोति दक्षिणेन वा सव्येन वा तस्मिन्नंसे यज्ञोपवीते स्थिते प्राचीनावीती भवति । ततोऽन्यस्मिन्नंसे स्थित उपवीती भवति । अत्र तूपवीतित्वात्प्राचीनावीतित्वसिद्ध्यर्थं सव्यपाणिपितृतीर्थेन दातव्यमित्यर्थः । अथवा सव्यपाणेः शिष्टगर्हितत्वाद्दक्षिणं पाणिं सव्येन पाणिना गृहीत्वा दक्षिणेनैव पाणिनोपवीत्येवार्घ्यं प्रयच्छेत् । ( +पित्रादित्रयाणां त्रिभिर्मन्त्रैर्यथाक्रमं प्रयच्छेत् ।) ॥१०॥

अप्पूर्वम् ॥ ११ ॥

अर्घ्यप्रदानात्पूर्वमन्या अप्पो दद्यादित्यर्थः ॥ ११ ॥

ताः प्रतिग्राहयिष्यन्सकृत्सकृत्स्वधा अर्घ्या इति ॥ १२ ॥

अर्घ्या इति । निवेदयेदिति शेषः । ता अर्घ्या अपः प्रतिग्राहयिष्यन् । प्रतिग्रहणात्पूर्वं सकृत्सकृदर्घ्या अपो निवेदयेत्स्वधा अर्घ्या इति मन्त्रेण । 'विप्रर्थं यावन्तो ब्राह्मणास्तेभ्यः सर्वेभ्यः प्रथममेकमेव पात्रं सकृन्निवेदयेत प्रतिब्राह्मणम् । तथा पितामहार्थानां द्वितीयं सकृदेव । प्रपितामहार्थानां तृतीयं सकृदेवेत्येवमर्थं सकृत्सकृदिति वचनम् '। निवेदनस्य सकृन्नियमादन्यासामपां दानमर्घ्यदानं पाद्यर्थमन्त्राश्च प्रति-

---

+ कंसस्थितो ग्रन्थः ख. पुस्तके नास्ति ।

---

१ ख. °वीत[ित]येति । २ क. ग. घ. °विप्रप्रदानार्थे° ।

ब्राह्मणमावर्तन्ते । निवेदमान्योदकदानार्घ्यदानेषु पदार्थानुसमयः काण्डानुसमयो वा द्रष्टव्यः । गन्धादिदाने च तथा । एवमेकैकस्यानेकपक्षे । एकैकपक्षे त्वेकैकं पात्रमेकैकस्य निवेद्य, अन्या अप एकैकस्य दत्त्वा, अर्घ्यो अप एकैकस्य दद्यात् । सर्वेषामेकपक्षे त्रीण्यपि पात्राणि तस्यैव निवेद्य, पुनः पुनरन्या अपो दत्त्वा तस्यैव त्रिरर्घ्यं त्रिभिर्मन्त्रैः प्रयच्छेत् ॥ १२ ॥

प्रसृष्टा अनुमन्त्रयेत या दिव्या आपः पृथिवी संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्विति संस्रवान्समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ १३ ॥

ब्राह्मणैः प्रसृष्टा निनीता अर्घ्या अपोऽनुमन्त्रयेत । या दिव्या इत्यनेन मन्त्रेण । प्रसृष्टा इत्यादिकर्मणि क्तप्रत्ययः । भूतकालत्वमात्र आनर्थक्यप्रसङ्गात् । तेन प्रतिब्राह्मणं पृथगनुमन्त्रणम् । अर्घ्यं दत्त्वा दत्त्वा निर्णीतास्तदानीमेवानुमन्त्रयेत । एवं सर्वेषामर्घ्ये दत्ते संस्रवानर्घ्यशेषान्पात्रगतानेकी करोति । उत्तरे द्वे पात्रे प्रथमपात्र आसिञ्चतीत्यर्थः । एवं गृह्यविदः । ततस्ताभिरेकीकृताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति । नो चेन्नानक्ति ॥ १३ ॥

नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥ १४ ॥ (+ उद्धरेद्यदि चेत्पात्रं विवृतं वा यदा भवेत् । तदाऽऽसुरं भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः ॥ इति ) ख० ॥ ७ ॥

पितॄणामर्घ्यपातितं पितॄणामर्घ्यशेषा आपो यस्मिन्पात्र एकीकृता एवंभूतं प्रथमं पात्रं तस्माद्देशान्नोद्धरेत्समवनयनदेशान्नापनयेदा श्राद्धपरिसमाप्तेः । किमिति नोद्धरेत् । यस्मात्तस्मिन्पात्रे पितरस्तृतीयपात्रेण पिहितास्तिष्ठन्तीति गृह्यज्ञास्तृतीयेन पात्रेण प्रथमपात्रस्यापिधानमिच्छन्ति । अन्ये तु ' तत्रेति तृतीयार्थे सप्तमी । तेनायमर्थः । आवृतास्तेन प्रथमेन पात्रेण पितरस्तिष्ठन्तीति । एतदुक्तं भवति । ' अर्घ्यपातितं प्रथमं पात्रं न्यब्जिलं कुर्यात् । तच्च नोद्धरेत् । आ समाप्तेरिति ' व्याचख्युः । शौनकोऽब्रवीत् । शौनक एवमवादीत् । शौनकग्रहणं तस्य पूजार्थम् । न विकल्पार्थम् ॥ १४ ॥ ७ ॥

---

+ कंसस्थितमारिका केचित्पठन्ति ।

---

१ ख. °षा निर्णीता । २ क ग. °पिवि सं° ।

एतस्मिन्काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम् ॥ १ ॥

आच्छादनं वस्त्रम् । इदानीं प्राचीनावीती भवेत् । ततो गन्धादीनि पञ्च ब्राह्मणेभ्यो ददाति। एतस्मिन्काल इति वचनमेतस्मिन्काल एतान्येव ददातीत्येवमर्थम् । तेन गोहिरण्यादीनां श्राद्धान्ते प्राक्स्वधावाचनात्प्रदानं कार्यमिति सिद्धम् । 'दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्' इति स्मृतेः ॥ १ ॥

उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा ॥ २ ॥

अनाहिताग्नेः पिण्डपितृयज्ञस्य च पार्वणस्य व्यतिषङ्गो भवति । इध्मोपसमाधानान्तं पिण्डपितृयज्ञं कृत्वा ब्राह्मणपच्छौचाद्याच्छादनान्तं पार्वणं कृत्वा ततः पिण्डपितृयज्ञस्थालीपाकादन्नमुद्धृत्य घृताक्तं कृत्वा पित्र्यार्थान्ब्राह्मणाननुज्ञापयति- 'अग्नौ करिष्ये' इति वा 'अग्नौ करवै' इति वा 'अग्नौ करवाणीति' वा ॥ २ ॥

प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति ॥ ३ ॥

ब्राह्मणैरेवं प्रत्यभ्यनुज्ञा देया यथासंख्यं क्रियतामिति वा कुरुष्वेति वा कुरु, इति वा ॥ ३ ॥

अथाग्नौ जुहोति यथोक्तं पुरस्तात् ॥ ४ ॥

ततोऽग्नौ जुहोति । उक्तमार्गेण 'मेक्षणेनावदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाऽग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्य' ( श्रौ० २।६ ) इति । अथशब्दो होमादर्वाचीनं पिण्डपितृयज्ञाङ्गं पूर्वं कृतमिति ज्ञापनार्थः । तेनानयोर्व्यतिषङ्गो लब्धः । अग्नौवचनमुत्तरविवक्षार्थम् ॥ ४ ॥

अभ्यनुज्ञायां पाणिष्वेव वा ॥ ५ ॥

अभ्यनुज्ञायामिति । यदि ब्राह्मणाः पाणिषु होममभ्यनुजानन्ति । अग्निकार्यकरणं यदि स्वेषामभ्युपगच्छन्तीत्यर्थः । तथा सति पाणिषु जुहोति । अनुज्ञावचनं प्रत्यभ्यनुज्ञावचनं च नैव स्तः । कथं तर्ह्यभ्यनुजानन्ति वा न वेति ज्ञातुं शक्यम् । उच्यते । यत्र पिण्डपितृयज्ञप्राप्तिरस्ति तत्राग्निप्राप्तिसद्भावात्पाणिहोमं नाभ्यनुजानन्ति । यत्र तु पिण्डपितृयज्ञकल्पप्राप्तिर्नास्ति तत्राग्निप्राप्त्यभावात्पाणिहोममभ्यनुजानन्ति । कथं पुनस्तत्राग्न्यभावः 'गृह्याणि वक्ष्यामः' ( १ । १ । १ ) इति हि प्रतिज्ञातम् । उच्यते । पाणिमुखाः पितर इति श्रुत्याकर्षादग्नेर्निवर्तितः । एवं

च कृत्वा विधिवशेन तेषामभ्यनुज्ञा विज्ञेया न तु प्रतिवचनेनेति सिद्धम् । तेनाभ्यनुज्ञायामित्यस्य पिण्डपितृयज्ञकल्पप्राप्त्यभावेनाभ्यभाव इत्ययमर्थः । ताभ्यामेव मन्त्राभ्यां पाणिषु जुहुयात् । यावन्तो ब्राह्मणाः पित्रादित्रयार्थमुपविष्टास्तेषां सर्वेषां पाणिषु जुहोति । वचनात् । मन्त्रौ च द्वौ । तत्रार्थादेकैकामाहुतिं विगृह्य विगृह्य सर्वेषां दक्षिणपाणिषु जुहोति । मेक्षणानुप्रहरणमर्थाल्लुप्तम् । अन्ये तु पाणिनैव जुह्वति । तत्पक्षे सुतरां लुप्तम् । अन्ये तु प्रतिब्राह्मणं द्वे द्वे आहुती ताभ्यामेव मन्त्राभ्यां जुह्वति । विग्रहविधयभावादारम्भसामर्थ्याच्चेति । एवं पाणौ होमः । अस्मिन्पक्षे पिण्डनिपरणकाले ब्राह्मणानां समीपे पिण्डनिर्वपणं भवति । 'उच्छिष्टसंनिधौ पिण्डान्दद्याद्वा पितृयज्ञवत्' इति श्रुतिः । पाणिहोमस्य विधरमुत्तरत्र विस्तरेण विभावयिष्यामः । अनाहिताग्नेः पार्वणेऽग्नौकरणमेव+ । न पाणिहोमः ॥ ५ ॥

पाणिहोमं स्तुत्या द्रढयति—

अग्निमुखा वै देवाः पाणिमुखाः पितर इति हि ब्राह्मणम् ॥ ६ ॥

देवानामग्निमुखत्वादग्नौ होमः । पितॄणां पाणिमुखत्वात्पाणौ होमो युक्त एवेत्यर्थः ॥ ६ ॥

यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति ॥ ७ ॥

अर्थद्वयमत्र विभातुमिष्टमिति गम्यते । तत्राग्नौ कृत्वा भाजनेषु भोजनार्थमन्यदन्नमनुदिशति ददातीत्येकोऽर्थः । यदि पाणिहोमः कृतस्तदाऽऽचान्तेष्वन्यदन्नं ददातीत्यपरः । आचान्तशब्दे विप्रतिपन्नास्तत्र केचिदाहुः—यदा पाणिषु होमस्तदा हुतमन्नं भाजनेषु निधायाभक्षयित्वैव निष्क्रम्याऽऽचामेयुः । आचान्तेष्वन्यदन्नं ददाति । ननु यदि भक्षणं न कृतं तर्ह्याचमने विधिर्न घटते । अशुचित्वाभावादिति चेत् । वयं पृच्छामः । कृतेऽपि भक्षणे किमित्याचामेयुः । अशुचित्वादिति चेत् । तर्ह्यशुचित्वेऽपि किमित्याचामेयुः । वचनादिति चेत् । तदत्राप्यविशिष्टम् । अत्रापि हि पाणिहोमनिमित्तमाचमनं चोद्यते । न च सर्वमाचमनमशुचित्वनिमित्तम् । कर्माङ्गनैमित्तकयोरपि विद्यमानत्वात् । तथा हि पिण्डदानमुक्त्वाऽऽह मनुः 'आचम्योदक् परावृत्य त्रिरायम्य शनैरसून्' इति । नैमित्तिकं चेदम् । अशुचित्वाभावात् । तद्वदिदमपि नैमित्तिकम् । पूर्वे भाशननिषेधश्च दृश्यते । 'अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः । पितरस्तेन

+ व्यतिषङ्ग इति शेषः ।

१ क. स्मृतेः । ग. श्रुतेः । घ. स्मृतिः ।

तृप्यन्ति शेषान्नं न लभन्ति ते ॥ यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् । एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥ ' इति । ननु सपिण्डीकरणे दृश्यते । ' हुतशेषं पितृभ्यः पाणिषु ददातीति ' । तस्यैवायं निषेधः । ददातिचोदितत्वात्तस्य । इदं तु जुहोतिचोदितम् । तस्मान्नास्य निषेध इति चेत् । तत्र ब्रूमः । दत्तशब्देन विधितो यत्पाणौ निहितमन्नं तदुच्यते । एवमुदीच्या आहुः । भाष्यकारस्त्वेवमेनेच्छति । चमु भक्षणे । आचान्तेष्विति भक्षितेष्वित्यर्थः । पाणिषु हुतं येष्वन्नेषु प्राशितेष्वन्यदन्नं ददाति । न तयोर्मिश्रीभावः कार्यः । अथाग्नौकरणपक्षे ' अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ' इति हि मनुनाऽग्निसाम्यं दर्शितम् । तत्र प्राशितेष्वाचमनं न कार्यम् । अग्नितुल्यत्वदर्शनात् । प्रयोगान्तरस्य च तद्विषयस्याविधानात् । केचित्स्वगृह्योक्तनिवेशनादिप्रयोगान्तरं कुर्वन्ति । तत्पक्ष आचमनं कार्यं न वेति चिन्त्यम् । अन्नं पाणितले दत्तमित्ययं निषेधः सपिण्डीकरण एव । तस्य ददातिचोदितत्वात् । अस्य न भवति । जुहोतिचोदितत्वात् । तच्छब्दचोदितस्यैव च तद्ग्रहणं युक्तम् । तस्यैव प्रथमं संप्रत्ययादिति । अत्र युक्तं ज्ञात्वा कार्यम् ॥ ७ ॥

अन्नमन्ने ॥ ८ ॥

हुतशेषमन्नं भोजनार्थेषु पात्रेषु निहितेष्वन्नेषु ददाति । अग्निहोमे पाणिहोमे च समानमिदम् ॥ ८ ॥

सृष्टं दत्तपृथ्वनुकमिति ॥ ९ ॥

सृष्टं प्रभूतं दत्तमृध्नुकमृद्धिकरणशीलम् । इतिशब्दो हेत्वर्थः । तस्मात्प्रभूतमन्नं देयमिति भोजनस्य पर्याप्तमात्रं न देयं किंतु ततोऽप्यधिकं देयं यथोच्छिष्येतेत्यर्थः ॥ ९ ॥

तृप्ताञ्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च ॥ १० ॥

मधुवाता इति तिस्रो मधुमत्य इति प्रसिद्धाः । अन्नादिनिवृत्तेच्छां ज्ञात्वा ततो मधुमतीति तिस्रोऽक्षन्नित्येकां श्रावयेत् । तृप्तेषु श्रावयेदित्येव वक्तव्ये ज्ञात्वेति वचनं ज्ञात्वैताः श्रावयेत्पूर्वं तु भोजनकालेऽन्याः श्रावयेदित्येवमर्थम् । मनुनाऽप्युक्तम्—' स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि । आख्यानानीतिहासांश्च पुराणानि खिलानि च ' ॥ इति ॥ १० ॥

संपन्नमिति पृष्ट्वा यद्यदन्नमुपभुक्तं सचरुस्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत् ॥ ११ ॥

अथ संपन्नमित्यनेन वाक्येन ब्राह्मणान्पृच्छति । ते च संपन्नमिति प्रत्युचुः । ततो यद्यदन्नमुपभुक्तं तस्मात्तस्मादन्नादुद्धरति पिण्डार्थम् । ततः स्थालीपाकेन सहैकी करोति । अन्नप्रकिरणार्थं चापोद्धरिमन्नेव काले सर्वस्मादुक्तशेषादुद्धरति । ततो भुक्तोद्धृतशेषं निवेदयेद्ब्राह्मणेभ्यः 'इदं शिष्टं किमनेन कर्तव्यमिति'। स्थालीपाकेन सहेति । नात्रापूर्वस्थालीपाकश्चोद्यते । सर्वश्राद्धेषु प्रसङ्गात् । अनिष्टं चैतत् । तेनानुवाद एवायम् । तेन यत्र स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणं भवति । यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति । आचार्येणाष्टौ श्राद्धान्युक्तानि—'अन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥' तत्र पूर्वेषु चतुर्षु स्थालीपाकादुद्धृत्याग्नौकरणम् । अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणम् । पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात् । तच्च साधितमेव प्राक् । उत्तरेषु चतुर्षु भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पाणिहोमः । ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम् । तेषु स्थालीपाकविध्यभावात्पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च । तत्रार्थाल्लेखा च तदभ्युक्षणं च सकृदाच्छिन्नावस्तरणं च लेखा त्रिरुदकेनेत्यादिपत्नीप्राशनान्तं च भवति । अग्निं प्रत्येयादिति तु न भवति । अन्यच्चातिप्रणयनादि सर्वं न भवति ॥ ११ ॥

अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यात् ॥ १२ ॥

शेषं निवेदितं ब्राह्मणैर्यद्यभिमतं स्वीकर्तुमभिमतं तदा तेभ्यो दद्यात् । अथ यद्यनुमतमनुज्ञातं 'इष्टैः सहोपभुज्यतामिति' तदा स्वीकृत्य ज्ञातिभिर्बान्धवैश्च सहोपभुञ्जीत । मनुरपि 'ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि पूजयेत्' इति । ततोऽनाचान्तेषु पिण्डान्निदध्यात्पूर्वोक्तविधिना । अनाचान्तेष्वित्येव सिद्धे भुक्तवत्स्विति वचनं भुक्तवत्स्वेव निदध्यात्र पूर्वमित्येवमर्थम् । मनुना भोजनात्पूर्वं निपरणं विहितम् । तन्न कार्यमिति । अतो ज्ञायते 'अन्यस्य मनुप्रोक्तस्याविरुद्धस्याङ्गस्येच्छातः करणमिति' ॥ १२ ॥

आचान्तेष्वेके ॥ १३ ॥

आचान्तेषु निपरणमेक इच्छन्ति ॥ १३ ॥

प्रकीर्यान्नमुपवीयों स्वधोच्यतामिति विसृजेत् ॥ १४ ॥

आचान्तेषु पिण्डदानपक्षे पिण्डान्दत्त्वा तत उच्छिष्टानां समीपेऽन्नं प्रकिरेत् ।

१ ख. ततस्त्या[?]।

अनाचान्तेषु पिण्डदानपक्षेऽपि पिण्डं दत्त्वा तत उच्छिष्टानां समीपेऽन्नं प्रकिरेत् । मनुरपि ' सार्ववर्णिकमन्नाद्यमानीयाऽऽप्लाव्य वारिणा । समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि ॥ ' इति । अधुना प्रथमं पात्रं विवृणुयात् । तत उपवीय यज्ञोपवीती भूत्वेत्यर्थः । मनुरपि ' उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः । सव्ये प्राचीनमावीती निवीती कण्ठसज्जने ' ॥ इति । ततो दक्षिणां दत्त्वा ' ॐ स्वधोच्यतामिति ' ब्राह्मणान्विसृजेदतिसृजेत् । अनुज्ञातीयादुत्थापयेदित्यर्थः । ते च ' ॐ स्वधेति ' प्रत्यूचुः ॥ १४ ॥

अस्तु स्वधेति वा ॥ १५ ॥ ख० ८ ॥

अस्तु स्वधेति वा विसृजेत् । तथा सति मे चास्तु स्वधेति प्रत्यूचुः । विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः । दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄन् । ' दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ' इति । उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः । ततो गृहबलिं दद्यादिति धर्मो व्यवस्थितः ॥ ' इति मनुः । अष्टौ श्राद्धानीत्युक्तम् । तत्रान्वष्टक्यं च पूर्वेद्युश्च मासि मासि चेति श्राद्धत्रयं द्वितीयेऽध्याये व्यक्तीकृतम् । पार्वणं चानाहिताग्नेर्व्यक्तीकृतमेव । आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य ततः पार्वणं करोति । पितृयज्ञं तु निर्वर्त्येति मनुः । तत्र पाणिहोमो ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डदानं च । काम्ये च पाणिहोमो भुक्तशेषमात्रेण पिण्डदानं चास्त्येव । मासि श्राद्धस्य पार्वणस्य चैककार्यत्वादन्यतरेणैवालमित्युक्तम् । तत्र मासिश्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य एव । काम्यश्राद्धं कृतं चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्ये । काम्यश्रुतिस्तु तिथिविशेषमपेक्ष्य चरितार्था सती न पुनरावर्तयितुं शक्नोति । अग्निहोत्रद्रव्यवत् । आभ्युदयिके तु युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विर्ऋजुदर्भासने दद्यात् । ' यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहा ' इति यवावपनम् । नान्दीमुखाः पितरः प्रीयन्तामित्यर्घ्यनिवेदनं यथालिङ्गम् । नान्दीमुखाः पितर इदं वो अर्घ्यमित्यर्घ्यप्रदानमन्त्रो यथालिङ्गम् । पाणौ होमः ' अग्नये कव्यवाहनाय स्वाहा । सोमाय पितृमते स्वाहेति ' होममन्त्रौ । मधुवाता इति तृचस्य स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत् । अक्षन्नमीमदन्तेति षष्ठीम् । आचान्तेषु भुक्ताशयान्गोमयेनोपलिप्य तेषु प्राचीनाग्रान्दर्भानास्तीर्य तेषु पृषदाज्यमिश्रेषु भुक्तशेषेणैकैकस्य

---

१ क. इदं चे ।

द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण । मन्त्रावृत्तिरुक्ता । अन्ये तु 'नान्दीमुखेभ्यः पितृभ्यः स्वाहेति'। एवं यथालिङ्गं पिण्डान्निपृणन्ति । सर्पिषि दध्यानयेयेतदेव पृषदाज्यम् । अनुमन्त्रणादि पूर्ववत् । अन्ये त्वनुमन्त्रणादि नेच्छन्ति । ॐ स्वधोच्यतामित्यस्य स्थान उपसंपन्नमिति । शेषं पूर्ववत् । अष्टमीश्राद्धं काण्ववत् । एकोद्दिष्टे त्वेको विप्र एकमर्घ्यपात्रम् । न दैवं न धूपो न दीपो न स्वधाशब्दो न पितृशब्दो न नमःशब्दः, तिलोऽसीति मन्त्रस्योहस्तूष्णीं वा तिलावपनमर्घ्यनिवेदनं तूष्णीम् । अर्घ्ये दत्ते तत्पात्रं न्युब्जं करोति । भोजनार्थादन्नादुद्धृत्य, घृताक्तं कृत्वा, अमुष्मै स्वाहेति पाणिहोमः । अमुष्मैशब्दस्य स्थाने प्रेतनाम वाच्यम् । नाभिश्रवणम् । भुक्तशेषमात्रेणैकं पिण्डं निपृणीयात् । तस्य गोत्रं नाम गृहीत्वा निनयनमन्त्रस्योहः । अनुमन्त्रणादि सर्वं समन्त्रकं भवति । पत्नीप्राशनं तु नास्ति । अभिरम्यतामिति विसर्जनम् । एवं नव श्राद्धवर्जितेष्वेकोद्दिष्टेषु । नवश्राद्धेषु त्वेकोद्दिष्टेषु सर्वममन्त्रकं भवति । 'नवश्राद्धममन्त्रकम्' इति वचनात् । दशाहेषु यानि श्राद्धानि तानि नवश्राद्धानि । 'नवश्राद्धं दशाहानि' इति वचनात् । यत्र यत्रास्माभिः पाणिहोम उक्तस्तत्र सर्वत्र भाष्यकारः पिण्डदानं नेच्छति । स्थालीपाकेन सह भुक्तशेषेण पिण्डदानं चोद्यते । तत्र च स्थालीपाकाभावादिति । ये तु पिण्डदानमिच्छन्ति त एवमाहुः—'स्थालीपाकेन सह पिण्डदानं कार्यम् । न पृथक् । स्थालीपाकेन भुक्तशेषेण चेत्ययमर्थः । न तु यत्र स्थालीपाकस्तत्रैव पिण्डदानं कार्यमिति । तेन तेष्वपि केवलेन भुक्तशेषेण पिण्डदानं कार्यमिति' ॥१९॥८॥

अथ शूलगवः ॥ १ ॥

उक्तोऽर्थः । शूलगव इति कर्मनाम । स वक्ष्यते । शूलोऽस्यास्तीति शूलः । अर्शआदिभ्योऽच् । शूलीत्यर्थः । शूलिने रुद्राय गोपशुना यागः स शूलगवः ॥ १ ॥

शरदि वसन्ते वाऽऽर्द्रया ॥ २ ॥

शरदि वसन्ते वा ऋतावार्द्रानक्षत्रेण स कार्यः ॥ २ ॥

श्रेष्ठं स्वस्य यूथस्य ॥ ३ ॥

स्वस्य यूथस्य श्रेष्ठं कायेनाभिषिच्येत्यनेन संबन्धः ॥ ३ ॥

अकुष्ठिपृषत् ॥ ४ ॥

स च पशुरकुष्ठिपृषत्कार्यः । कुष्ठी च पृषच्च न ग्राह्य इत्यर्थः । पृषद्वर्णो लोहितः शुक्लबिन्दुभिः संयुक्तः ॥ ४ ॥

कल्माष मित्येके ॥ ५ ॥

कल्माषं गृह्णीयादित्येके आहुः । कल्माषो नाम कृष्णबिन्दुचितः ॥ ५ ॥

कामं कृष्णमालोहवांश्चेत् ॥ ६ ॥

कामं कृष्णं गृह्णीयादालोहवाञ्चेद्भवति । जम्बूसदृश इत्यर्थः ॥ ६ ॥

व्रीहियवमतीभिरद्भिरभिषिच्य ॥ ७ ॥

एवंगुणयुक्तं पशुमस्मात्कर्मणः पूर्वमेव व्रीहियवमतीभिरद्भिरभिषिञ्चति स्नपयति वयमेव ॥ ७ ॥

शिरस्त आ भसत्तः ॥ ८ ॥

शिरस्त उपरि प्रारभ्य आ भसत्त आ पुच्छप्रदेशात् ॥ ८ ॥

रुद्राय महादेवाय जुष्टो वर्धस्वेति ॥ ९ ॥

रुद्रायेति मन्त्रेण । तत उत्सृष्टो वर्धते पशुर्यावदुत्पन्नदन्तो भवति सेचनसमर्थो वा भवति ॥ ९ ॥

तं वर्धयेत्संपन्नदन्तमृषभं वा ॥ १० ॥

तं पशुमेवमवश्यं वर्धयेत्ततोऽन्यतरस्यामवस्थायां कर्म कुर्याद्वक्ष्यमाणम् ॥ १० ॥

यज्ञियायां दिशि ॥ ११ ॥

ग्रामाद्बहिः प्राच्यामुदीच्यां वा दिशि कार्यमित्यर्थः ॥ ११ ॥

असंदर्शने ग्रामात् ॥ १२ ॥

यत्रस्थं ग्रामो न पश्यति यत्रस्थो वा ग्रामं न पश्यति तत्र देशे कार्यमित्यर्थः ॥ १२ ॥

ऊर्ध्वमर्धरात्रादुदित इत्येके ॥ १३ ॥

अनयोरन्यतरस्मिन्काले कुर्यात् ॥ १३ ॥

वैद्यं चरित्रवन्तं ब्राह्मणमुपवेश्य सपलाशामार्द्रशाखां यूपं निखाय व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयाऽर्धशिरसि पशुं बद्ध्वा यूपे रशनाया वा नियुनक्ति यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति ॥ १४ ॥

शुल्कवं यो वेदयसौ वैद्यः । यः स्वयं कृतवांनसौ चरित्रवान् । अस्मिन्कर्मण्येवंगुणं ब्राह्मणमुपवेशयेत् । आज्यभागान्तं कृत्वा । अथ शामित्रस्याऽऽयतनं करोति । ततः सपलाशामार्द्रशाखां यूपं यूपार्थं पुरस्तादग्नेर्निखनति । तक्षणं न भवति । शाखामिति वचनात् । सा च यूपप्रमाणा ग्राह्या । व्रतत्यौ कुशरज्जू वा रशने

भवतः । प्रततौ वल्ली पलाशविशेषः । रशने अन्यतरयेति विभूरैया पाठः कर्तव्यः । प्रगृह्यत्वात् । तयोरन्यतरया रशनया यूपं परिवीय परिवेष्ट्यान्यतरया रशनयाऽर्धशिरसि शृङ्गमध्ये दक्षिणं शृङ्गं यथा बद्धं भवति तथा पशुं बद्ध्वा यूपे तत्परिवीतायां रशनायां वा निबध्नाति प्रत्यङ्मुखं यस्मै नम इति मन्त्रेण । यूपादयो विशेषा अस्मिन्नेव पशौ भवन्ति न पश्वन्तरे । कुतः । पशुकल्पेति विध्यभावात् ॥ १४ ॥

**प्रोक्षणादि समानं पशुना विशेषान्वक्ष्यामः ॥ १५ ॥**

प्रोक्षणादिवचनं प्रोक्षणात्प्राक्तनस्य पशुकल्पविहितस्य निवृत्त्यर्थम् । पशुना पशुकल्पेन समानम् । विशेषमात्रं वक्ष्यामः ॥ १५ ॥

**पात्र्या पलाशेन वा वपां जुहुयादिति ह विज्ञायते ॥ १६ ॥**

पात्री दारुमयी । पलाशं पर्णम् । वपाहोमकाले पात्र्या पलाशेन वा वपां जुहुयात् । जुह्वा अपवादः । श्रुत्याकर्ष उत्सन्नश्रुतिमूलत्वदर्शनार्थमित्युक्तं सर्वत्र स्मर्तव्यम् ॥ १६ ॥

त्रयाणामपि प्रदानानां होममन्त्रमाह—

**हराय मृडाय शर्वाय शिवाय भवाय महादेवायोग्राय भीमाय पशुपतये रुद्राय शंकरायेशानाय स्वाहेति ॥ १७ ॥**

द्वादशनामको मन्त्रः ॥ १७ ॥

**षड्भिर्वोत्तरैः ॥ १८ ॥**

उग्रायेत्यादिषण्नामको वा मन्त्रो भवेदित्यर्थः ॥ १८ ॥

**रुद्राय स्वाहेति वा ॥ १९ ॥**

अयमेकनामको वा भवेदित्यर्थः ॥ १९ ॥

**चतसृषु चतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद्यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एतं नमस्ते अस्तु मा मा हिंसीरित्येवं प्रतिदिशं स्वादेशनम् ॥ २० ॥**

वपास्थालीपाकावदानहोमपर्यन्तं कृत्वा स्विष्टकृतः प्रागेकैकस्यां दिशि चतस्रश्चतस्रः कुशसूना निधाय तासु चरुशेषेण मांसशेषेण च बलिं हरेत् । यास्ते रुद्र पूर्वस्यां दिशीति प्रतिदिशं स्वादेशनं कार्यम् । यास्ते रुद्र दक्षिणस्यां दिशि, यास्ते रुद्र प्रतीच्यां दिशि, यास्ते रुद्रोदीच्यां दिशीति । दर्भस्तम्भैस्तृणैश्च फलवद्भिग्रथिताः सर्वेषामग्रं गृहीत्वै कीकृत्य ग्रथिताः कुशसूना उच्यन्ते ॥ २० ॥

चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत कद्रुद्रायेमारुद्रायाऽऽते पित-रिमा रुद्राय स्थिरधन्वन इति ॥ २१ ॥

चतुर्भिर्यथाक्रमेण चतस्रो दिश उपतिष्ठेत । सूक्तग्रहणं कद्रुद्रायेत्यस्मिन्सूक्ते अस्मे सोम श्रियमधीत्यादिना रौद्राणां निवृत्त्यर्थम् ॥ २१ ॥

सर्वरुद्रयज्ञेषु दिशामुपस्थानम् ॥ २२ ॥

एतच्च दिशामुपस्थानं सर्वरुद्रयज्ञेषु भवतीत्यर्थः । एतमेव देवं मध्ये गोष्ठस्य यजेतेति रौद्रं गवेधुकं निर्वपेदित्यादिषु च विज्ञेयम् ॥ २२ ॥

तुषान्फलीकरणांश्च पुच्छं चर्म शिरः पादानित्या(त्य)ग्नावनुप्रहरेत्॥२३॥

स्थालीपाकव्रीहीणां ये तुषाः फलीकरणाश्च । फलीकरणा नाम सूक्ष्मकणाः । तांश्च पुच्छादीनि चाग्नावनुप्रहरेत् ॥ २३ ॥

मोगं चर्मणा कुर्वीतेति शांवत्यः ॥ २४ ॥

शांवत्यस्त्वाचार्यश्चर्मणा मोगमुपानदादि कुर्वीतेति मन्यते ॥ २४ ॥

उत्तरतोऽग्नेर्दर्भवीतासु कुशसूनासु वा शोणितं निनयेच्छ्वासि-नीघोंषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति॥२५॥

अङ्गावदानसमये केनचित्पात्रेण शोणितं गृह्णीयात् । तदिदानीमुत्तरतोऽग्नेः । दर्भवीतास्विति । दर्भराजिषु कुशसूनासु वा शोणितं निनयेच्छ्वासिनीरिति मन्त्रेण ॥ २५ ॥

अथोदङ्ङावृत्य श्वासिनीघोंषिणीर्विचिन्वतीः समश्नुवीः सर्पा एतद्वोऽत्र तद्धरध्वमिति सर्पेभ्यो यत्तत्रासृगूवध्यं वाव स्रुतं भवति तद्धरन्ति सर्पाः ॥ २६ ॥

अथ तत्रस्थ एवोदङ्मुख आवृत्य यत्तत्र संज्ञपनदेशे रुधिरमूवध्यं वा ऊवध्य-गोहं वाऽवस्रुतं भूमौ निपतितं भवति तत्सर्पेभ्य उद्दिशति श्वासिनीरिति मन्त्रेण । तच्च सर्पा हरन्ति देवतारूपेण । ततः स्विष्टकृदादिहृदयशूलोद्वासनसहितं होम-शेषं समापयेत् । 'अथास्य रुद्रदेवस्य यष्टा स्तोतृप्रियस्य वै । सर्वात्मनो भगवतो माहात्म्यमधुनाऽब्रवीत्' ॥ २६ ॥

सर्वाणि ह वा अस्य नामधेयानि ॥ २७ ॥

यावन्ति किल लोके नामधेयान्यभिधानानि सन्ति तानि सर्वाण्यस्यैव नामधेयानि । यावन्तो लोके शब्दाः सन्ति तैः सर्वैरयमेव वाच्य इत्यर्थः । त्रैलोक्ये

१ क. गावेधुकम् । ग. गवीधुकम् । २ क. ज. 'तद्वोऽत्र' ।

यावन्तः पदार्थास्ते सर्वे रुद्र एवेत्यर्थः । एवं ब्रुवता रुद्रस्य सर्वगतत्वं दर्शितम् ॥ २७ ॥

सर्वाः सेनाः ॥ २८ ॥

त्रैलोक्ये यावत्यः सेनाः सन्ति ताः सर्वा अस्यैव सेनाः । न ह्यन्यस्याल्पमात्रस्य सेनाः संभवन्ति । अस्य तु महामाहात्म्यादुपपद्यन्त एव । एवं ब्रुवता राजादयो देवादयश्च रुद्र इत्युक्तं भवति । स्तुतिषु च न पुनरुक्ततादोषः ॥ २८ ॥

सर्वाण्युच्छ्रयणानि ॥ २९ ॥

यावन्ति च लोक उच्छ्रयणान्युत्कृष्टानि भूतानि विद्वत्तया यष्टृतयाऽध्येतृतयाऽध्यापयितृतया दातृतया तपस्तप्तृतयाऽन्येन वा तानि सर्वाण्यस्यैवांशभूतानि । न ह्यन्यस्योत्कृष्टत्वसंभवः । अथवा सर्वाण्युच्छ्रयमाणानि पर्वतादीनि तान्यस्यैव । तेष्वयं वसतीत्यर्थः । एवमनेकधा स्तुतवानाचार्यः ॥ २९ ॥

इत्येवंविद्यजमानं प्रीणाति ॥ ३० ॥

इतिशब्द उक्तपरामर्शी । उक्तेन मार्गेण यो रुद्रदेवं विदित्वा यजति शूलगवेन यजमानस्तमित्येवंविद्यजमानं प्रीणाति रुद्रदेवः । अत्युत्कृष्टेन सुखेन यजमानं संयुनक्तीत्यर्थः ॥ ३० ॥

नास्य ब्रुवाणं चन हिनस्तीति विज्ञायते ॥ ३१ ॥

अस्य कर्मणो ब्रुवाणं वक्तारम् । च नेत्यपिशब्दार्थः । तेन च वक्तारमपि विज्ञातारमप्यध्येतारमप्युपकर्तारमपि न हिनस्ति रुद्रदेव इत्येवं श्रूयते ॥ ३१ ॥

नास्य प्राश्नीयात् ॥ ३२ ॥

अस्य पशोर्हुतशेषं न प्राश्नीयात् । अन्यस्त्विच्छातः प्राश्नीयाद्वा । अयं निषेध एकेषां मतेन कृतः । उत्तरत्र प्राशनविधानात् ॥ ३२ ॥

नास्य ग्राममाहरेयुरभिमारुको ह्येष देवः प्रजा भवतीति ॥ ३३ ॥

अस्य कर्मणः संबन्धीनि द्रव्याणि ग्रामं नाऽऽहरेयुः केचिदपि । प्रजा अभिमारुको ह्येष देवो भवति । आहरणे सत्याहृतवतीः प्रजा हिनस्ति रुद्रदेवः । इतिशब्दो हेतौ । तस्मान्नाऽऽहरेयुरिति ॥ ३३ ॥

अमात्यानन्ततः प्रतिषेधयेत् ॥ ३४ ॥

पुत्रादीन्समीपतः प्रतिषेधयेन्नात्राऽऽगन्तव्यमिति ॥ ३४ ॥

नियोगात्तु प्राश्नीयात्स्वस्त्ययन इति ॥ ३५ ॥

हुतशेषं पशोर्नियोगान्नियमेन प्राश्नीयात्स्वस्त्ययन इति कृत्वा । अतो ज्ञायते निषेध एकीयः पक्ष इति ॥ ३५ ॥

अधुनाऽस्य कर्मणः फलमाह—

स एष शूलगवो धन्यो लोक्यः पुण्यः पुत्र्यः पशव्य आयुष्यो यशस्यः ॥ ३६ ॥

शूलगवेनेष्टवतो धनलोकपुण्यपुत्रपश्वायुर्यशांसि भवन्तीत्यर्थः ॥ ३६ ॥

इष्ट्वाऽन्यमुत्सृजेत् ॥ ३७ ॥

एवं शूलगवेनेष्ट्वाऽन्यं पशुं श्रेष्ठं स्वस्य यूथस्येत्यादिलक्षणयुक्तमभिविच्योत्सृजेत्पुनः शूलगवकरणार्थम् ॥ ३७ ॥

नानुत्सृष्टः स्यात् ॥ ३८ ॥

सर्वथाऽनुत्सृष्टो नैव स्यात् । शूलगवार्थं सकृदुत्सर्गोऽवश्यं कार्यः । शूलगवः सकृदवश्यं कार्य इत्यर्थः । एवं च कृत्वा नित्यं कर्मेदमिति ज्ञायते ॥ ३८ ॥

न ह्यपशुर्भवतीति विज्ञायते ॥ ३९ ॥

न ह्यपशुर्भवति । पशुगुणकं कर्म पशुः । शूलगवनामकेन पशुकर्मणा रहितो न भवेदित्यर्थः । यत एवं श्रूयते तस्मात्सकृदुत्सर्गोऽवश्यं कार्यः ॥ ३९ ॥

शन्तातीयं जपन्गृहानियात् ॥ ४० ॥

शूलगवं समाप्य ग्रामं प्रविश्य ततः प्रागुक्तं शन्तातीयं जपन्गृहानियाद्गच्छेत् । प्रविशेदित्यर्थः ॥ ४० ॥

अथ नैमित्तिकं कर्माऽऽह-

पशूनामुपतापे एतमेव देवं मध्ये गोष्ठस्य यजेत् ॥ ४१ ॥

पशूनामारण्यानां यदोपतापो व्याधिरभूत्तदैतमेव देवं द्वादशनामकं षण्नामकमेकनामकं वेत्यर्थः । तं मध्येगोष्ठं यजेत् ॥ ४१ ॥

तत्र द्रव्यमाह—

स्थालीपाकं सर्वहुतम् ॥ ४२ ॥

आज्यभागान्तं कृत्वोपस्तीर्य द्रव्यां स्थालीपाकं सर्वं निधाय प्रत्यभिघार्य जुहुयात् । एवं सर्वहुतं कुर्यात् । अत्र प्रधानहविषः शेषाभावात्स्विष्टकृन्न कार्यः । द्विगुणप्रधानं कार्यमित्युक्तम् । ततः सर्वप्रायश्चित्तादि समापयेत् ॥ ४२ ॥

बर्हिराज्यं चानुप्रहृत्य धूमतो गा आनयेत् ॥ ४३ ॥

ततो बर्हिः आज्यं च । पशव्यप्राप्त्यानुकूलीकरणाशायानुप्रहृत्य प्रतिधूमं गा आनयेत् ॥ ४३ ॥

---

१ ख. द्रव्यं ।

शन्तातीयं जपन्पशूनां मध्यमियान्मध्यमियात् ॥ ४४ ॥

ततः शन्तातीयं जपन्पशूनां मध्यमियाद्गच्छेत् । प्रविशेदित्यर्थः । अन्ये तु शान्तातिशब्दवन्ति सूक्तानि शंन्तातीयशब्देनोच्यन्त इति व्याचख्युः । कानि तानि 'ईळे द्यावापृथिवी' 'इदं ह नूनमेषाम्' 'उत देवा अवहितम्' इत्येतानि । 'शं न इन्द्राग्नी' इतीदं शान्तातीयमिति प्रसिद्धमित्युक्तमस्माभिः प्राक् । अध्यायान्तलक्षणार्थं द्विर्वचनम् ॥ ४४ ॥

नमः शौनकाय नमः शौनकाय ॥ ४५ ॥ ख० ॥ ९ ॥

इत्याश्वलायनगृह्यसूत्रे चतुर्थोऽध्यायः ॥ ४ ॥

इत्याश्वलायनगृह्यसूत्रं समाप्तम् ॥

शौनकनमस्कारस्तत्प्रसादेनेदं गृह्यशास्त्रमस्माभिः प्रणीतं तच्च समाप्तमिति ज्ञापनार्थम् ॥ ४५ ॥ ९ ॥

आश्वलायनकं गृह्यमित्थं वै विवृतं मया ।
सद्भिः सारं तु वै ग्राह्यमसारं त्यज्यतामिति ॥

इत्याश्वलायनगृह्यसूत्रवृत्तौ नारायणीयायां चतुर्थोऽध्यायः ॥ ४ ॥

अथ बह्वृचाचार्यान्तरमतेन सपिण्डीकरणप्रयोगं वक्ष्यामः सौकर्यार्थम् । त(स)त् संवत्सरे पूर्णे द्वादशाहे वा कार्यम्(र्यः)। तत्र नियमेन द्वौ ब्राह्मणौ दैवे । पितृकृत्ये तु त्रयः । इतरत्सर्वं पार्वणवत् । विशेषमात्रं वक्ष्यामः । तत्र चत्वार्यर्घ्यपात्राणि । एकं प्रेतस्य । त्रीणि पितृपितामहप्रपितामहानाम् । तत्र चतुर्ष्वपि दर्भानन्तर्धाय चतुर्ष्वप्यपो निषिच्य चत्वारि सकृदनुगन्ध्य प्रेतपात्रे तूष्णीं तिलान्प्रक्षिप्य ततो मन्त्रेण त्रिषु पात्रेषु क्षिपति । मन्त्रावृत्तिरुक्ता । ततो गन्धमाल्यैश्चत्वार्यपि पात्राण्यर्चयित्वा प्रथमं पात्रमितरेषु पित्रादिपात्रेषु त्रिषु निनयति 'समानीव' इत्यृचा। ततोऽर्घ्यनिवेदनादि पार्वणवत् । अत्र स्थालीपाको नास्तीति कृत्वा भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वाऽग्नौ कुर्यात् । पाणिषु वा पूर्वोक्तेन विधिना जुहुयात् । ततो हुतशेषं पितृभ्यः पाणिषु ददाति । अग्निहोमपक्षे पाणिहोमपक्षे च समानमिदम् । अलं पाणितले दत्तमिति पूर्वप्राशननिषेधो द्रष्टव्यः । पिण्डनिर्वपणकाले प्रेतोद्देशेनैकं पिण्डं तूष्णीं दत्त्वा पित्रादिभ्यः पार्वणवद्दत्त्वा प्रेतपिण्डं त्रिधा विभज्य त्रिषु

पिण्डेषु निदध्यात् । मधुमतीभिः ' मधुवाता ' इति तिसृभिः ' संगच्छध्वम् ' इति द्वाभ्यां च। ततोऽनुमन्त्रणादि सर्वं पार्वणवत् । ॐ स्वस्त्यस्त्विति ब्राह्मणान्विसर्जयेत् । एवं चतुर्थस्य प्रपितामहस्य विच्छेदो भवति । स्त्रिया अप्येवमेव सपिण्डीकरणम् । तस्यास्तु मातृपितामहीप्रपितामहीभिः सपिण्डीकरणम् । एवं सति चतुर्थ्याः प्रपितामह्या. पिण्डविच्छेदो भवति । अनपत्यानां तु प्रेताना सपिण्डीकरणं नास्ति । अन्यस्यापि यस्य सपिण्डीकरणं कार्यं येन कर्त्रा कार्यं यैश्च सह पिण्डदानं कार्यं तत्सर्वं स्मृतितोऽवगन्तव्यम् । एवमाचार्यान्तरमतेन प्रयोगः । सूत्रार्थमिदमत्र व्याख्यातम् । इत्याश्वलायनसपिण्डीकरणप्रयोगः ॥

आश्वलायनगृह्यस्य भाष्यं भगवता कृतम् ।
देवस्वामिसमाख्येन विस्तीर्णं तत्प्रसादतः ॥ १ ॥
दिवाकरद्विजवर्यसूनुना नैध्रुवेण वै ।
नारायणेन विप्रेण कृतेयं वृत्तिरीदृशी ॥ २ ॥

# अथ गृह्यपरिशिष्टम् ।

## अथ प्रथमोऽध्यायः ।

गृह्ये तु यानि चोक्तानि क्वचिद्वैतानिकेऽपि वा
विधेरल्लोपनार्थाय तानि वक्ष्याम्यतःपरम् ॥

### १ ग्रन्थप्रतिज्ञा ।

अथास्मिन्नाश्वलायनगृह्ये यानि कानिचिदनुक्तानीहेच्छता नाऽऽचार्येणानुमतानि ज्ञापितानि यानि चोक्तप्रदर्शितक्रियाणि तानि सर्वावबोधाय यथावदभिधास्यामः । कर्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत प्रत्यृचोक्तिष्वृगन्तेष्वनादेश आज्यं द्रव्यं स्रुवः करणमवदानवत्सु दर्वी पाणिः कठिनेषु कर्मावृत्तौ मन्त्रोऽप्यावर्तते कर्मणोऽन्त आचमनं चेति सामान्यम् ॥ १ ॥

### २ संध्यावन्दनकालादि प्राणायामान्तम् ।

अथ संध्यामुपासीतेत्याचार्यो यावहोरात्रयोः संधी यश्च पूर्वाह्णापराह्णयोस्तत्कालमथा देवता संध्या तामुपासीत । बहिर्ग्रामात्प्राच्यामुदीच्यां वाऽन्यस्यां दिश्यनिन्दितायामनल्पमुदकाशयमेत्य प्रातः शुचिर्भूतः पाणिपादमुखानि प्रक्षाल्य, शुचौ देशे भूमिष्ठपादोऽनपाश्रित उपविष्टः शिखां बद्ध्वाऽऽचामेत् । प्रकृतिस्थमफेनाबुद्बुदमुदकमीक्षितं दक्षिणेन पाणिनाऽऽदाय कनिष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य, तिस्र इतराङ्गुलीः संहतोर्ध्वाः कृत्वा ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः पीत्वा पाणिं प्रक्षाल्य स्पृष्टास्य साङ्गुष्ठमूलेनाऽऽकुञ्चितोष्ठमास्यं द्विः प्रमृज्य सकृच्च संहतमध्यमाङ्गुलीभिः पाणिं प्रक्षाल्य सव्यं पाणिं पादौ शिरश्चाभ्युक्ष्य स्पृष्टास्यः संहतमध्यमाङ्गुलित्रयाग्रेणाऽऽस्यमुपस्पृश्य साङ्गुष्ठया प्रदेशिन्या घ्राणबिलद्वयमनामिकया चक्षुःश्रोत्रे कनिष्ठिकया च नाभिं तलेन हृदयं सर्वाभिरङ्गुलीभिः शिरस्तदग्रैरंसौ चोपस्पृशेदित्येतदाचमनम् । एवं द्विराचम्याऽऽस्नानमभ्युक्ष्य ततो दन्तान्धावयित्वा पुनर्द्विराचम्य दर्भपवित्रपाणिः प्रथममन्त्रकं पुच्छदशमात्रिकं प्राणायामत्रयं कृत्वा समन्त्रकं सकृत्कुर्यादायतप्राणः सप्रणवां सप्तव्याहृतिकां सावित्रीं सशिरस्कां त्रिरावर्तयेदित्येष समन्त्रः प्राणायामः ॥ २ ॥

### ३ मार्जनविधिः ।

अथ कर्म संकल्प्य शुचौ पात्रे सव्ये पाणौ वाऽप आदाय स्थिरे तूदकाशये

यावति कर्म कुर्वीत तावत उदकस्य विभागं कल्पयित्वा तीर्थानि तत्राऽऽगाह्य ता अपः सदर्भपाणिनाऽऽदायोत्तानशिरसि मार्जयेदोंपूर्वं पच्छ आपो हिष्ठेति तिसृभिरथाऽऽचमनम् । उदकमादाय, सूर्यश्चेति पिबेत् । सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्राव्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किंचिद्दुरितं मयि, इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहेत्येतत्समन्त्रमाचमनमथ पुनराचम्य मार्जयेत्प्रणवव्याहृतिसावित्रीभिर्ऋग्वशा आपो हिष्ठेति सूक्तेन गायत्रीशिरसा चाम्भसाऽऽत्मानं परिषिञ्चेदेतन्मार्जनम् ॥ ३ ॥

## ४ अघमर्षणम् ॥

अथ गोकर्णवत्कृतेन पाणिनोदकमादाय, नासिकाग्रे धारयन्कृष्णघोरपुरुषाकृतिं पाप्मानमात्मानमन्तर्व्याप्य स्थितं विचिन्त्य, संयतप्राणोऽघमर्षणसूक्तं द्रुपदामृचं चाऽऽवर्त्य दक्षिणेन नासाबिलेन शनैः प्राणं रेचयन्सर्वतस्तेन संहृत्य, कृष्णं रेचनवर्त्मना पाणिस्थ उदके पतितं ध्यात्वा, तदुदकमनवेक्षमाणो वामतो भुवि तीव्राघातेन क्षिप्त्वा, तं पाप्मानं वज्रहतं सहस्रधा दलितं भावयेदेष पाप्मव्यपोहः । एनमेके न कुर्वन्ति । मार्जनेनैव तस्य व्यपोहितत्वादिति । 'द्रुपदादिवेन्मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाऽऽज्यमापः शुन्धन्तु मैनसः ' इतीयं द्रुपदा ऋक् पापशोधिनी ॥ ४ ॥

## ५ अर्घ्यादि गायत्र्यर्थान्तम् ।

अथाऽऽचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्याऽऽदित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिर्निवेदयन्नुत्क्षिपेच्चे पुनः पाप्मव्यपोहं नेच्छति त आचम्येवार्घ्यमुत्क्षिपेयुरेतदेवार्घ्यनिवेदनमसावादित्यो ब्रह्मेति प्रदक्षिणं परियन्परिषिच्याप उपस्पृश्य, शुचौ देशे दर्भाम्भसोक्षिते दर्भानास्तीर्य, व्याहृतिभिरुपविश्य, प्राणायामत्रयं कृत्वाऽऽत्मानं व्याहृतिभिरभ्युक्ष्य सावित्र्या दैवतमनुस्मृत्यापादिकं वा तामेतां चतुरक्षरशो विभक्तामन्तर्योजितैः षड्भिस्तदङ्गमन्त्रैर्यथाक्रममात्मनि विन्यस्याऽऽत्मानं तद्रूपं भावयेद्यथा तत्सवितुर्हृदयाय नम इति हृदये, वरेण्यं शिरसे स्वाहेति शिरसि, भर्गो देव शिखायै वषडिति शिखायां, स्य धीमहि कवचाय हुमित्युरसि धियो यो नः नेत्रत्रयाय वौषट् नेत्रललाटदेशेषु विन्यस्याथ प्रचोदयादस्त्राय फडिति करतलयोरस्त्रं प्राच्यादिषु दशसु दिक्षु विन्यसेदेषोऽङ्गन्यासः । एनमेके नेच्छन्ति स हि विधिरवैदिक इत्यर्थमनुसंदधानाः । मन्त्रदेवतां ध्यात्वाऽऽगच्छ वरदे देवीत्यावाह्य निष्ठेजष्टेषु नक्षत्रेष्वामण्डलदर्शनान्मन्त्रार्थमनुसंदधानः । संधानं नेच्छन्त्येके । प्रणवव्याहृतिपूर्विकां सावित्रीं जपेत् । जपं चाक्षसूत्रेणानामिकाया मध्या-

दीरभ्य प्रदक्षिणं दशभिरङ्गुलीपर्वभिर्वा गणयेत् । ' आगच्छ वरदे देवि जप्ये मे संनिधा भव । गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ' इत्यावाहनमन्त्रः । सवितुर्देवस्य वरणीयं तेजो ध्यायेमहि योऽस्माकं कर्माणि प्रेरयतीति मन्त्रार्थः ॥ ५ ॥

## ६ त्रिकालगायत्रीध्यानादि ।

अथ देवताध्यानम् । या संध्योक्ता सैव मन्त्रदेवता सत्रूपास्यते तां सर्वदैकरूपां ध्याये॰ दनुसंध्यमन्यान्यरूपां वा यदेकरूपामृग्यजुःसामत्रिपदां त्रियंगूर्ध्वाधरदिक्षु षट्कुक्षिं पञ्चशिरसमग्निमुखीं विष्णुहृदयां ब्रह्मशिरस्कां रुद्रशिखां दण्डकमण्डलुवक्षसूत्राभया॰ ङ्कचतुर्भुजां शुभ्रवर्णां शुभ्राम्बरानुलेपनस्रगाभरणां शरच्चन्द्रसहस्रप्रभां सर्वदेवमयी- मिमां देवीं गायत्रीमेकामेव तिसृषु संध्यासु ध्यायेदथ यदि भिन्नरूपां तां प्रातर्बालां बालादित्यमण्डलमध्यस्थां रक्तवर्णां रक्ताम्बरानुलेपनस्रगाभरणां चतुर्वक्त्रां दण्डक॰ मण्डलुवक्षसूत्राभयाङ्कचतुर्भुजां हंसासनारूढां ब्रह्मदैवत्यामृग्वेदमुदाहरन्तीं भूर्लोका- धिष्ठात्रीं गायत्रीं नाम देवतां ध्यायेदथ मध्यंदिने तां युवतीं युवादित्यमण्डलम॰ ध्यस्थां श्वेतवर्णां श्वेताम्बरानुलेपनस्रगाभरणां पञ्चवक्त्रां प्रतिवक्त्रं त्रिनेत्रां चन्द्र- शेखरां त्रिशूलखड्गखट्वाङ्गडमरुकाङ्कचतुर्भुजां वृषभासनारूढां रुद्रदैवत्यां यजु- र्वेदमुदाहरन्तीं भुवर्लोकाधिष्ठात्रीं सावित्रीं नाम देवतां ध्यायेदथ सायं तां वृद्धां वृद्धादित्यमण्डलमध्यस्थां श्यामवर्णां श्यामाम्बरानुलेपनस्रगाभरणामेकवक्त्रां शङ्ख- चक्रगदापद्माङ्कचतुर्भुजां गरुडासनारूढां विष्णुदैवत्यां सामवेदमुदाहरन्तीं स्वर्लोका॰ धिष्ठात्रीं सरस्वतीं नाम देवतां ध्यायेद्ध्यानं नेच्छन्त्येके । तत आवाह्य जपित्वा जातवेदसे सुनवाम सोम तच्छंयोरावृणीमहे नमो ब्रह्मणे नमो अस्त्वग्नय इत्येताभिरुप॰ स्थाय प्रदक्षिणं दिशः साधिपा नत्वाऽथ संध्यायै गायत्र्यै सावित्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्य तत ' उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि । ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखमिति संध्यां विसृज्य भद्रं नो अपिवातय मन इत्युक्त्वा शान्तिं च त्रिरुच्चार्य नमो ब्रह्मण इति प्रदक्षिणं परिक्रामन्नासत्य- लोकादापातालादालोकालोकपर्वतात् । ये सन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नमः ' इति नमस्कृत्य भूमिमुपसंगृह्य गुरून्वृद्धांश्चोपसंगृह्णीयादेवम् । सायं मित्रो- पास्तु सूर्यश्चेति मन्त्रे सूर्यस्थानेऽग्निपदमावपेत्प्राज्याहुना रात्रिरहः सत्ये ज्योतिषी- त्यन्ते ब्रूयाजपं चार्धास्तमिते मण्डले आ नक्षत्रदर्शनादासीनेनेति ॥ ६ ॥

## ७ आचमनमन्त्रादि ।

अथ मध्यंदिन आपः पुनन्त्विति मन्त्राचमनमापः पुनन्तु पृथिवीं पृथिवी पूता पुनातु

माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रह१स्वाहेत्यथाऽऽकृष्णीयया हंसवत्या वा त्रिः सकृद्वाऽर्घ्यमुत्क्षिप्योर्ध्वबाहुरुन्मुख उदुत्यं जातवेदसं चित्रं देवानामिति सूक्ताभ्यामाभ्यां वा मन्त्राभ्यां तच्चक्षुरित्येकया वाऽऽदित्यमुपस्थाय जपं प्राङ्मुख आसीनो यथेष्टकालं कुर्यादित्येष संध्याविधिर्व्याख्यातः ॥ ७ ॥

## ८ मन्त्राणामृषिदैवतच्छन्दःक्रमः ।

अथास्य मन्त्राणामृषिदैवतच्छन्दांसि । प्रणवस्य ब्रह्मा परमात्मा देवी गायत्री, व्याहृतीनां सप्तानां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाः प्रजापतिर्वा सर्वासामग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यस्तिसृणामाद्यानां समस्तानां वा देवता प्रजापतिर्बृहती सावित्र्या विश्वामित्रः सविता गायत्री शिरसः प्रजापतिर्ब्रह्माग्निवाय्वादित्या देवता यजुश्छ दः । आपो हि सिन्धुद्वीप आम्बरीषो वाऽऽपं गायत्रं द्व्यनुष्टुबन्तं पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे सूर्यश्च ब्रह्मासूर्यमन्युमन्युपतयः प्रकृतिरापः पुनन्तु विष्णुरापो हिष्ठा अग्निश्च रुद्रोऽग्निमन्युमन्युपतयः प्रकृतिः ऋतं च माधुच्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभं जातवेदसे कश्यपो जातवेदा अग्निस्त्रिष्टुप् तच्छंयोः शंयुर्विश्वेदेवाः शक्करी नमो ब्रह्मणे प्रजापतिर्विश्वेदेवा जगती आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् हंसः शुचिषद्वा; मदेवः सूर्यो जगत्युदुत्यं प्रस्कण्वः सूर्यो गायत्रमन्त्याश्चतस्रोऽनुष्टुभश्चित्रं देवानामिति कुत्सः सूर्यस्त्रिष्टुप् तच्चक्षुर्वसिष्ठः सूर्यः पुरउष्णिक् दैवतस्मरणमेव वा - कुर्यादेवमन्यत्र व्याख्यातम् ॥ ८ ॥

## ९ स्नानविधिः ।

अथ स्नानविधिस्तत्प्रातर्मध्याह्ने च गृहस्थः कुर्यादेकतरत्र वा प्रातरेव ब्रह्मचारी यतिस्त्रिषु सवनेषु द्विस्त्रिर्वा वानप्रस्थस्तत्प्रातः सह गोमयेन कुर्यान्मृदा मध्यंदिने सायं शुद्धा निरद्भिर्ने प्रातः स्नानात्प्राक्संध्यामुपासीत प्रावरुत्सृष्टं गोमयमन्तरिक्षस्थं संगृह्य भूमिष्ठं चोपर्यधश्च संत्यक्तं तीर्थमेत्य धौतपादपाणिमुख आचम्य संध्योक्तवदात्माभ्युक्षणादि च कृत्वा द्विराचम्य दर्भपाणिः संयतप्राणः कर्म संकल्प्य गोमयं वीक्षितमादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणं भागं प्रणवेन दिक्षु विक्षिप्योत्तरोत्तरं तीर्थे क्षिप्त्वा मध्यमं मानस्तोक इत्यृचाऽभिमृश्य गन्धद्वारामित्यनया मूर्धादिसर्वाङ्गमालिप्य प्राञ्जलिर्वरुणं हिरण्यशृङ्गमिति द्वाभ्यामव मे हेड इति द्वाभ्यां प्रसन्नाजे बृहद्वदेति सूक्तेन प्रार्थ्य हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः । यन्मे मनसा

वाचा कर्मणा वा दुष्कृतं कृतम् । तत्र इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनरिति । अथ या. प्रवतो निवत उद्वत इत्येतया तीर्थमभिमृश्यावगाह्य स्नातो द्विराचम्य मार्जयेदप्सवो यन्त्यश्वभिरित्यष्टाभिरापो हिष्ठेति च नवभिरथ तीर्थमङ्गुष्ठेनेमं मे गङ्ग इत्यृचा त्रिः प्रदक्षिणमालोड्य प्रकाशपृष्ठमग्नावघमर्षणसूक्तं त्रिरावर्त्य निमज्योन्मज्याऽऽदित्यमालोक्य द्वादशकृत्व आप्लुत्य पाणिभ्यां शङ्खमुद्रया योनिमुद्रया वोदकमादाय मूर्ध्नि मुखे बाह्वोरुरसि चाऽऽत्मानं गायत्र्याऽभिषिच्य 'त्वं नो अग्ने वरुणस्य विद्वानिति' द्वाभ्यां 'तरत्समंदीधावतीति' च सूक्तेन पुनः स्नायान्मूर्ध्नि चाभिषिञ्चेत्—'तद्विष्णो. परमं पदमग्ने रक्षाणो अंहसो यत्किंचेदं वरुणदैव्येजने' इत्येता जपेत् । स्रोतोभिमुखः सरित्सु स्नायादन्यत्राऽऽदित्याभिमुखोऽथ साक्षताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन व्याहृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन्देवान्सकृत्सकृत्तर्पयित्वाऽथोदङ्मुखो निवीती सयवाभिरद्भिः प्राजापत्येन तीर्थेन कृष्णद्वैपायनादीनृषींस्ताभिर्व्याहृतिभिर्द्विर्द्विस्तर्पयित्वाऽथ दक्षिणाभिमुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिर्व्याहृतिभिरेव सोमः पितृमान्यमोऽङ्गिरस्वानग्निष्वात्ताः कव्यवाडन इत्यादींस्त्रींस्त्रींस्तर्पयेदेतत्स्नानाङ्गतर्पणमथ तीरमेत्य दक्षिणाभिमुखः प्राचीनावीती 'ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकमिति' वस्त्रं निष्पीड्य यज्ञोपवीत्यप उपस्पृश्य परिधानीयमभ्युक्ष्य परिधाय द्वितीयं चोत्तरीयं पर्युक्षितं प्रावृत्य द्विराचामेद्वक्ष्यमाणसंध्यामुपासीतेदं प्रातःस्नानविधानम् ॥ ९ ॥

## १० मध्याह्नस्नानविधिः ।

अथ मध्यंदिने तीर्थमेत्य धौतपाणिपादमुखो द्विराचम्याऽऽयतप्राणः स्नानं संकल्प्य दर्भपवित्रपाणिः शुचौ देशे खनित्रेण भूमिं गायत्र्यस्त्रेण खात्वोपरि मृदं चतुरङ्गुलमुद्धृत्याधस्तान्मृदं तथा खात्वा गायत्र्याऽऽदाय गर्तमुद्धासितया मृदा परिपूर्य मृदमुपात्ता शुचौ देशे तीरे निधाय गायत्र्या प्रोक्ष्य तच्छिरसा त्रेधा विभज्यैकेन मूर्ध्न आ नाभेरपरेण चाधस्तादङ्गमनुलिप्याप्स्वाप्लुत्य क्षालयित्वाऽऽदित्यं निरीक्ष्य, तं ध्यायन्स्नायादेतन्मलस्नानमाहुः । अथ तीरे द्विराचम्य तृतीयमस्त्रेणाऽऽदाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभागमस्त्रेण दिक्षु दशसु विनिक्षिप्योत्तरं तीर्थे क्षिप्त्वा तृतीयं गायत्र्याऽभिमन्त्रितमादित्याय दर्शयित्वा तेन मूर्ध्न आ पादाद्गायत्र्या प्रणवेन वा सर्वाङ्गमनुलिप्य सुमित्र्या न आप ओषधयः सन्त्विति सकृदद्भिरात्मानमभिषिच्य दुर्मित्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति मृच्छेषमद्भिः क्षालयेत् । अथ वरुणप्रार्थना । तर्पणान्तेनोक्तेन विधिना

स्नानं त्वास्मिन्प्राग्न्यज्ञतर्पणाद्धस्तं निष्पीडयेदपुत्रादयो ह्यन्ते तर्पयां इत्येषं स्नान-विधिः । तदेतदसंभवेऽद्भिरेव कुर्याद्धोमदिनादिषु च न च गृहे मृत्स्नायाञ्च च शीतोदकेन शीतोष्णोदकेन गृहे स्नायान्मन्त्रविधिं वर्जयेद्बहिर्वा शुचौ देशे सर्वं पश्चा-त्कुर्यादिति ॥ १० ॥

## ११ मन्त्रस्नानप्रकारः ।

अथाशक्तस्य मन्त्रस्नानं शुचौ देशे शुचिराचान्तः प्राणानायम्य दर्भपाणिः सव्ये पाणावपः कृत्वा तिसृभिरापो हिष्ठीयाभिः पच्छः प्रणवपूर्वं दर्भोदकैर्मार्जयेत् । पादयोर्मूर्ध्नि हृदये मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाथार्धर्चशो मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाथ ऋक्शो हृदये पादयोर्मूर्ध्नि चाथ तृचेन मूर्ध्नीति मार्जयित्वा गायत्र्या दशवाऽभिमन्त्रिता अपः प्रणवेन पीत्वा द्विराचामेदेतन्मन्त्र-स्नानम् ॥ ११ ॥

## १२ वैश्वदेवविधिः ।

अथ वैश्वदेवो दिनस्य प्रारम्भो नात्र पाकयज्ञतन्त्रमग्निमौपासनं पचनं वा परि-समुह्य पर्युक्ष्याऽऽयतनमलंकृत्य सिद्धं हविष्यमधिश्रित्याद्भिः प्रोक्ष्योदगुद्वास्याग्नेः प्रत्यग्दर्भेषु निधाय सर्पिषाऽभ्यज्य सव्यं पाणितलं हृदये न्यस्य सकृदवदानेन पाणिना जुहुयात् । ' सोमाय वनस्पतये ' इत्येकाहुतिं ' दिवाचारिभ्यो विश्वेभ्यो देवेभ्यः ' इति सर्वभूतानां विशेषणं प्रजापतेरुक्तिरिष्यते प्रधानबलेरुदवपुरपवाछि-स्तदिदमन्नाभावे तण्डुलादिभिः कुर्यादेके चान्ते च परिसमुह्य पर्युक्षेदेके नात्र तन्त्र-मिति पर्यूहनोक्षणे अपि न कुर्वन्ति केवलं हुत्वोपतिष्ठन्ते । विश्वेदेवाः सर्वे देवास्तद्दै-वत्यमितीदं वैश्वदेवम् ॥ १२ ॥

## १३ पुण्याहवाचनाविधिः ।

अथ स्वस्तिवाचनमृद्धिपूर्तेषु स्वस्त्ययनं वाचयेदित्याचार्य ऋद्धिर्विवाहान्ता अपत्यसंस्काराः, प्रतिष्ठोद्यापने पूर्तं, तत्कर्मण आद्यन्तयोः कुर्याच्छुचिः स्वलंकृतो वाचयीत तथाभूते स्थानि मङ्गलसंभारभृति युग्मान्ब्राह्मणान्प्रशस्तानाचारलक्षणसंप-न्नानर्घ्यादिभिरभ्यर्च्य दक्षिणया तोषयेत् । अथ प्राङ्मुखाः प्रशस्ता दर्भपाणयस्ति-ष्ठेयुस्तद्दक्षिणतो वाचयितोदङ्मुख. संस्कार्यो वाचयितुर्दक्षिणपार्श्वमातिष्ठेयु· । अथ वाचयिता दर्भपाणिरपां पूर्णमुदकुम्भं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन्समाहितो ' मनः समाधीयतामिति ' ब्राह्मणान्ब्रूयात्समाहितमनसः स्मः ' इति ते ब्रूयुः ' प्रसीदन्तु भवन्तः ' इति वाचयिता ' प्रसन्ना. स्मः ' इतीतरे । अथ ते सर्वे संहत्य

शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नमायुष्यमारोग्यं शिवं कर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धिरिष्टसमृद्धिरित्येतानि पञ्चदश तन्त्राण्युक्तानि तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुः। अथ वाचयिता पूर्ववत्तल्लिङ्गमन्त्राऽपठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैरों पुण्याहं भवन्तो ब्रुवन्तु स्वस्ति भवन्तो ब्रुवन्तु ऋद्धिं भवन्तो ब्रुवन्त्विति ब्रुयात्तेऽपि तथा प्रत्येकं प्रतिब्रूयुरोमित्युच्यतामित्यृद्धौ प्रतिब्रूयुः । अथ प्राङ्मुखमासीनं सामात्यं कर्तारं ब्राह्मणाः सपल्लवदर्भपाणयः प्राङ्मुखास्तिष्ठेयुः शान्तिपवित्रलिङ्गाभिर्ऋग्भिरभिषिञ्चेयुः पुरन्ध्र्यो नीराजनादि कुर्युः ॥ १३॥

## १४ स्थण्डिलादि ।

अथ होष्यद्भर्मे किंचिदुच्छ्रिता समाऽकृत्रिमा भूमिः स्थण्डिलमुच्यते । तदिषुमात्रावरं सर्वतो गोमयेन प्रदक्षिणमुपलिप्य यज्ञियशकलमूलेनोल्लिख्य शकलं प्रागग्रं निधाय स्थण्डिलमभ्युक्ष्य शकलमाग्नेय्यां निरस्याप उपस्पृशेत् । एष आयतनसंस्कारः । तत्राग्निं व्याहृतिभिरभ्यात्मानं प्रतिष्ठाप्यान्वादधाति । कर्मसंकल्पपुरःसरं द्रव्यदेवताग्रहणाय द्वयोस्तिसृणां वा समिधामभ्याधानमन्वाधानम् । अथेध्माबर्हिषी संनह्य दर्भैः प्रादेशमात्रेस्त्रिसंधी त्रिवृतौ रज्जू कुर्यात्पाणिभ्यां सव्योत्तराभ्यां पूर्वं वर्तयेत्ततो दक्षिणोत्तराभ्यामन्ते प्रदक्षिणावृतं रज्जुं कुर्यादेतद्रज्जुकरणम् । प्रथमां रज्जुमुदगग्रामास्तीर्य प्रादेशमात्रं दर्भमुष्टिं छित्वा प्रागग्रां तस्यां निधाय तया बर्हिर्द्विरावेष्टयित्वा(वेष्ट्य) तन्मूलं च द्विरावेष्ट्य तां प्रथमवेष्टनस्याधस्तादुन्नयेदेवं द्वितीययेध्मं सकृदावेष्ट्य संनह्येदरत्निमायाम इध्मः पञ्चदशदारुकस्तदुपरि निदध्यादेतदिध्माबर्हिषोः संनहनम् । अथ सोदकेन पाणिना प्रागुदीच्या आरभ्य प्रदक्षिणमग्निं त्रिः परिसमुह्य प्रादेशमात्रैर्दर्भैः प्रदक्षिणं प्राच्यादिषु प्रतिदिशमुदगपवर्गं परिस्तृणीयाद्दक्षिणोत्तरयोः संधिषु मूलाग्रैराच्छादयेद्ब्रह्मविष्टान्वा दर्भांस्तयोस्तृणीयादुत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनाय कांश्चिद्दर्भानास्तीर्याग्निं पर्युक्षेदेषोऽग्निसंस्कारः । अथ तेषु दर्भेषु पात्राणि न्यब्जितानि द्वंद्वं प्रागग्रमुदगपवर्गं प्रयुनक्ति प्रोक्षणपात्रस्रुवौ चमसाज्यपात्रे इध्माबर्हिषीत्याज्यहोमेषु तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्वीहोमेषु प्रोक्षणपात्रमुद्धृत्य पवित्रमन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यां त्रिरुत्पूय पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत्त्रिः प्रोक्षेदेतत्पात्रासादनम् ॥ १४ ॥

## १५ अथ स्रुवस्रुचादिसंमार्जनम् ।

अथ चमसं प्रत्यगग्रेर्निधाय ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि

प्रक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां नासिकान्तमुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेदेत्प्रणीताप्रणयनम् । अथ ते एव पवित्रे प्रागग्रेराज्यपात्रेऽन्तर्धायाऽऽज्यमासिच्य बहिः परिस्तरणादङ्गारानुदगपोह्य तेष्वाज्यमधिश्रित्योल्मुकेनावज्वाल्य दर्भाग्रे प्रच्छिद्य प्रोक्ष्याऽऽज्ये प्रास्य ज्वलता तेनैवोल्मुकेनाऽऽज्यं त्रिः परिहृत्योल्मुकं निरस्याप उपस्पृश्याऽऽज्यं कर्षन्निवोदगुद्वास्याङ्गारानतिसृज्याऽऽज्यमुत्पूय पवित्रे प्रोक्ष्याग्नौ प्रास्याप उपस्पृशेदेष आज्यसंस्कारः । अथ बर्हिरात्मनोऽग्रे प्रागग्रमास्तीर्य तत्राऽऽज्यमासाद्य सह दर्भैर्दर्वीस्रुवावादायाग्नौ प्रताप्य दर्वीं निधाय स्रुवं सव्येन धारयन्दक्षिणेन पाणिना दर्भाग्रैर्बिलं प्रागारभ्य प्रादक्षिण्यं प्रागपवर्गं त्रिः परिमृज्य तैरेव बिलपृष्ठमभ्यात्मं त्रिः संमृज्याथ पृष्ठादारभ्य यावदुपरिबिलं दण्डं दर्भमूलैस्त्रिः संमृज्य स्रुवं प्रोक्ष्य प्रताप्योदगाज्याद्बर्हिष्यासाद्योदकस्पृष्टैस्तैरेव दर्भैरेवं दर्वीं च संस्कृत्य स्रुवादुदङ् निधाय दर्भान्प्रोक्ष्याग्नौ प्रहरेदेष स्रुक्स्रुवसंमार्गः ॥ १९ ॥

## १६ ब्रह्मणः पञ्च कर्माणि ।

अथ ब्रह्माऽस्ति चेत्क्रियेत स प्राक् प्रणीताप्रणयनात्समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणत आस्तीर्णेषु दर्भेषु निरस्तः परावसुरिति तृणमङ्गुष्ठोपकनिष्ठाभ्यां नैर्ऋत्यां निरस्याप उपस्पृशेदिदमहमर्वावसोः सदने सीदामीत्युदङ्मुख उपविश्य बृहस्पतिर्ब्रह्मा ब्रह्मसदनमाशिष्यते बृहस्पते यज्ञं गोपायेति मन्त्रं ब्रह्मा जपेदपां प्रणयने ब्रह्मजपः प्रणेष्यामीत्यतिसृष्ट ॐ भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वौ प्रणयेत्यतिसृजेत्सर्वदा च यज्ञमना भवेदेके नेच्छन्ति । निरसनमुपवेशनं जपः प्रायश्चित्तहोमः संस्थाजपेनोपस्थानं चेति पञ्च कर्माणि ब्रह्मणः ॥ १६ ॥

## १७ पार्वणस्थालीपाकः ।

अथ पार्वणस्थालीपाकस्तस्य पौर्णमास्यामारम्भोऽग्निषग्नीषोमौ पौर्णमास्यां देवते अग्निरिन्द्राग्नी चामावास्यायां देवते अपः प्रणीय शूर्पे व्रीहीन्निरु(रु)प्य प्रोक्ष्य प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तानवहत्य तण्डुलांस्त्रिःफलीकृतांस्त्रिः प्रक्षाल्य श्रपयेद्यदि सह श्रपयेच्चरुं विहृत्येदममुष्मा इदममुष्मा इत्यभिमृशेत्स्विष्टकृतं द्विरुपरिष्टादभिघारयेत्पश्चावत्ती द्वावत्ती पुरस्तादवद्येदिध्मरज्जुं विस्रस्याग्नौ प्रास्याघाराश्चेऽस्यतो देवा इदं विष्णुरित्यन्ताभिर्व्याहृतिभिश्च जुहुयादेताः सर्वाः प्रायश्चित्ताहुतय एता ब्रह्मणा कर्तव्याः परीत्य प्रत्यगुदीच्यामवस्थाय जुहुयात् । अथ बर्हिषि पूर्णपात्रं निनीय तामिरद्भिराग्नेयमाना मन्यन्त्रातरः शुन्धयन्त्वि-

द्मापः प्रवहतेत्येताभ्यां सुमित्र्या न आप ओषधयः सन्त्वित्येतेन चाऽऽत्मानं शिरसि मार्जयेत्संस्कार्यमपि संस्कारकर्मसु । अथाग्निर्मो च म इति संस्थाजपेनोपनिष्ठते । ततो ब्रह्मा च । अथ कर्ताऽग्नेः परिसमूहनपर्युक्षणे कुर्यादित्यन्त्रमन्येषाम्स्थालीपाकवत्सुकृतकर्ममन्त्राञ्जुहुयात् ॥ १७ ॥

## १८ नित्यमग्न्युपासनम् ।

अथ नित्यमौपासनं तस्य सायमारम्भोऽनस्तमित आदित्ये सायमग्नेः प्रादुष्करणमनुदिते प्रातः प्रदोषान्तः सायं होमकालः सङ्गवान्तः प्रातर्नात्र तन्त्रमिष्यतेऽग्निं परिसमुह्य परिस्तीर्य पर्युक्ष्य होम्यमपक्कमुत्मुकेनावज्वाल्य तेनैव त्रिः परिहृत्योत्मुकं निरस्येत्क्कमुदगङ्गारेष्वधिश्रित्य प्रोक्ष्योदगुद्वास्य तानङ्गारानतिमृजेदेष होम्यसंस्कारः । पयोदधिसर्पिर्यवागूरोदनस्तण्डुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति होम्यानि तण्डुला नीवारश्यामाकयावनाला व्रीहिशालियवगोधूमप्रियङ्गवः स्वरूपेणातिहोम्यास्तिलाः स्वरूपेणैव शतं चतुःषष्टिर्वाऽऽहुतिः । व्रीहियवानां तदर्धं तिलानां तदर्धं सर्पिस्तैलं च तिलं च तिलातसीकुसुम्भानां येन प्रथमामेतां जुहुयात्तेनैव द्वितीयां जुहुयाद्येनैव सायं जुहुयात्तेनैव प्रातः सायंप्रातर्होमौ सायं वा समस्येन्न तु प्रातः सायंप्रातर्होमौ ॥ १८ ॥

## १९ नष्टेऽग्नौ पुनराधानम् ।

अथ पुनराधानमनुगतेऽग्नि शिष्टागारादानीयोक्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याऽऽज्यमुत्पूयायाश्चाग्न इत्येकामाज्याहुतिं हुत्वा यथापूर्वं परिचरेदेवमा द्वादशरात्रादत ऊर्ध्वं विवाहगृहप्रवेशहोमाभ्यामेकतन्त्राभ्यामादध्यात् । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशाज्याहुतयो हृदयाञ्जनं च भवति । कर्तैव लाजानावपत्येतत्पुनराधानं नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहु[illegible] द्वादशरात्रादूर्ध्वं पुनराधानमेव कुर्यात् ॥ १९ ॥

## २० अनेकभार्यस्याग्निविचारः ।

अथानेकभार्यस्य यदि पूर्वगृह्याग्नावेवानन्तरो विवाहः स्यात्तेनैव सा तस्य सह प्रथमया धर्माग्निभागिनी भवति । यदि तु लौकिके परिणये तं पृथक्त्वेन परिगृह्य पूर्वेणैक्यं कुर्यात्तौ पृथगुपसमाधाय पूर्वस्मिन्पूर्वया पत्न्याऽन्वारब्धोऽग्निमीळे पुरोहितमिति सूक्तेन प्रत्यृचं हुत्वोपस्थायायं ते योनिर्ऋत्विय इति तं समिधमारोप्य प्रत्यवरोहेति द्वितीये वरो ह्याज्यभागान्तं कृत्वोभाभ्यामन्वारब्धोऽग्निमीळे जुहुयादग्नि-

कृत्य कुर्वन्ति येन केनापि सापिण्ड्ये पृथङ्मातृश्राद्धे मातरं पितामह्यादिभिरेव-योजयेद्विशेषांस्तु धर्मशास्त्रेभ्यः प्रतीयात् ॥ १२ ॥

१३ अतीतसंस्कारः ।

अथातीतसंस्कारः स चेदन्तर्दशाहे स्यात्तत्रैव तत्सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहा-दारभ्य सर्वमाशौचं कुर्यात्कर्म च यथाकालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोस्तु कर्मार्हं त्रिरात्रं तत्र प्रथमेऽहनि संस्काराञ्जलयः शतं वा दश वा भवन्ति । यदा शतं तदा प्रथमेऽह्नि त्रिंशदञ्जलयः त्रयः पिण्डा द्वितीये चत्वारिंशदञ्जलयश्चत्वारः पिण्डाः । अस्थिसंचयनमथ तृतीये त्रिंशदञ्जल-यस्त्रयश्च पिण्डा इति विभागोऽथ यदि दशाञ्जलयस्तदा प्रथमेऽहनि त्रयोऽञ्जलयो द्वितीये चत्वारः संचयनं तृतीये च त्रय एकैकः पिण्ड इति विभजेत्नव श्राद्धानि प्रथमेऽहनि द्वे द्वितीये एकं तृतीये द्वे दद्यादेकैकमेव वा यथाप्राप्तमन्यद्दाहावृतास्थीनि संस्कुर्यात्सोऽयमतीतसंस्कार उदगयने शुक्लपक्षे प्रशस्यते नैव नन्दात्रयोदशीभूत-[1]दिनक्षयेषु कुर्यान्न सौरिशुक्रयोर्न याम्याग्नेयार्द्राश्लेषामघामूलधनिष्ठापञ्चकं त्रिपुष्क-रेषूत्तरास्थामृक्षेषु रोहिणीपुनर्वसुफल्गुनीचित्राविशाखानुराधापूर्वाषाढाद्विपुष्करेषु च नेत्येके । नैव व्यतीपाते वैधृतौ विषुवे न च कर्तुश्चतुर्थाष्टमद्वादशचन्द्रमसि न च काकादिस्पर्शोपहतेष्वस्थिषु कुर्यात् । तानि गोक्षीरेणाष्टशतकृत्वो द्वादशकृत्वो वा पावमानीभिः शुद्धिमतीभिश्च क्षालयित्वा संस्कुर्यात् । अस्थ्यभावे पालाशप्रतिरू-पकं कुर्यात् । त्रीणि शतानि षष्टिं च पलाशवृन्तान्याहृत्य तैर्यथावयवं पुरुषरूपं कुर्यात् ॥ १३ ॥

१४ पालाशविधिः ।

अथ पालाशविधिः शिरश्चत्वारिंशता ग्रीवां दशभिरुरस्त्रिंशतोदरं विंशत्या बाहू शतेनाङ्गुलीर्दशभिरिति तदूर्णातन्तुबन्धैः पुरुषवत्कृत्वा स्नापयित्वा वाससा चाहते-नाऽऽच्छाद्य यथावत्संस्कुर्यात्संचयनकर्मणा च तत्संहृत्य पुण्येऽम्भसि क्षिपेत् । एवं दुर्मृतानां पालाशविधिमेव कुर्याच्छरीराणि च तेषां महानद्यां क्षिपेत्रेताग्नीनप्सु क्षिपे-द्गृह्यं चतुष्पथे यज्ञपात्राणि दहेत्संस्कारश्च तेषामब्दादृतुत्रयाद्वोर्ध्वं नारायणबलिं कृत्वा कुर्यादधिकं प्रायश्चित्तं कृत्वा सद्य एव वा । तेष्वाशौचमाहिताग्निषु पूर्णं त्रिरात्रमन्येषु ॥ १४ ॥

१५ नारायणबलिः ।

अथ नारायणबलिर्वाक्संस्काराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे

[1] ख. दिनि द्वितीये द्वे एकस्तृतीये द ।

विष्णुं वैवस्वतं प्रेतं च यथावदभ्यर्च्यैतदग्रे तिलमिश्रान्मधुघृतप्लुतान्दश पिण्डान्विष्णुरूपं प्रेतं ध्यायन्काश्यपगोत्र देवदत्तायं ते पिण्ड इति दक्षिणाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनावीती पराचीनेन पाणिना दत्वा पिण्डान्गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत् । अथ रात्रावयुग्मान्ब्राह्मणान्निमन्त्र्योपोषितः श्वो मध्यंदिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टविधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिण्डविधिना निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय विष्णोऽयं ते पिण्ड इत्येवं चतुरः पिण्डान्भुक्तशेषेण दक्षिणसंस्थान्दत्वाऽथ पञ्चमं काश्यपगोत्र देवदत्तेति प्रेतं ध्यात्वा तद्रूपाय विष्णवे विष्णोऽयं ते इति दद्यात् । अथाऽऽचान्तान्दक्षिणया संतोष्यैकं तेषु गुणवत्तमविशेषतो वस्त्राभरणादिगोहिरण्यैः प्रेतबुद्ध्या तोषयेत् । अथ तैः पवित्रपाणिभिः प्रेताय काश्यपगोत्रायायं ते तिलोदकाञ्जलिरिति तिलोदकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं देवदत्तं शुद्धमपापं कर्मार्हं करोत्विति वाचयित्वा विसृजेत् । एष नारायणबलिकल्पः । एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयामभ्यर्च्य विधिमिमं कुर्यात्सोऽप्येनमपापं करोति न तु पुण्यकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात्कृतं नोपतिष्ठतेऽन्तरिक्षे विनश्यति तस्माद्यथासंभवमपि कुर्यात् ॥ १५ ॥

## १६ नागबलिः ।

अथ नागबलिः सर्पहतानां दारुमयं मृन्मयं वा पञ्चफणं सर्पं कृत्वा भाद्रपदस्यान्यस्य वा मासस्य शुक्लपञ्चमीमारभ्य यावत्संवत्सरं प्रतिमासं तस्यामुपोषितो रात्रौ पञ्चामृतैः स्नापयित्वा कुशावासने शुचिः सुरभिगन्धपुष्पधूपदीपैरभ्यर्च्य प्रणमेत् । अनुमासमेकैकमनन्तं वासुकिं शेषं पद्मं कम्बलं कर्कोटकमश्वतरं धृतराष्ट्रं शङ्खपालं कालीयं तक्षकं कपिलमिति पायससर्पिःक्षीरापूपैर्बलिमुपहृत्य जागरित्वा श्वोभूते त्रिवृतान्नेन ब्राह्मणान्भोजयित्वा पूर्णे संवत्सरे पञ्चम्यां च स्नात्वा सौवर्णं सर्पं गां च ब्राह्मणाय दत्वाऽन्यांश्च यथेष्टं भोजयित्वा दक्षिणया तोषयित्वा नागान्प्रीतिं वाचयेत् । एष नागबलिः । अथोभयोः पक्षयोः पञ्चमीषु संमृष्टायां भुवि पिष्टेन सर्पमुल्लिख्य शुक्लसुरभिगन्धादिभिरभ्यर्च्य क्षीरमोदकान्निवेद्योपस्थाय मुञ्च मुञ्च देवदत्तमिति प्रार्थ्य सह बन्धुभिर्मधुरमश्नीयादेवं संवत्सरान्ते नारायणबलिं मोक्षवत्कृत्वा तत ऊर्ध्वं कर्म कुर्यात् ॥ १६ ॥

## १७ पुराणैकोद्दिष्टम् ।

अथ पुराणमेकोद्दिष्टं प्रेतचतुर्दश्यां शस्त्रहतानामिष्यते मत्स्याह्निके च स्युःक्रम-

मृतानां सर्वेषां प्रत्याब्दिक इत्येके । पार्वणैकदेशवत्तन्त्रं सर्वं पितृशब्दमेकवदूहेत्पाणौ सोमाग्निभ्यामाम्यामेव होमो नैकेऽत्रापि दैवं कुर्वन्ति नार्घ्यपिण्डावपीत्येके ॥ १७ ॥

## १८ वृषोत्सर्गविधिः ।

अथ वृषोत्सर्गः शूलगवं कार्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाऽऽश्वयुजीयस्य गोर्जीवत्पुत्रायाः पयस्विन्याः सुतं श्रेष्ठं स्वस्य यूथस्याच्छिनमप्रयतमेकहायनं द्विहायनं वा नीलं बभ्रुं पिङ्गलं लोहितं वा सलक्षणमित्येके कामं कृष्णमालोहितं श्वेतमष्टभिः सह वत्सतरीभिश्चान्यमूभिर्वा व्रीहियवमतीभिरद्भिरालोहिनीयाभिर्वामदेव्येन कर्म संकल्प्य पूर्वप्रासमभिषिच्यायां तीरे गोष्ठे चतुष्पथे वाऽग्निमुपसमाधाय रौद्रं स्थालीपाकं सर्वहुतं हुत्वा सौम्यं पायसं पैष्टं यावकं पूर्णपात्रोदकेन मार्जयित्वाऽग्निं त्रिः प्रदक्षिणं पर्याणीय कद्रुद्रायेमा रुद्रायाऽऽते पितरिमा रुद्राय स्थिरधन्वने गिर इति सूक्तैश्चतस्रो दिश उपस्थाय प्राच्यं प्रागुदच्यं वा वत्सतरीसमेतमुत्सृज्य, एनं युवानं पतिं वो ददामि तेन क्रीड(ळ)न्तीश्चरथ प्रियेण । इमां च त्वा प्रजनुषा सुवाचा रायस्पोषेण समिषा चिनोमि । शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उदिशो न आपो विद्युतः परिपान्तु सर्वत इत्यृषभं मासमानानामिति च सूक्तेनोपस्थाय स यत्पिबति खादति लाङ्गूलं चोदकपूर्णमुदस्यति तेन देवानृषीन्पितृंश्च प्रीणाति वंशयांश्चाऽऽसप्तममुभयतः परावरानुद्धरति प्रेतार्थमुत्सृष्टं महतो नरकादुत्तारयति, तस्मादेकादशेऽह्नि प्रेताय वृषमुत्सृजेदाद्यमासिकं दत्त्वा सोऽयं वृषोत्सर्गः स्वर्ग्यः पशव्यो वृषममुत्सृज्य महापशुर्भवतीति विज्ञायते नानुत्सृष्ट इत्यादित्याचार्यः । तस्मान्नित्यश्चैके रुद्रमेव जपन्ते स एव पशुपतिरिति शान्तातीयं जपन्गृहमेत्य सर्पिष्मदोदनं ब्राह्मणान्भोजयित्वाऽग्नी रुद्र शर्वः पशुपतिरुग्र शूली भवो महादेव इति नामभिरर्चयेद्रुद्रमेव वा यथा संभवमुद्दिश्योस्वस्त्ययनं वाचयेदेवमेतानि कर्माणि यथोक्तं कुर्यात्सर्वाणि श्रेयस्याप्नोति तदेतदाश्वलायनगृह्यपरिशिष्टं नम आश्वलायनाय नम आश्वलायनाय ॥ १८ ॥

इत्याश्वलायनगृह्यपरिशिष्टे तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

### १ पूर्तानां प्रकारो विधिश्च ।

अथ पूर्तान्युदगयन आपूर्यमाणपक्षे ज्योतिर्विदुक्तपुण्यदिने पूर्वेद्युः कृतस्वस्तिवाचनस्तत ईशान्यां चतुस्रा चतुरङ्गुलमुच्छ्रिता हस्तमात्रा वेदिं कृत्वा यथोक्तविधानेन वास्तुमण्ड-

ऽं कृत्वा गृह्योक्तवदुदीच्य(च्या)मभिषेककुम्भं निधायामी(योमि)त्युच्यते वास्तुमूर्तिं सुवर्णेन कृत्वाऽग्न्युत्तारणं संपाद्य प्रणवव्याहृतिपूर्वकं ॐ नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादिसंनिवेशसांनिध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वंभराय परमपुरुषाय चक्रशार्ङ्गधराय वरदाभयहस्ताय वास्तो नम इति मन्त्रेणेशान्याशीरसं नैर्ऋतिपादमाग्नेयजानुकं वायव्यकूर्परमाकुञ्चितकरमुत्तानं वास्तुपुरुषं वास्तुमण्डले आवाह्याथ प्रागुदीच्यामारभ्य प्रणवादिनमोऽन्तनाम्ना शिखिनं पर्जन्यं जयन्तं कुलिशायुधं सूर्यं सत्यं भृशमाकाशं वायुं पूषणं वितथं ग्रहनक्षत्रं यमं गन्धर्वं मृगराजं पितॄन्दौवारिकं सुग्रीवं पुष्पदन्तं वरुणमसुरं शोषं पापं रोगं महीं मुख्यं भल्लाटं सोमं सर्पा(र्पा)नदितिं च संपूज्यायेशानकोणद्वयशिष्टपदेष्वपः सावित्रीमेकादश रुद्रान्पूजयित्वा ब्रह्मभवनस्य पूर्वादिचतुर्दिक्ष्वग्न्यादिचतुर्दिक्षु च तिष्ठन्ति तेषु क्रमेणार्यमणं सवितारं विवस्वन्तं विबुधाधिपंमित्रं राजयक्ष्माणं पृथ्वीधरमापवत्सं च पूजयित्वा मध्ये ब्रह्माणं संपूजयेत् । ब्रह्माणमादितः कृत्वा शिख्यन्तमित्येके ॥ १॥

## २ वास्तुपूजनविधिः ।

अथ बहिर्मण्डलादी( दै )शान्यादिचतुर्दिक्षु चरकीं विदारकीं पूतनां पापराक्षसीमथ प्रागादि च स्कन्दमर्यमणं जृम्भकं पिलिपिञ्जं च पूजयित्वौदनपायसाज्यदधिमधुशाकसूपसमन्वितनानाभक्ष्याणि समर्प्य प्रणम्य तत्समीपे यवगोधूमनिष्पावमुद्गमाषादिसंभवं बलिं दत्त्वा ' यज्ञभागं प्रतीक्षस्व पूजां चैव बलिं मम । नमो नमस्ते देवेश भव स्वस्तिकरो ममेति ' संप्रार्थ्य परिवारदेवताभ्यो बलिं दत्त्वाऽथ वास्तुसमीपे हस्तमात्रकुण्डे स्थण्डिले चोक्तविधिनाऽग्निं प्रतिष्ठाप्यान्वाधायाऽऽज्यभागान्तं कृत्वा वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभिश्च होमं कृत्वा शिख्यादिपिलिपिञ्जान्तानाज्येन हुत्वा होमशेषं समाप्याथ यजमानो वास्तुमूर्तिं रौद्रकोणेऽधोमुखीं गर्ते प्रच्छादयेदाचार्याय वा दद्यादथाऽऽचार्यं गोहिरण्यादिभिः परितोष्य नमस्कृत्य क्षमापयेदन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्त्वा कृतमङ्गलस्नानो ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयेदथ कलशविप्राशीः सह बन्धुभिर्भुक्त्वा यथाशास्त्रं मठादेः प्रतिष्ठां कुर्यात् । इति वास्तुपूजनविधिः ॥ २ ॥

## ३ प्रतिमाद्रव्याणि ।

अथ प्रतिमाद्रव्याणि मुक्ताफलशिलादारुहेमताम्ररजतकांस्यमृत्तिकादीनि । महाशैली यशःप्रदा दारुजा कामदा सौवर्णी भुक्तिमुक्तिप्रदा राजती स्वर्गदा ताम्रमय्या-

द्वारं कलशद्वयं सोदकं सपल्लवं प्रतिष्ठाप्य लोकपालानावाह्यार्चयित्वा देवस्नानशालां गत्वा प्रणिपत्य देवं प्रार्थयेत् । स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते । शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः सहस्व तामित्यथ देवाधिष्ठानं शुद्धेन घृतेनाभ्यज्य यवगोधूमचूर्णैरुद्वर्त्योष्णोदकेन स्नापयित्वा शीतलजलेन संस्नाप्य पीठान्तरेऽवस्थाप्य दिव्यधूपेन धूपयित्वा पुष्पैः संपूज्य नवोत्तमेन वाससा वेष्टयित्वा परमान्नेन बलिं दद्यात् । अथ देवमभ्यर्च्य गजाश्वारण्यवराहोरवातवल्मीकपर्वतसंगमहृदराजद्वाराग्निहोत्रगोष्ठचतुष्पथवृषभशृङ्गस्थानानीतमृदा द्वादशकृत्वः सम्यक् संशोध्य जलेन प्रक्षाल्य क्षीरवृक्षकषायैः पञ्चाशदोषधिकषायेण तीर्थजलेन पञ्चामृतेन पञ्चगव्येन रत्नोदकेन फलोदकेन पुष्पोदकेन शृङ्गोदकेन शुद्धोदकेन श्रीसूक्तपवमानेन पुरुषसूक्तादिमन्त्रान्पठन्संस्थाप्य पीठान्तरे निवेश्याभिवस्त्रेति वस्त्रयुग्मेनाऽऽवेष्ट्याक्षतगन्धपुष्पधूपदीपाष्टकमहानैवेद्यैः संपूज्य तैजसपात्रे मधु सुवर्णशलाकया गृहीत्वा चित्रं देवानामिति पार्श्वे स्थित्वा मधुनाऽपमृज्य सममुन्मीलयेत् । अथाऽऽदर्शसुवर्णेन भक्ष्यभोज्यानि दर्शयेच्च लिङ्गादिषु कुर्यात् । अथाऽऽचार्याय धेनुं ब्राह्मणेभ्यश्च यथाशक्ति हिरण्यं दद्यात् । अथ पुरुषसूक्तेन देवं स्तुत्वोत्तिष्ठ ब्रह्मणस्पत इत्युत्थाप्य कर्ता विश्वतश्चक्षुरित्युपस्थाय रथे तिष्ठन्निति रथमारोप्य कनिक्रददिति सूक्तपाठे सह तूर्यघोषैर्मण्डपप्रदक्षिणेनोत्तरद्वारेणाऽऽकृष्णेनेत्यानीय वेद्यां कुशप्रस्तरे कशिपौ शुभ्रवस्त्रेणाऽऽच्छाद्य तत्र प्राक्शिरसं शाययेच्छिरःप्रदेशे वस्त्रवेष्टितं सपल्लवं सोदकं कलशं प्राजापत्योऽयं मुहूर्तोऽस्त्वित्युक्त्वा मण्डलद्वयोपरि प्रणवेनावस्थाप्य समन्ताद्भक्ष्यभोज्यमङ्गलद्रव्याण्यवस्थाप्य श्वेताविलोमसूत्रकङ्कणं प्रतिमाया हस्ते बध्नीयात् । यदा बध्नातीत्यथ देवं पुरुषादीनि पञ्चविंशति तत्त्वानि प्रवेश्य दिव्यवाससाऽऽच्छाद्य देवं संस्पृश्य पुरुषसूक्तेन स्तुत्वा पुष्पाञ्जलिं दत्त्वा गन्धपुष्पादिभिर्मण्डपं वेदीं चाभ्यर्च्य तदुपरि देवस्याग्रे चतुरस्रं मण्डलं कोणेषु स्वस्तिकलाञ्छितं कृत्वा तन्मध्ये ब्रह्मविष्णुशिवान्नामादेशं लोकपालांस्तदन्तरालेऽष्टवसूनेकादश रुद्रान्द्वादशादित्यान्विश्वेदेवान्साध्यान्मरुद्गणान्गन्धर्वाप्सरसः पितृगणपुण्यतीर्थान्यप्य विघ्नेशस्कन्ददुर्गाक्षेत्रपालानथावकाशानावाह्य स्वनाममितालिङ्गमन्त्रैर्वार्चयित्वा प्रतिष्ठाप्य देवपार्षदेभ्यो नम इत्यर्चां कुर्यात् ॥५॥

६ अग्निस्थापनादि ।

अथाऽऽचार्यः श्रोत्रियागाराद्वाग्निमाहृत्योक्तवत्स्वकुण्डे प्रतिष्ठाप्यान्वाधाय देवस्याग्र कर्मसंनिधिसिद्ध्यर्थं यक्ष्य इति संकल्प्य प्रणीताप्रणयनान्तं कृत्वा तत्र प्रतिष्ठाप्य

देवमावाह्य तत्प्रकाशमन्त्रैर्व्याहृतिभिर्वा पलाशोदुम्बराश्वत्थापामार्गसमिदाज्यचरुतिलैरष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात् । तत्राऽऽज्यमाहुतिसंपातं प्रतिकुण्डं स्थापितशान्तिकलशेषु निक्षिपेत् । ततः शिरस्युरसि पादयोः प्रतिमां स्पृष्ट्वा स्विष्टकृदादि हुत्वा पूर्णाहुतिं जुहुयादेवमृत्विजोऽपि स्वयं कुण्डे जुहुयुः । अथ मण्डपस्थकलशोदकेन समुद्रज्येष्ठा इति चतसृभिरापोहिष्ठेति तिसृभिरभिषिच्य प्रतिष्ठाप्य देवमन्त्रेण संस्नापकलशोदकेन संस्नाप्याम्बयो यन्त्यध्वभिरिति सूक्तेन शुद्धोदककलशेनाभिषिच्य वस्त्रयुग्मेनाऽऽच्छाद्य पद्योपचारैः संपूजयेदित्यधिवासनं त्रिरात्रमेकरात्रं वा सद्यो वा कुर्याच्चद्रात्रौ विचित्रभूयिष्ठान्नेनाश्वत्थपत्रेण लिङ्गमन्त्रेण भूतबलिं दत्त्वा यजमानो द्विजेभ्यश्च मिष्टान्नमधिरात्रसंख्यया यावद्दक्षिणां दद्यात् ॥ ६ ॥

## ७ अभिषेकादि ।

अथ श्वोभूते गर्भगृहे स्थापितपीठे देव्या देवस्य वाऽभिषेकं कृत्वा महीमू षु मातरमिति देवमावाह्याविति र्द्यौरिति स्तुत्वा तल्लिङ्गमन्त्रेण षोडशोपचारैः संपूज्य शं न इन्द्राग्नी इति सूक्तेन प्रासादं प्रोक्ष्य देवं प्राप्योत्तिष्ठेत्युत्थाप्य तत्रैवाभिमुखं कृत्वा रत्नादि प्रदर्श्य पुष्पाञ्जलिं दत्त्वा पुरुषसूक्तेन स्तुत्वाऽऽकृष्णेनेति मन्त्रारथेन गर्भगृहं प्रवेश्याभ्यर्च्य पीठिकागर्भे रत्नं प्रागादिदिक्ष्विन्द्रादिनामभिर्नमोन्तैर्वज्रमौक्तिकवैदूर्यशङ्खस्फटिकपुष्परागेन्द्रनीलशकलान्क्रमेण क्षिप्त्वा गोधूमयवमुद्गनीवारव्रीहिसर्षपश्यामाकतिलान् रौप्यादिधातुजातं गर्भे क्षिपेत् । सुवर्णगरुडं विष्णोः शंभोस्तु वृषभं सर्वत्र नमः शिवायेति निक्षिप्याथ सुलग्ने देवं मन्त्रेण प्रतिष्ठाप्य प्रतिष्ठितः परमेश्वर इत्युक्त्वा शलाकामपसारयेत् । अथ देवं दृष्ट्वा तन्मयो भूत्वा ध्रुवा द्यौरिति सूक्तं जपित्वा प्रणवेन देवेऽङ्गन्यासं कृत्वा पुरुषसूक्तेन वा कर्णे सप्रणवव्याहृतिगायत्रीं जपित्वाऽऽचार्यः पुरुषसूक्तेनोपतिष्ठेत । अथ यजमानः 'स्वागतं देवदेवेश मद्भक्तया त्वमिहाऽऽगतः । प्राकृतं मां च संदृष्ट्वा(दर्श्य) बालवद्भक्तवत्सलेति ' सकलत्रं शरणं प्रपद्य पुष्पाञ्जलिं दद्यात् ॥ ७ ॥

## ८ शान्तिप्रतिष्ठादि ।

अथाऽऽचार्यस्वर्णादि दत्त्वा शान्तिकलशोदकेन पञ्चामृतैश्चाभ्यर्च्य कुशोदकेन रत्नोदकेन स्नापयित्वा पुनस्तल्लिङ्गमन्त्रेण संपूज्य पादनाभिशिरःसु देवं संस्पृश्यैहैवेति त्रिर्जपित्वा परिवारदेवताः संपूजयेत् । अथ कर्ता वस्त्रालंकारगोभूहिरण्यान्याचार्याय तदर्धमृत्विग्भ्यस्तदर्धं सदस्याय यथाविभवं ब्राह्मणभोजनमाचतुर्थाहं प्रथमे देवस्य मधुना द्वितीये हरिद्रासर्षपपिष्टेन तृतीये औशलच्छयवपिष्टेन लेपनं स्नानं चतुर्थे तु

मन शिलाप्रियङ्गुपिष्टेनोद्वर्त्याष्टोत्तरशतकलशैरुदर्घसंख्यैर्वा क्षीरवृक्षस्य त्वक्पल्लवेन दूर्वायवसिद्धार्थादिमङ्गलद्रव्यतीर्थोदकैर्गङ्गादिनदीनीरमावाह्य ब्राह्मणैः सहाभिषेकं कुर्यात् । अथ यजमानस्याभिषेकं कुर्युः सर्वे जलक्रीडां च । प्रतिष्ठोपकरणमाचार्यस्य ।
*चलप्रतिष्ठायां तु कुण्डमण्डपवेदीकरणं तत्राऽऽचार्य एव पूर्ववदभिषिच्याभ्यर्च्य सर्वतोभद्रमण्डले दिव्यपीठे देवमुपवेश्य पूर्वादिदिक्षु चक्रचूतपल्लवोपशोभितजलपूर्ण-कलशानवस्थाप्य दीपान्प्रज्वाल्य + गन्धेन त्रिनेत्रज्योतिः प्रकल्प्य चित्रबलिं दत्त्वा देवमभ्यासमं स्मृत्वा पुरुषसूक्तेन स्तुत्वाऽङ्गदेवताः संपूज्य पूर्ववत्प्रतिद्रव्यं हुत्वा देव-स्याऽऽज्याहुतिसंपातं चेत्युत्तरकलशे क्षिप्त्वा पूर्णाहुतिं हुत्वाऽथ कर्ता, कृताङ्ग-न्यासो हस्तु देवमानीय, पुष्पेण प्रतिमायां प्रतिष्ठाप्य पञ्चामृतपूर्वकसंपादितकल-शोदकेन इदमाप इत्यभिषिच्याभ्यर्च्य देवार्चनदक्षिणादानादिकं पूर्ववदाचरेत् ॥ ८ ॥

## ९ वापीकूपतडागाद्युत्सर्गः ।

अथ वाप्यादिविधिः । प्रागुदक्प्रवणे शुचौ देशे ब्राह्मणैः सह गत्वा पुण्याहवा-चनादिवास्तुपूजनान्तं कृत्वाऽऽचार्यादिऋत्विग्वरणकुण्डमण्डपाद्युक्तप्रकारेण कृत्वा यजमानसमितं क्षीरवृक्षं पूर्वमण्डपप्राग्भागेऽवस्थाप्य वेदिमध्ये पद्मगर्भं षोडशारं परितश्चतुरस्रमण्डलोपेतं कृत्वाऽऽचार्यः पद्ममध्ये सपत्नीको ब्रह्मविष्ण्वीशानां विना-यकस्य च सौवर्णरूपाणि तल्लिङ्गमन्त्रेण समन्तात्तेषु स्वर्णजलचराणि स्थापयित्वा वरुणमन्त्रेणार्चयित्वा तद्बहिर्लोकपालादीन्संपूज्य मण्डलप्रतिकोणं कलशचतुष्टयं नद्यु-दकपञ्चरत्नद्रव्यवस्त्राद्यलंकृतं स्थापयित्वेमं मे गङ्ग इति गङ्गादिनदीरावाह्याभ्यर्च्य वारुणं चरुं कृत्वा समुद्रज्येष्ठा इति चतसृभिः प्रत्यृचं गायत्र्या चाऽऽज्याहुतीर्हुत्वा तत्त्वा यामीति पञ्चभिस्त्वन्नो अग्ने वरुणस्येति द्वाभ्यामिमं मे वरुणेति चैकया चर्वा-हुतीः स्विष्टकृतं हुत्वा ब्रह्मप्रीत्यर्थं वरुणमन्त्रैः समिदाज्यं हुत्वा शान्तिकलशैर्यज-मानं चाभिषिञ्चेयुः । स तु तेभ्यो गवां सहस्रं शतं पञ्चाशतं कृच्छ्रे तु सवत्सां गामलंकृतां सूर्यमन्त्रेण पाययित्वा तडागनैर्ऋतादारभ्येशानान्तं हिरण्यवतीत्यु-त्तरयाऽऽपो अस्मानिति स्वयं तत्पुच्छं गृहीत्वोत्तारेच्छन्दोगाय तां च गां दत्त्वा तत्क-लशस्थस्वर्णजलचरांस्तज्जले निक्षिप्य पुष्पाञ्जलिं दत्त्वा देवपितृमनुष्यादयः प्रीयन्ता-मिति दद्यात्पूर्ववदाचतुर्थाहमुत्सवादिवसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरेषु तज्जलस्थित-मश्वमेधराजसूयाग्निष्टोमोक्थ्यवाजपेयातिरात्रफलमिति ॥ ९ ॥

---

+अत्र 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति गणसूत्रेणोपसृष्टस्य ज्वलतेर्नित्यं मित्त्वम् । ततश्च 'मितां ह्रस्वः' (पा० सू० ६।४।९२) इति सूत्रेण ह्रस्वे कृते प्रज्वल्येति भवितुं युक्तम् । इत्थंत्वेऽपि यमन्तात्प्रज्वालयन्तं तत्करोतीति णिचि तस्मात् क्त्व(क्त्वो)ल्यपि च प्रज्वाल्येत्यपि सेत्स्यति । एतेन याज्ञिकानां दीर्घघटितपाठोऽपि यथाकथंचिदुन्नेयः ।

१० आरामोत्सर्गविधिः।

अथारामेष्वप्येवम्। विशेषस्तु स्वस्तिवाचननान्दीश्राद्धवेदिकुण्डमण्डपऋत्विगाद्या-
यैवरणादिपूर्ववत्कृत्वोक्तलक्षणस्य पद्मस्य मध्यदलबहिर्देशेषु वृक्षादीन्लोकपालान-
भ्यर्च्य वस्त्रादीन्मङ्गलस्नानं वस्त्रगन्धादिना संपूज्य तेषु स्वर्णरूप्यफलानि बद्ध्वा
फलिते नेत्रे स्वर्णशलाकाञ्जनेनावत्वा सुवर्णसूच्या कर्णवेध कृत्वाऽग्निं प्रतिष्ठाप्य
सोमो धेनुमित्यृचा सौम्यां चर्वाहुतिं हुत्वा स्विष्टकृदादि कृत्वाऽथ तथैव
समिदाज्यतिलानष्टशतं तदर्धमेकया वा हुत्वा कर्मशेषं समाप्य शान्तिकलशैर्यज-
मानं चाभिषिञ्चेयुः। स च वस्त्रहिरण्यादिदक्षिणां दद्यात्। अथालाभे तु दक्षिणां
गामलंकृतामाराममध्यादुदङ्मुखीमुत्सृज्याऽऽचार्याय दद्याच्छेषं चतुर्थाहं फलं तु
सर्वकामावाप्तिरिति पूर्णानि ॥ १० ॥

११ होमादिविशेषः।

देवाश्च ह वाऽसुराश्चैषु लोकेषु स्पर्धन्ते। देवाः प्रजापतिमुपाधावंस्तेभ्य एतां
दैवीं शान्तिं प्रायच्छत ततः सशान्तिका असुरा नभ्यजयंस्ततो वै देवा अभव-
न्परासुरा भवत्यात्मना पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद यदहः पूर्वाह्ण
एव प्रातराहुतिर्हुत्वा दर्भान्शमी + वीरणानि दधि-सर्पिः सर्षपान्पलाशवतीमपामा-
र्गशाखां स्त्रीप(?)मित्येतान्याहरेदाहारयेद्वा। स्नातः शुचिः शुचिवासाः स्थण्डिलमुप-
लिप्य नित्यतन्त्रेणौदनकृसरयवागूरुक्तपायसं दधि क्षीरघृतमिति घृतोत्तरां पृथक्
च सर्वेषा वा पायसं शमीमयीनां समिधां प्रादेशमात्राणां दधिमधुघृताक्तानां शं नो
देवीरभिष्टय इत्यष्टशतं जुहुयान्महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ ११ ॥

१२ प्राचीं दिशमन्वावर्तते।

स प्राचीं दिशमन्वावर्ततेऽथ यदाऽस्य मणिकुम्भस्थालीतरणमायासो राजकुलवि-
वादो वा यानच्छत्रशय्यासनावसथध्वजगृहैकदेशप्रभञ्जनेषु गजवाजिमृत्यो वा प्रमी-
येताश्वतरी दिवा गर्भो जायते हस्तिनी वा मज्जन इत्येवमादीनि तान्येतानि सर्वा-
णीन्द्रदेवत्यान्यद्भुतानि तानि प्रायश्चित्तानि भवन्ति। इन्द्रं वो विश्वतस्परीति स्था-
लीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति, इन्द्राय स्वाहा शचीपतये
स्वाहा वज्रपाणये स्वाहेश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभि-
र्हुत्वा शन्तातीयं जपेत् ॥ १२ ॥

१३ दक्षिणादिशान्वावर्तनम्।

स दक्षिणां दिशमन्वावर्ततेऽथ यदाऽस्य शरीरे वाऽरिष्टानि प्रादुर्भवन्ति व्याध-

+ 'फलावाला' इत्याख्यतृणभेदः।

वाऽनेकविधा अतिदुःस्वप्नातिभोजनमतिमैथुनमतिनिद्रालस्यं प्रेतं पततीत्येवमादीनि तान्येतानि सर्वाणि यमदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति। नाके सुपर्णमुपयत्पतन्तमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति यमाय स्वाहा प्रेताधिपतये स्वाहा दण्डपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत्॥ १३॥

## १४ पश्चिमदिशाम्न्वावर्तनम्।

स प्रतीचीं दिशमन्वावर्ततेऽथ यदाऽस्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवन्त्याखुपतङ्गपिपीलिकाभ्रमर्यो मृगशलभगजजबलानि पावशानानीत्येवमादीनि तान्येतानि सर्वाणि वरुणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति। वरुणं वो रिशादसमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वरुणाय स्वाहा अपां पतये स्वाहा पाशपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत्॥१४॥

## १५ उदीचीं दिशमन्वावर्तते।

स उदीचीं दिशमन्वावर्ततेऽथ यदाऽस्य कनकरजतवस्त्रवैदूर्यमणिमौक्तिकवियोगो भवत्यारम्भा वा विपद्यन्ते मधूनि वा निलीयन्ते काकमैथुनानि पश्यत्येतान्यरिष्टानि वा वयांसि च गृहमध्ये वल्मीकं छत्राकं वोपजायते वायसकपोता वा वन्यविहङ्गशशमृगप्रवेशो गोमृगो वा गृहमारोहेच्छुष्कवृक्षः प्ररोहेद्गृहमध्ये दूर्वाः प्ररोहन्ते तैलं स्त्रावयेदेवं श्वेतवायसो मण्डूकोऽग्निं प्रविशति सरटो मूर्ध्नि निपतति चुल्ली निपतति प्रज्वलन्दीपः पतति सर्पो वा द्वारे निष्क्रामतीत्येवमादीनि तान्येतानि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति। अभित्यं देवं सवितारमोण्योरिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वैश्रवणाय स्वाहा धनाधिपतये स्वाहा हिरण्यपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत्॥ १५॥

## १६ पृथिवीमन्वावर्तते।

स पृथिवीमन्वावर्ततेऽथ यदाऽस्य पृथिवीतटानि स्फुटन्ति कम्पन्ति कूलनयकस्मात्सलिलमुद्रीष्यत्यकाले फलपुष्पमभिवर्तत इत्येवमादीनि तान्येतानि सर्वाण्यग्निदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्त्यग्निं दूतं वृणीमह इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति अग्नये स्वाहा हविष्पतये स्वाहा अर्चिष्पाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शान्तातीयं जपेत्॥ १६॥

## १७ अन्तरिक्षमन्वावर्तते ।

सोऽन्तरिक्षमन्वावर्ततेऽथ यदाऽस्य वाता विवाता वायन्तेऽभ्रेषु वा रूपाणि दृश्यन्ते खरकरभगजक्रङ्कगृध्रश्येनचाषवायसगोमायुपांसून्युपरिपांसून्मांसप्रेक्ष्याण्यरिधरुधिरवर्षाणि प्रपद्यन्त इत्येवमादीनि तान्येतानि सर्वाणि वायुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । वात आवातु भेषजमिति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वायवे स्वाहा महाद्भुताधिपतये स्वाहा शीघ्रपाणये स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १७ ॥

## १८ दिवसमन्वावर्तते ।

स दिनमन्वावर्ततेऽथ यदाऽस्यातिधृतिरतिदुःखं वा पर्वता वा स्फुटन्त्याकाशभूमिः कम्पते महाद्रुमा उन्मूलयन्ति चतुष्पादं पञ्चपादं भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्यदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । बण्महाँ असि सूर्येति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सूर्याय स्वाहा रुद्राधिपतये स्वाहा रविकिरणाय स्वाहा ईश्वराय स्वाहा सर्वोत्पातप्रशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १८ ॥

## १९ रात्रिमन्वावर्तते ।

स रात्रिमन्वावर्ततेऽथ यदाऽस्य तारावर्षाणि चोल्काः पतन्ति निपतन्ति धूमोऽयं दिशो दहति केतवश्चोत्तिष्ठन्ति गवां शृङ्गेषु धूमो जायते गवां स्तनेषु रुधिरं स्रवति रात्राविन्द्रधनुर्दृष्टाऽथ हिमान्युपपतन्तीत्येवमादीनि तान्येतानि सर्वाणि सोमदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । आप्यायस्व समेतु त इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा शीतपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ १९ ॥

## २० परमन्वावर्तते ।

स परमन्वावर्ततेऽथ यदाऽस्य महिष्याजाविकमानुषाश्वोष्ट्राविखुरादि च प्रसूयन्ते हीनाङ्गान्यधिकाङ्गानि विकृतानि रूपाणि जायन्त इत्येवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । इमा रुद्राय स्थिरधन्वने गिर इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २० ॥

सर्वा दिशोऽन्वावर्तते ।

स सर्वा दिशोऽन्वावर्ततेऽथ यदाऽस्यायुक्तानि यानानि प्रवर्तन्ते देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति नृत्यन्ति खिद्यन्ति भिद्यन्ति रुदन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते दिवसे च परिवेषो दृश्यते केतुकुन्तमुपानच्छत्रं वज्रदन्तमुसलानि प्रज्वलन्तीत्यश्वानां वालधिष्वङ्गाराः क्षरन्ति हतानि कर्माणि करिक्रन्ते इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । इदं विष्णुर्विचक्रम इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाद्भुताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शान्तातीयं जपेत् ॥ २१ ॥

२२ अग्निकार्यफलम् ।

अग्निकार्यमासपरार्धं कुर्युर्यदैतन्न क्रियते पुत्रो म्रियते पौत्रो म्रियते धनमात्मानं च विनश्यति सुवर्णं गौर्वासो हिरण्यं दक्षिणां दत्त्वा ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत नम आचार्येभ्यो नम आचार्येभ्यो नमः शौनकाय नमः शौनकाय ॥२२॥

इत्याश्वलायनगृह्यपरिशिष्टे चतुर्थोऽध्यायः ॥ ४ ॥

---

समाप्तमिदमाश्वलायनगृह्यपरिशिष्टम् ॥

# अथ भट्टकुमारिलस्वामिप्रणीता आश्वलायनगृह्यकारिका ।

## प्रथमोऽध्यायः ।

### १ परिभाषा ।

ॐ आश्वलायनमाचार्यं नत्वा तद्गृह्यकर्मणाम् । प्रयोगं वच्मि संक्षेपाद्वृत्तिकारादिशंसितम् ॥
प्राणानायम्य संकल्प्य परितः स्थण्डिलं शुचि । अधिकं वेषुमात्रं वा गोमयेनोपलिप्य च ॥
यज्ञियं शकलं किंचिदाददीत ततः परम् । तेनान्तः शकलेनैव षड्लेखा उल्लिखेत्ततः ॥
अग्निस्थापनदेशस्य पश्चात्प्रादेशसंमिताम् । उल्लिखेदुदगायामां तस्या उभयतोऽपरे ॥ ४ ॥
पूर्वायते उदक्संस्थे असंसृष्टे च पूर्वया । मध्ये तिस्र उदक्संस्थाः पूर्वायामा असंहताः ॥
लिखिता येन शकलं यज्ञियं तं निधाय च । अद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृशेत् ॥
प्रतिष्ठाप्याथ लेखासु होमायालं हविर्भुजम् । एतदन्तं प्रकुर्वीत होष्यन्संस्थापितेऽनले ॥ ७ ॥
आज्यैकद्रव्यके होमे स्याच्चेदाज्यपरिग्रहः । स्यात्परिस्तरणं तत्र कृताकृतमिति स्थितिः ॥
नोच्चारयति यत्राऽऽज्यपदं कर्मसु सूत्रकृत् । अनादिष्टाज्यहोमेषु तत्र नित्या परिस्तृतिः ॥
सर्वस्मिन्पाकयज्ञे स्त आज्यभागौ कृताकृतौ । सर्वेषु पाकयज्ञेषु भवेद्ब्रह्मा कृताकृतः ॥
धन्वन्तरिमखे ब्रह्मा नित्यः शूलगवे तथा । ऊचे होमं कचिन्नाम्ना कचिन्मन्त्रेण सूत्रकृत् ॥
नोभयं यत्र तत्रेष्टं हवनं नामधेयतः । मन्त्रेण होमो निर्वापस्तूष्णीं नाम्ना समन्त्रकम् ॥
नैके कांचन पक्षोऽयं चौलादावाश्रितो यदा । तदाऽग्निरिन्द्र इत्याद्या होतव्या इति वृत्तिकृत् ॥
अनेके पाकयज्ञाः स्युरेकस्मिन्काल एव चेत् । समानतन्त्रकाः कार्या न तन्त्रावृत्तिरिष्यते ॥
पात्रासादनमिच्छात आज्याधिश्रयणादि च । स्रुवादिमार्जनं चेध्मरज्जुप्रहरणं तथा ॥
पूर्णपात्रं भवेन्नित्यमाज्यस्योत्पवनं तथा । द्रव्यानादेश आज्यं स्यादनुक्ते साधने स्रुवः ॥
जपानुमन्त्रणे मन्त्र उपस्थानाभिमन्त्रणे । मन्त्रो यः कर्मकरणे गृह्यकर्मण्युपांशु पठ् ॥ १७ ॥
इदं कार्यमनेनेति न कचिद्दृश्यते विधिः । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञकाः ॥ १८ ॥
मन्त्रान्ते कर्म कर्तव्यं मन्त्रस्य करणत्वतः । कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि ॥
आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

इति परिभाषा ।

### २ स्थालीपाकः ।

अन्नसंपत्त्य तत्रोक्तः स्थालीपाकः पुरोच्यते । गृहेशीयहोमाद्या पौर्णमास्यामिष्यति ॥

---

१ क. °स्ते स्वतः ।

तस्यां तं प्रारभेतेति वृत्तिकारेण भाषितम्। प्रातरौपासनं हुत्वा समिधौ द्वे निधाय च ॥
अथवा तिस्र आदध्यात्क्रतुसंकल्पपूर्वकम्। सद्यस्कालो भवेद्वा पौर्णमासस्तु पार्वणः ॥
अथ रज्जुं प्रकुर्वीत त्रिसंधिं त्रिवृतां कुशैः। स्याद्रज्जुकरणे पूर्वं सव्यः पाणिरिहोत्तरः ॥
पश्चाद्दक्षिण इत्याह जयन्तः स्वनिबन्धने। निदध्यादुदगग्रां तां रज्जुमग्रत आत्मनः ॥
कुशमुष्टिं छिनत्त्यस्यां प्रागग्रं तं निधाय च। तया बर्हिर्द्विरावेष्ट्य रज्जुमूलं चै वेष्टयेत् ॥
पूर्वं या वेष्टिता तस्या अधस्तात्तां नयेदथ। निधायोपरि चान्यांश्च परिस्तृत्यादिसिद्धये ॥
कृत्वाऽन्यां पूर्ववद्रज्जुं निदध्यात्तां च पूर्ववत्। द्विप्रादेशो भवेदिध्म एकविंशतिदारुकः ॥
पालाशः खादिरो वा स्यात्प्रागग्रं तं निधाय च। शमीवटादिकं ग्राह्यमनयोर्यद्यसंभवः ॥९॥
वेष्टयेत्सकृदेवेध्मं बद्ध्वोपरि निधाय च। जयन्तमतमप्रोक्तं वक्ष्ये वृत्तिकृतो मतम् ॥१०॥
इष्टिवद्बन्धनं कार्यं मन्त्रस्यात्रेह इष्यते। अरत्न्यायाम इध्मः स्यात्स पञ्चदशदारुकः[1] ॥
एतच्च वृत्तिकारेण शान्तिकर्मणि साधितम्। विष्ण्वादयस्तु नेच्छन्ति मन्त्रं[3] संनहने तयोः ॥
इच्छत्येव जयन्तस्तु मन्त्रमूहं तु नेच्छति। भुञ्जीयातामहन्येव मांसमाषादि वर्जयेत् ॥१३॥
निशायां च शयीयातां दंपती मैथुनं न च। अपरेद्युर्दिने प्रातः परितोऽग्नेः[4] समूहनम् ॥१४॥
पाणिना सोदकेनाग्नेः समन्तात्परिमार्जनम्। तत्समूहनमत्रेष्टं जयन्तवचनं यथा ॥१५॥
पर्यूहपरिषेकौ स्तः सर्वत्र त्रिस्त्रिरम्भसा। सर्वासु दिक्षूदक्संस्था प्राच्यादिषु परिस्तृतिः
अग्नेः षोडशभिर्दर्भैः पूर्वादिषु परिस्तृतिः। स्तृणेद्दक्षिणतः कांश्चिद्ब्रह्मावस्थापिकर्मसु ॥
कांश्चिदुत्तरतो दर्भानास्तीर्य परिषिञ्चति। दर्भेषूत्तरतो द्वंद्वं पात्राणि न्यञ्चि सादयेत् ॥
[6]युग्मान्यादेशमात्राश्च पूर्वाग्रान्सर्वदिक्ष्वपि। तत्क्रमं भगवानाह श्लोकेनैकेन वृत्तिकृत् ॥

स्थाल्यौ चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ साज्य दर्विहोमे।
पात्रं प्रणीतार्थमथाऽऽज्यपात्रमिध्मं क्रमेण [7]पवित्रकुशांश्च ॥ २० ॥

शूर्पं कृष्णाजिनाद्यन्यद्दर्भाद्यं च सादयेत्। अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसंमितौ ॥
अनखच्छेदितौ साग्रौ तौ पवित्राभिधायकौ। अप्रच्छिन्नाग्रयोर्नैव त्यागः सूत्रे महत्कृतः ॥
सिञ्चेन्न्युब्जानि पात्राणि सपवित्रेण वारिणा। उत्तानं प्रोक्षणार्थेऽसौ निनयेत्सपवित्रके
पवित्राभ्यां त्रिरुत्पूतैरद्भिः प्रोक्षणीर्बिलानि तु। विस्रस्येध्मं च चमसं सावित्रपथागतः
पूरयित्वा जलेनात्र गन्धपुष्पाणि चाऽऽवपेत्। ब्रह्मणः प्रणेष्यामीत्याह ब्रह्मा यदा भवेत्
नीत्वा तं नासिकादघ्नमुदगग्नेर्निधाय च। दर्भैः[8] प्रच्छादयेत्पात्रं पूर्णपात्रं तदुच्यते ॥२१॥
पवित्रान्तर्हिते शूर्पे व्रीहिमुष्टिचतुष्टयम्। निर्वपेदग्नये त्वेति मन्त्रेणाऽऽवर्तते च सः ॥

---

१ क. °वेशत्। २ ख. तु। ३ क. °द्विवर्जितम्। ४ क भयुग्म व। ५ क. °तो द्वे द्वे प°।
६ क. युग्मैः प्रादेशमात्रैश्च पूर्वाग्रैः। ७ क. ख. क्रमविक्कुशाश्च। ८ ख. °ये स्वाद्दिन्°।

निर्वपेदपरं त्वग्नीषोमाभ्यां त्वेति मन्त्रतः । पवित्रान्तर्हितान्व्रीहीन्प्रोक्षेन्निर्वापसंख्यया ॥
पूर्वमन्त्रद्वयेनैव प्रोक्षामीति विशेषणम् । प्रत्यग्ग्रीवं स्तृणात्यूर्ध्वलोम कृष्णाजिनं ततः ॥
तस्मिन्नुलूखलं कृत्वा तत्र व्रीहींस्तथाऽऽवपेत् । व्रीहीन्पत्न्यवहन्यात्तांस्त्रिः शुक्लीकृततण्डुलान्
त्रिः प्रक्षाल्य पचेदाज्यमासिच्य सपवित्रके । अपोह्योत्तरतोऽङ्गारांस्तेष्वधिश्रित्य तद्धुनम्
अधिश्रितमवज्वल्य दर्भाग्रद्वयमस्यति । तेनैव ज्वलताऽऽज्यं च त्रिः पर्यग्नि करोत्यथ
चरुं चैवोदगुद्वास्य चाङ्गारानतिसृज्य च । अङ्गुष्ठोपकनिष्ठाभ्यां पवित्रे ते असंहते ॥
गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय तद्धृतम् । सवितुष्ट्वेति मन्त्रेण सकृत्तूष्णीं द्विरिष्यते
कृताज्योत्पवने प्रोक्ष्य पवित्रे प्रास्य चानले । अनलात्पश्चिमात्तीर्णे बर्हिष्याज्यं निधाय तत्
प्रताप्य सकृतौ दर्वीस्रुवौ दर्वीं निधाय च । (+ अथाऽऽदाय स्रुवं दर्वीं दक्षिणेन करेण तु
सव्येन दर्भानादाय संयोज्याग्नौ प्रतापयेत् )। स्रुवस्य बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः ॥
आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् । कुशानां मूलतो दण्डमेकैकं त्रिर्मृजीत वै ॥
प्रोक्ष्य प्रताप्य चाऽऽसाद्य बर्हिष्युत्तरतो घृतात् । संमृज्य तैः कुशैर्दर्वीमासाद्योत्तरतः स्रुवात्
तान्कुशान्कृतसंमार्गान्प्रोक्ष्याग्नौ प्रहरेदथ । अभिघार्य चरुं चोदगुद्वास्य च ततः परम् ॥
अन्तरेणाग्निमाज्यं च नीत्वाऽप्यासाद्य बर्हिषि । आज्याद्दक्षिणतो देशे जयन्तवचनं यथा
केचित्प्रत्यभिघार्येति सूत्रमन्यदधीयते । सहश्रपणपक्षे तु पृथगुद्धरणाय वै ॥ ४१ ॥
निदध्यात्पात्रमिन्नन्मध्ये चर्वाज्ययोस्ततः । अलंकृत्याभिघार्येध्ममाधायायं त इत्यथ ॥
स्रुवेणाऽऽज्यं गृहीत्वाऽग्नेः प्रत्यगुत्तरदेशतः । आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत्
नैर्ऋतीं दिशमारभ्य त्वी(त्वै)शानीं पूर्ववद्धरेत् । उभयत्र चतुर्थ्यन्तं प्रजापतिपदं स्मरेत्
स्वाहेत्याघारयेदेतावाघाराविति भाषितौ । जुहुयादग्नये स्वाहेत्युदगाज्यं स्रुवेण तु ॥४५॥
तेनैव जुहुयादाज्यं सोमायेति तु दक्षिणे । उद्धृत्य च चरोरर्धमभिमृश्येदमग्नये ॥४६॥
इतीदमग्नीषोमाभ्यामिति त्वभिमृशेत्परम् । दर्व्यामुपस्तृणात्याज्यमग्नेश्चरुमध्यतः ॥४७॥
अथव हविरङ्गुष्ठपर्वमात्रं तदोप्य च । अस्यैव पूर्वतस्तद्वदवद्यास्यां तदावपेत् ॥ ४८ ॥
पात्रस्थमभिघार्यास्यां स्थितमप्यभिघारयेत् । जुहुयादग्नये स्वाहा दर्व्या मध्ये हविर्भुजः ॥
प्राक्करे वा देशे तदाज्यभागावपेक्ष्य च । जुहोत्यभिदधदिव दर्व्या पार्श्वेन चासिकाः ॥
उपस्तीर्य द्वितीयस्याप्यवदानादि पूर्ववत् । प्राग्वोदग्वाऽग्नीषोमाभ्यां स्वाहेति जुहुयात्तथा ॥
पञ्चावत्ती तु पश्चार्धादप्यवद्यति वै ततः । स्विष्टकृत उत्तरार्धस्य पुरस्तादप्यवद्यति ॥५२॥
उपस्तीर्याथ हविषोर्द्वयोरप्युत्तरार्धतः । पूर्वावदानतो भूयः सकृत्सकृदवद्यति ॥५३॥

---

+ कंसस्था कारिका घ. पुस्तकेऽधिका ।

---

१ घ. °न्वां सपवित्रे अ° । २ क. °स्वाद्याऽऽज्यं° ।

अथ द्विरभिघार्य तत्पात्रस्थं नाभिघारयेत् । यदस्येत्यादिना हुत्वा प्रागुदक्च हविर्भुजः ॥
सामिध्मबन्धनीं रज्जुं विस्रस्य प्रास्य चानले । अयाश्चेत्यादिभिर्मन्त्रैर्हुत्वाऽऽज्याहुतिसप्तकम् ॥
निनयेत्पूर्णपात्रं तन्निहितं स्वयं बर्हिषि । वामभागे तथाऽऽसीना पत्नी प्रत्यग्विर्भुजः ॥
आसिच्य पाणौ तत्तोयं माऽहं प्रजां परासिचम् । आपो अस्मानयं मन्त्र इदमाप इतीरितः
सुमित्र्या न इति स्वस्य एभिर्मार्जनमाचरेत् । कार्यं पुंसवनादौ तु पत्न्या अपि तु मार्जनम् ॥
केचिन्निनीतिमेवाऽऽहुरुपस्थायौ च मे स्वरः । पर्यु(र्यु)क्ष परिषिच्याग्निंहुतशिष्टं घृतं च यत्
ब्रह्मणे तदभावे तु ब्राह्मणाय प्रदीयते । अग्नीषोमपदस्थान इन्द्राग्नीपदमावपेत् ॥१०॥
अयमेव विशेषः स्यादृर्शे स्वन्यत्समं भवेत् । एतत्तन्त्रं हुतानां स्थालीपाकादिरिष्यते ॥
प्रधानदेवतान्यत्वं तथाकालस्तथेष्यते ॥ १२ ॥ (८२) इति स्थालीपाकप्रयोगः ।

## ३ स्वस्तिवाचनम् ।

स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित् । आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् ॥
आर्चिता ब्राह्मणाः सम्यग्गन्धमाल्यैः सदक्षिणैः । तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः
तिष्ठेद्वाचयिता तेषां दक्षिणस्यामुदङ्मुखः । बिभ्रत्कुम्भमपां पूर्णं पिहिताननमार्चितम् ॥
अथ वाचयितुर्बाहुं दक्षिणं समुपाश्रिताः । तिष्ठन्त्युदङ्मुखाः सर्वे संस्कार्यास्तत्र तत्र तु
मन इत्यादिकं मन्त्रमेकाग्रमतिरादिशेत् । मनसः स्म इति ब्रूयस्ते समाहितपूर्वकम् ॥५॥
प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् । प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथान्विताः ॥
शान्तिपुष्टचृद्ध्याविधानि शिवं कर्म तथैव च । आतुशब्दान्तमुच्चैरन्वाचयित्वा तथा परैः
प्रस्तुत्य देवतायां तु होमं कुर्याद्विचक्षणः । तस्य नाम गृहीत्वाऽथ प्रीयतामिति भाषते ॥
पुण्याहं स्वस्ति ऋद्धिं च भवःपूर्वं ब्रुवन्त्विति । प्रणवाद्यं त्रिरावृष्टे भवदादि विना परे ॥
पुण्याहादेस्त्रिरभ्यासैर्मन्द्रमध्योच्चनिःस्वनैः । आचक्षीरन्निमे सर्वे यथागमपरम्परा ॥१०॥
प्रत्युक्तिविषये वेदस्तृतीयेस्त्वृध्यतामिति । तुर्यं श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः
आप इत्यादिभिः शान्तिं ततः कुर्यात्समाहितः । स्वस्तिवाचनमत्रेष्टं सर्वेषामाद्यकर्मणाम् ॥
आद्यावन्ते प्रयोक्तव्यमिति मन्त्रविदां मतम् । जयन्तस्वामिनाप्रोक्तमिदं तु स्वस्तिवाचनम् ॥
॥ १३ ॥ ९५ ॥ इति स्वस्तिवाचनम् ।

## ४ गर्भाधानप्रयोगः ।

जयन्तोक्तेन मार्गेण गर्भाधानमिहोच्यते । चतुर्थदिवसादूर्ध्वं मघामूलादि वर्जयेत् ॥
अलंकृते गृहे गन्धधूपमाल्यादिभिः शुभैः । ऋतुस्नातां शुभैर्गन्धमाल्यादिभिरलंकृताम् ॥
अलंकृतः स्वयं तद्वदारोप्य शयने शुभे । वेदयित्वाऽश्वगन्धाया मूलं शुद्धाम्बरे क्षिपेत् ॥

---

१ ख. ओप्य । २ क परे ३ क. "ति पूत्यति" ।

ऋचोदीर्ष्वेति इत्यस्या दक्षिणे नासिकापुटे। निष्पीड्य पिष्टं तन्मूलं वस्त्रसंशोधितं ततः॥
एवं कृत्वोपगमने कृते स्याद्गर्भलम्भनम्॥ ९ ॥ (१००) इति गर्भाधानप्रयोगः।

## ५ पुंसवनप्रयोगः।

तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत्। आद्यो गर्भो न विज्ञातस्तृतीये मासि वै यदि॥
चतुर्थे मासि कर्तव्य आद्यगर्भे स्मृतो विधिः। स्यादाभ्युदयिकं श्राद्धं गर्भिण्या एकभोजनम्
अथापरेद्युरिध्मर्क्षे पत्नीं कृत्वा समीपतः। आत्मनो दक्षिणे पार्श्वे प्रत्यगानडुहाजिने॥
गर्भिण्युपविशेत्स्नाता जयन्तवचनं यथा। पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत्॥
निर्वापप्रोक्षणे स्यातां प्रजापतय इत्यथ। कृत्वाऽऽज्यभागपर्यन्तमवघातादि पूर्ववत्॥
समानरूपवत्साया गोर्दधि प्रसृतौ क्षिपेत्। तादृश्या गोरभावश्चेदन्यस्या गोर्दधि क्षिपेत्॥
माषद्वयं यवं च त्रिः पृच्छेत्किं पिबसीति ताम्। त्रिः पुंसवनमित्युक्त्वा प्राशयेवं प्रसृ-
तित्रयम्॥ ७ ॥
वृषरूपेण माषौ स्त- श्छिश्नरूपेण वै यवः॥ ८ ॥ (१०८) इति पुंसवनम्।

## ६ अनवलोभनप्रयोगः।

परिमण्डलगेहस्य च्छायायामुपवेश्य ताम्। सिञ्चेद्दूर्वारसं त्वस्या दक्षिणे नासिकाबिले
प्रजावज्जीवपुत्राभ्यां सूक्ताभ्यां वा तदिष्यते। अन्ये त्वाहुरिदं कर्म कृत्स्नं स्यात्परिमण्डले
एकदेशं चरोर्हुत्वा प्रजापतय इत्यथ। यत्ते सुशीम इत्यस्या हृद्देशं पाणिना स्पृशेत्॥
भवेत्स्वष्टकृदाद्यस्याः पतिर्वा देवरोऽपि वा। कर्ता स्याद्देवरस्तद्वत्तस्याः पत्युरसंभवे॥
आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः॥ ९ ॥ (११९) इत्यनवलोभनम्।

## ७ सीमन्तोन्नयनप्रयोगः।

चतुर्थे गर्भमासे तु सीमन्तोन्नयनं भवेत्। पूर्वोक्तस्यासंभवे षष्ठे मासे यद्वाऽष्टमे भवेत्॥
पुंनक्षत्रे सिते पक्षे स्वन्वाधानादि पूर्ववत्। पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः॥
अभिजित्प्रोष्ठपाच्चैव अनूराधा तथाऽश्वयुक्। ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यते॥
प्राग्ग्रीवमूर्ध्वलोम स्यात्प्रत्यगानडुहाजिनम्। प्रोक्षणीं स्रुवमासाद्य चमसं चाऽऽज्यभाजनम्
इध्माबर्हिरयं प्रोक्त आज्यहोमेष्वनुक्रमः। आज्यासादनपर्यन्तं पवित्रकरणादथ॥ ५ ॥
पश्चादग्नेरुपविष्टायां समन्वारभते पतिम्। स्यादाज्यभागपर्यन्तमिध्माधानादि पूर्ववत्॥
अष्टावाज्याहुतीर्हुत्वा मन्त्रैर्धाता ददात्विति। औदुम्बरः स्यात्स्तबकस्तदभावेऽन्यवृक्षजः
फलवत्स्तबको ग्राह्यो त्रिशुक्ला शलली तथा। त्रीणि स्युः कुशपिञ्जूलान्येभिरेकीकृतैरथ
ललाटे केशयोः संधिमारभ्य व्यूहनं भवेत्। त्रिर्व्यूहेदथ सीमन्तमामूर्ध्नो भूर्भुवःस्वरोम्॥

---

१ क. °रूप। २ ख. पतिः।

चतुर्थो व्यूहनं कार्यं सूत्रकारवचो यथा । आवर्तते त्वयं मन्त्रः सर्वेत्रैवं प्रतीयताम् ॥
संप्रैष्य सोमं राजानमिति प्रैषेण गाथिनौ । सोमो न इति गायेतां तौस्थानेऽसौपदस्य तु ॥
समीपे या नदी तस्या नाम गङ्गे सरस्वति । ततः शिखष्ठकुदादि स्याद्दीयते वृषभस्ततः ॥
ब्राह्मणे तदभावे तु ब्राह्मणेभ्यः प्रदीयते । यद्वाचोपदिशेद्वृद्धा ब्राह्मणी सधवप्रजा ॥
पत्नी कुर्यादिहापि स्यान्नान्दीश्राद्धं पुरैव तु । नाऽऽवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः ॥
॥ १४ ॥ ( १२७ ) इति सीमन्तोन्नयनप्रयोगः ।

## ८ जातकर्मप्रयोगः ।

जाते पुत्रे पिता कुर्यान्नान्दीश्राद्धं विधानतः । ( +प्राङ्नाभिच्छेदनात्पुंसः स्नानं कृत्वा सचैलकम् ) ॥ १ ॥
जातकर्म ततः कुर्यादन्यैरालम्भनात्पुरा । एकस्मिन्भाजने सर्पिर्मधु चैव समानयेत् ॥
अवघृष्य हिरण्येन संसृज्येरँल्लवा यथा । हिरण्येन कुमारं तं प्राशयन्मधुसर्पिषी ॥३॥
प्रते ददामि मन्त्रेण मातुरुत्सङ्गसंस्थितम् ।हिरण्यं दक्षिणे कर्णे निधायैतामृचं जपेत् ॥
मेधां त इति सव्ये च निधायैतामृचं जपेत् । अक्रमेणास्य युगपदंसावभिमृशेदथ॥५॥
प्रथमाऽश्मा भवेति द्वितीयाऽग्नीत्यपरा ततः । तृतीयाऽस्मै प्रयं धीति कुमार्याः स्यादमन्त्रकम्
॥ ६ ॥ ( १३३ ) इति जातकर्म ।

## ९ नामकरणप्रयोगः ।

(+अनन्तरं दशम्यादौ यद्वा नामकृतिर्भवेत्) । द्वादश्यां नामकरणं नान्दीश्राद्धे कृते सति॥
पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम् । पक्षे घोषवदित्यादिरेवकारादिनाऽऽहृतः
स्वस्त्ययने देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत् । नामाभिवादनीयं तु विप्रोर्द्ध्वोपनीतितः
॥ ३ ॥ ( १३६ ) इति नामकरणम् ।

## १० निष्क्रमणप्रयोगः ।

चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् । स्नातं स्वलंकृतं चाभिहितस्वस्त्ययनं शिशुम्
आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् । अभ्यर्च्य देवताः सम्यगाशिषो वाचयेदथ॥
कृत्वा प्रदक्षिणं गेहमानयेत ततः स्वकम् । मातृर्ध्वसुर्गृहं यद्वा मातुलादिगृहं नयेत् ॥
तदाशीर्वचनाद्यैः स्याद्दीर्घायुरभिवन्दितः । जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः
॥ ४ ॥ ( १४० ) इति निष्क्रमणम् ।

---

+ पद्धैलर्कवस्यो ग्रन्थः क. पुस्तके नास्ति ।

---

१ क. तथा । २ १ क. 'प्वसृर्' ।

## ११ अन्नप्राशनप्रयोगः ।

अथ पुण्येऽहनि षष्ठे तु मासेऽन्नप्राशनं भवेत् । कृत्वाऽऽभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम्
अन्नं तं प्राशयेदन्नपत इत्यादिमन्त्रतः । कर्मयोगेन(ण) वाऽजादिपक्षोक्तः प्राशयेद्द्विजः
आजतैत्तिरमांसानां प्राशनं कामयोगतः । अमन्त्रकमिदं कुर्यात्प्राशनं योषितामपि ॥
॥ ३ ॥ ( १४३ ) इत्यन्नप्राशनम् ।

## १२ चौल(चूडाकर्म)प्रयोगः ।

तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे । शुक्लपक्षे शुभर्क्षे तु कृत्वाऽऽभ्युदयिकं तथा ॥
यथान्वयं वा केषांचिदुपनीत्या सहेष्यते । स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु कर्मसु ॥
एतस्मिन्नेव काले स्याद्गृह्यस्नातोपनायने । अन्यत्रापि विवाहः स्यादिति सूत्रकृतो मतम्
चौलकर्मोपनयने विवाहः प्रथमस्तथा । व्रतानि स्नानमित्येषां लौकिकोऽग्निरिति स्थितिः
(+पूर्णपात्रनिधानान्तमुल्लेखादि) पूर्ववत् । व्रीहिपूर्णं शरावं स्याद्यवपूर्णं तथाऽपरम् ॥
माषपूर्णं तथाऽन्यत्तिलपूर्णमथापरम् । एतानि च शरावाणि न्यसेदुत्तरतोऽनलात् ॥
कुमारो मातुरुत्सङ्ग आस्ते प्रत्यग्घविर्भुजः । अथाऽऽनडुहमन्यस्मिञ्शरावे गोमयं क्षिपेत्
शमीपर्णानि चान्यस्मिन्द्वे स्तो मातुः समीपतः । मातुर्दक्षिणतो ब्रह्मा सप्त सप्त च सप्त च ॥
कुशपिञ्जूलकानां तु गृहीत्वाऽऽस्तेऽथवा पिता । कुर्यादाघारपर्यन्तमाज्यसेकादि पूर्ववत्॥
इदमादिविवाहान्तं नैवेष्टावाज्यभागकौ । अग्न आयूंषि तिसृभिः प्रजापते न इत्यृचा ॥
स्रुवेणाऽऽज्याहुतीर्हुत्वा शीतोष्णाम्भस्यथाऽऽनयेत् । पश्चात्स्थित्वा कुमारस्य शीता
उष्णाश्च ता अपः ॥ ११ ॥
पाणिभ्यां भाजनेऽन्यस्मिन्युगपन्निनयेदथ ।उष्णेन वाय उदकेनेहीत्येतेन तद्भवेत् ॥
एकदेशं गृहीत्वाऽऽसां नवनीतं च वै ततः । दध्नो रसमुपादत्ते नास्ति चेन्नवनीतकम् ॥
प्रदक्षिणं कुमारस्य शिरस्त्रिः क्लेदयेदथ । आरभ्य वामतः कर्णप्रदेशात्क्लेदनं भवेत् ॥
स्याचेतददितिः केशान्वपत्वित्याद्रिमन्त्रतः । निदध्यादोषधे त्रायस्वैनमित्यस्य दक्षिणे ॥
केशपक्षे कुमारस्य ह्येषामे तत्कुशत्रयम् । पिञ्जूलेषु क्षुरं न्यस्य स्वधिते मैनमित्यथ ॥
अवपीडयतीत्यर्थः क्षुरस्ताम्रमयो भवेत् । येनावपदिति च्छिन्द्याच्छिन्नान्प्रागग्रकान्कुशान्
एकीकृत्य शमीपर्णैस्तांश्च मात्रे प्रयच्छति । छेदनं च सकेशानां पिञ्जूलानां भवेदिह ॥
निदधाति च सा माता तानानडुहगोमये । पूर्ववत्कुशपिञ्जूलनिधानादि समन्त्रकम् ॥
येन धातेति मन्त्रोऽयं छेदने तु विशिष्यते । तृतीये च चतुर्थे तु पिञ्जूलादि समं भवेत्

+ कैसगतमर्धं क. पुस्तके न ।

१ ध. °यनम् । २ ध. हृदये । ३ ध. तु । ४ क. समन्त्रकम् ।

तृतीये येन मूर्धश्च चतुर्थे च्छेदनं त्रिभिः। एवमेवोत्तरे पक्षे त्रिरेव च्छेदनं भवेत्॥ २१॥
याक्षुरेणेति मन्त्रेण क्षुरधारां विमार्ष्ट्यथ। आरभ्याग्रत आमूलप्रदेशान्तं निमार्जनम्॥
शीतोष्णाभिरिति प्रैषेणानुशिष्याच्च नापितम्। शिखा अपि च कर्तव्यास्तस्य स्वगृह्यवि-
संस्थया॥ २३॥
ततः शिवष्टकृदादि स्यात्कुमार्यै स्यादमन्त्रकम्। व्रीह्यादिपूर्णान्येतानि नापिताय प्रयच्छति
॥ २४॥ (१६७) इति चूडाकर्मप्रयोगः।

## १३ उपनयनप्रयोगः।

ब्राह्मणस्योपनयनमुक्ते काले भवेदथ। कृत्वाऽऽभ्युदयिकं श्राद्धं पूर्वेद्युरपरेऽहनि॥
कृतस्नानमलंकुर्वाद्राशिनो वाचयेदथ। भुक्तभोज्यस्य शिरसो वपनं स्नानमेव च॥३॥
एवंभूतं कुमारं तमवस्थाप्याग्निके ततः। ज्योतिःशास्त्रविदुक्ते तु मुहूर्ते शोभने ततः
(+आज्यसंस्कारपर्यन्तमुपलेपादिपूर्ववत्। परिधानं भवेदस्य वाससैवाहतेन तु)॥४।
भवेत्प्रावरणं वासः कृष्णाजिनमथापि वा। एवंभूतं कुमारं तं कुर्याद्यज्ञोपवीतिनम्॥
आचान्तमुत्तरेणाऽऽज्यं यज्ञपात्राणि चाऽऽनयेत्। अन्तरेणाग्निमात्मानं दक्षिणे तूपवेशयेत्
बर्हिरास्तरणादि स्यात्स्रुवसंमार्जनान्तकम्। समन्वारब्ध एतस्मिन्ब्रह्मचारिण्यथेतरः॥७॥
कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतीरपि। अत्राऽऽज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु॥
अग्नेरुत्तरतस्तिष्ठेदाचार्यः प्राङ्मुखस्ततः। अकुर्वन्नात्मनोऽग्नेश्च व्यवायं गच्छतीतरः॥
आचार्यस्य पुरस्तात्तु तिष्ठेत्प्रत्यङ्मुखस्ततः। व्यवायस्तु संस्कारः कर्मस्वाग्निकुमारयोः
ब्रह्मचारिण आचार्यः पूरयेदद्भिरञ्जलिम्। आचार्यस्याञ्जलिं त्वन्यः पूरयेद्वै ततो गुरुः
तत्सवितुर्वृणीत्यस्य निनीयाञ्जलिमञ्जलौ। अवक्षारयतीत्यर्थः स्वेन पूर्णं तमञ्जलिम्॥
देवस्य त्वेति गृह्णीयात्पाणिं साङ्गुष्ठमस्य च। असावित्यानेऽस्य नाम स्यादेवमुत्तरयोरपि
अप्पूरणादि तद्वत्स्यादन्यो मन्त्रः करग्रहे। सविता ते हस्तमित्यप्पूरणादि तथा भवेत्
हस्तग्रहे तु मन्त्रोऽयमग्निराचार्य इत्यथ। आचार्यो देव सवितरित्युक्त्वा रविमीक्षयेत्
कस्येति परिदायैनं प्रजापतये ततः। युवा स्वर्धश्चेतः कुर्यात्प्राङ्मुखं दक्षिणावृतम्॥
अस्योपर्यंसयोः स्वस्य पाणी कृत्वा हृदि स्पृशेत्। तं धीरा ऋचेतः कृत्वा ब्रह्मचार्यूहनेक्षणे
पर्यूहनवचश्चैतदुत्तरार्धमिति ब्रुवन्। अत्र पर्यूहनं नास्तीत्याह हेतुं च वृत्तिकृत्॥१८॥
तूष्णीं समिधमादध्यादग्नौ प्रादेशसंमिताम्। एतदचोऽथवाऽऽदध्यादग्नये समिधं स्विति
स्पृष्ट्वाऽग्निं तेजसा मेति स्वयमार्ष्टि ततो मुखम्। प्रक्षाल्य हस्तमनलमुपस्पृश्यावमार्ष्ट्यथ
प्रक्षाल्य पूर्ववत्स्पृष्ट्वा तृतीयमवमार्ष्ट्यथ। ओष्ठावलोमकौ कृत्वा संवृतौ तन्निमार्जनम्॥

---

+ कंसस्थकारिका क. पुस्तके नास्ति।

---

१ क. निमृज्य च। २ क. °मार्या अप्यम।

अनुप्रवचनीयश्च तदभावे द्वयं न च । परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् ॥
पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे । भिक्षाख्यं दिवारात्रावाचार्यायाऽऽत्मतुष्टये॥
भणितोऽत्र विशेषोऽयं समानमितरद्भवेत् । अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदुच्यते
पर्यूहनोक्षणे स्यातामाद्यावन्ते च कर्मणः । तूष्णीं समिधमित्यादि ह्युपस्थानान्तमेव च ॥
वेदस्वीकरणं यावत्तावदेवं समाचरेत् । अथवा द्वादशाब्दं स्याद्ब्रह्मचर्यमिति स्थितिः ॥
सावित्र्या ब्रह्मयज्ञोऽपि तस्य तावदुपाकृतेः ॥ ९३ ॥ ( २२० ) इत्युपनयनम् ।

## १४ महानाम्नीव्रतम् ।

महानाम्न्यादि कर्तव्यं तत्तत्काले व्रतत्रयम् । उक्ते काले ददाम्यन्तं वापनाद्युपनीतिवत् ॥
नवां मौञ्जीं नवं दण्डं दत्त्वा स्विष्टकृदाद्यथ । संवत्सरं चरेदेवं पूर्णेऽब्दे तूत्तरायणे ॥
शुक्लपक्षे बहिर्ग्रामाद्विविक्तं देशमेत्य च । पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् ॥ २ ॥
स्वस्थालं मुक्तये तूष्णीं निरूप्य प्रोक्ष्य तत्र च । तिष्ठानोप्य पचेत्पक्वमाचार्याय निवेदयेत् ॥
पृच्छति व्रतलोपान्स्वं दत्ते प्रतिवचस्तथा । बहवो व्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् ॥ ९ ॥
लोपेष्वापत्प्रयुक्तेषु पुनर्नाऽऽवर्तयेद्व्रतम् । तेनान्वारब्ध आचार्य इध्माधानादि पूर्ववत् ॥
हुत्वाऽग्नावग्निरित्यादिमन्त्रैश्चर्वाहुतीरथ । ततः स्विष्टकृतोऽवधेच्छेषं भूमौ निधाय च ॥
एतमित्याद्यशानान्तमाह प्रैषमतः परम् । मुक्तवन्तं तथाचान्तं जलपूर्णाञ्जलिं ततः ॥
स्वं व्रतानां व्रतेत्यादि मुक्तवन्तं दिवाकरम् । उपस्थाप्याथ कुर्वीत मीलिताक्षं च वाग्यतम् ॥
त्रिः प्रदक्षिणमावेष्ट्य वाससा संमुखं शिरः । उक्त्वैकरात्रमित्यादि प्रैषं स्विष्टकृदाद्यथ ॥
आवश्यकेभ्य इतरच्छयनं स्नानभोजनम् । अकुर्वन्नेकरात्रं च ब्रह्मचारी नयेदथ ॥ ११ ॥
ईशान्यां च निधायाभ्यामग्नेस्तृणेषु तु । ईशान्यभेपूपविशेदीक्षमाणस्तु तां दिशम् ॥
शिष्योऽपि स्वमुखं प्रक्षाल्याभ्याचार्यो प्रदक्षिणम् । कृत्वाऽऽचार्यस्य संगृह्य पादौ तेषु तृ-
णेषु तु ॥ १२ ॥
ईक्षमाणो दिशं प्रत्यग्दक्षिणामुपाविश्य च । स्वेन पृष्ठेन तत्पृष्ठं संदधाति ततः परम् ॥
मनसाऽऽह महानाम्नीर्मो अनुब्रूहि तं गुरुम् । पृच्छेत्तदहरुत्पन्नान्व्रतलोपांस्ततो गुरुः ॥
स्वयं संमीलनं कुर्वन्महानाम्नीर्वदेद्गुरुः । त्रिः पुरीषपदेष्ठु कृत्वा तस्योष्णीषं विमोचयेत् ॥
ईक्षयेदर्कमीक्षेत भिक्षस्येति द्वयेन तु । सतंमाराः दिशो वीक्ष्य भिन्नस्य च इति त्रय ॥
भिन्नस्येति चतुर्थेन पुनरादित्यमीक्षयेत् । ईक्षणेऽर्कदिशां मन्त्रा ब्रह्मचारिण एव तु ॥
मन्त्रान्ते कर्म कर्तव्यं सर्वत्र करणत्वतः । उक्त्वा चाग्न इळेन्याद्यीन्मन्त्रान्भूमिमुपस्पृशेत्
अनुप्रवचनीयश्च कार्योऽस्य भेद उच्यते । महानाम्नीभ्यः स्वाहेति सावित्र्याः स्थान इष्यते
॥ २० ॥ ( २४० ) इति महानाम्नीव्रतम् ।

---

१ क. संमुखं ।

## १५ महाव्रतम् ।

महानाम्नीव्रतं प्रोक्तं महाव्रतमथोच्यते । पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥ १ ॥
पूर्णे संवत्सरे देशे विविक्त उपविश्य च । प्राङ्मुखं श्रावयत्येनं महाव्रतमतः परम् ॥
अनुप्रवचनीयादि कुर्यादर्केक्षणादिकम् । महाव्रताय स्वाहेति सावित्र्याःस्थान इष्यते
॥ ३ ॥ ( २४३ ) इति महाव्रतम् ।

## * १६ उपनिषद्व्रतम् ।

श्रावयित्वोपनिषदमामित्यावेक्षणादि च । अत्रोपनिषदे स्वाहा सावित्र्याः स्थान ॥
इष्यते ॥ १ ॥ ( २४४ ) इत्युपनिषद्व्रतम् ।

## १७ गोदानव्रतम् ।

गोदानं चौळवत्कार्यं षोडशेऽब्दे तदुच्यते । अक्षोपवेशनं नास्ति श्मश्रूणां वापनं भवेत् ॥
अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे । पिञ्जूलादिनिधानं च श्मश्रुपक्षे भवेदिह ॥
निमार्जने विशेषोऽयं श्मश्रूणीति शिरो मुखम् । शासने नापितस्यायं विशेषः प्रैष उच्यते
केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति । स्नात्वा च वाग्यतस्तिष्ठन्नहःशेषं नयेदथ ॥
आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः । उक्त्वा वरं ददामीति दद्याद्गोमिथुनं ततः
+असंभवे गोवृषयोर्मिलित्वा वा गुरोर्दिशेत् ) । श्वः पूर्ववद्व्रतादेशः संवत्सरमिदं चरेत्॥
व्रतेष्वेतेषु सर्वेषु प्रसिद्धं केशधारणम् ॥ ७ ॥ ( २५१ ) इति गोदानव्रतम् ।

## १८ समावर्तनप्रयोगः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥
व्रतपक्षेऽपि शब्दार्थमात्राध्ययने कृते । विद्यान्ते गुरुमाहाहं कमर्थं करवाणि ते ॥
यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य च । आचार्यायाऽऽत्मने चैव मण्यादीन्युपकल्पयेत्
आचार्यायैव कल्प्यानि न लभेतोभयोर्यदि । कुर्वीत स्वयमेवेदं समावर्तनसंज्ञकम् ॥
प्राप्योदगयनापूर्यमाणक्षस्वस्त्ययनः स्वयम् । प्रागुदीचीं दिशं गच्छेत्तस्यां वै यज्ञियस्य तु
शालेयानीं गतां तस्याश्छित्त्वा प्रादेशसंमिताम् । आहृत्य समिधं भूमेरन्यत्र निदधाति ताम्
दत्त्वा गां भोजयेद्विप्रान्गोदानोक्तं करोत्यथ । स्नात्वा वाग्यत इत्यादि न कार्यमिह कर्मणि

---

*' महाव्रतमिदं प्रोक्तं तदथोपनिषद्व्रतम् । पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥ ' इयं कारिका क. ग. पुस्तकयोरधिका । + कोष्ठस्थं कारिकार्धं क. पुस्तके न ।

---

१ ख. 'ष्टे संवत्सरमिदं चरेत् । २ क. 'नीयादीन्कु' । ३ ग. पयनम् । ४ ग. गुरोः ।

पदान्यूह्यानि वन्यत्र वाच्यं प्राशस्त्र मामिति । मा मा हिंसीरिति ब्रूयाद्यथाऽऽसमिति चांपरम् ॥ ८॥

तेनम आयुपेत्येवमूह्यं मन्त्रद्वयेऽपि च । मा म आयुरिति स्वन्यत्सर्वं गोदानवद्भवेत् ॥ कास्त्रबीजमन्त्रैकं पिष्टेनोन्मृज्य तेन तु । शीतोष्णैः स्नात आचान्तो वह्नेर्गत्वाऽन्तिकं पुनः युवमित्यनया वस्त्रे आच्छाद्याऽऽवर्तयेत्स्वियम् । मन्त्रावृत्तिरियं दृष्टा वृत्तौ नायणस्य तु आचम्य चोऽश्मनस्तेज इत्युक्ते सव्यमीक्षणम् । एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमक्षिणम् कुण्डले चाश्मनस्तेज इति श्रोत्रमलंकुरु । अनेनैव तु मन्त्रेण पश्चात्सव्यमलंकुरु ॥ १२॥ कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम् । अनुलिप्येतराङ्गानि पश्चात्प्रक्षालयेत्करौ अमार्तासीति मन्त्रेण बध्नाति शिरसि स्रजम् । सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ आस्थाय च्छत्रमादध्याद्दिवश्छद्मासि मन्त्रतः । गृहीत्वा वैणवं दण्डं वेणुरस्यादिमन्त्रतः आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च । सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् नवाम्बरेण संवेष्ट्य शिरोऽथोपानहौ त्यजेत् । आहृतां समिधं तिष्ठन्नग्नावाधाय मन्त्रतः॥ स्मृतं च म इति ब्रूयादमृतं च म इत्यपि । तस्योपरि वदेत्तन्म उभयव्रतमित्यथ ॥ द्वादशाप्येवमेवोक्त्वा यथापाठमथोत्तरम् । मन्त्रेणैवंविधेनाग्नावाहितायां समिध्यथ ॥ उपविश्य दशाऽऽदध्यादन्याः प्रादेशसंमिताः । अत्रोपवेशनं प्राह वृत्तिकारः सहेतुकम् ममाग्ने दशभिः कुर्वन्स्वाहाकारमृगन्ततः । परिषेचनपर्यन्तं कुर्यात्स्विष्टकृदादिकम् ॥ ततः संकल्पयेन्नक्तं न स्नामीत्युत्तराण्यपि । दास्यन्ति मधुपर्कं ये तत्रैतां रजनीं नयेत्॥ ॥ २१ ॥ ( २७४ ) इति समावर्तनम् ।

## १९ स्नातकगमनविधानम् ।

अथ शिष्यः समावृत्तो नामोपांशु गुरोर्वदेत् । उच्चैरूर्ध्वं वदेत्स्थान इदमस्त्वेष्माश्रमम् ॥ हे देवदत्त गार्हस्थ्यं वत्स्यामो भो इति स्वथ । उपांशु जपति प्राणापानयोरिति वै ततः ॥ आमन्द्रैरित्यृचं चाथ गुरुश्चैतौ जपत्यथ । ॐ प्राणेत्यादिकं मन्त्रं जपित्वाऽऽचार्य एव तु सूक्तेन तु महित्रीणामवोऽस्त्वित्यनुमन्त्र्य तम् । वत्स्यथेत्यनुजानीयादनुज्ञातो यथा पथि गच्छञ्शृणोति वाक्यानि पक्षिणामप्रियाणि तु । जपेत्कनिक्रदत्सूक्तं देवीं वाचमृचं तथा ॥ शिवादेरप्रियं श्रुत्वा स्तुहिश्रुतमृचं जपेत् । यस्या दिश्यथवा यस्मात्पुरुषाद्वाग्रतोऽपि वा बिभेत्युभयतो दीप्तमुल्मुकं तद्दिशि क्षिपेत् । मन्त्रेणाभयमित्यादि नैनदुल्मुकमस्यति ॥७॥ सर्वतोमयमुत्पन्नं नच ज्ञातमतो नरात् । अन्यतो वोत्ते लोकाग्नावाधारान्तं करोत्यथ ॥

---

१ क. वाऽपरम् । २ क. चाऽऽत्मनस्ते॑ । ३ क. ख. वसेत् । ४ क. ता दिशं क्षि॰ ।

पृथिव्याद्यष्टभिर्मन्त्रैर्हुत्वाऽष्टाज्याहुतीरथ । स्थित्वैशान्यां जपेत्स्वस्ति नो मिमीतां तु सप्त वै
मरुधो जपति त्वन्त्या यत इन्द्र भयामहे । ततश्च स्विष्टकृद्वर्जं होमशेषं समापयेत् ॥१०॥
(२८४) इति स्नातकगमनविधिः ।

## २० विवाहाङ्गं मधुपर्कः ।

यथोक्तलक्षणां कन्यामुक्ते काले समुद्वहेत् । स्यादाभ्युदयिकं श्राद्धं द्वितीये वक्ष्यते च तत्
अपरेद्युः कृतस्नानोऽहतवस्त्रधृतो वरः । स्वलंकृतः सितच्छत्रो पदातिर्ज्ञातिबान्धवैः ॥
वृतो वधूगृहं गत्वा मधुपर्केण पूजितः । कन्याज्ञातिभिरत्रैव मधुपर्को यथोच्यते ॥ २ ॥
विष्टरासुपवस्त्येनमुपवेश्याऽऽसने शुभे । तत्रोपकल्पितं पूर्वं विष्टरं त्रिर्निवेदयेत् ३ ॥
उत्तराग्रे स्वहं वर्ष्मोऽस्मीत्यभिमनुपविशेद्वरः । एवमेवोत्तरेषां च पद्यानां त्रिर्निवेदनम् ॥५॥
निवेदितेन पाद्येन पादौ प्रक्षालयेद्वरः । प्रक्षालयित्रे विप्राय दक्षिणाङ्घ्रिं प्रयच्छति ॥
पश्चात्सव्यं तु शूद्राय पूर्वं सव्यं प्रयच्छति । गन्धादियुक्तमर्घ्यं च प्रतिगृह्य निवेदितम् ॥
वेदिताचमनीयापामेकदेशं ततो वरः । उक्त्वाऽमृतोपस्तरणमसिमन्त्रं पिबेदप ॥ ८ ॥
शौचार्थाचमनं कार्यमेवेति प्राह वृत्तिकृत् । अवान्तरेण शौचार्थं सर्वमाचमनं त्विह ॥
आनीयमानमीक्षेत मित्रस्य त्वेति मन्त्रतः । मधुपर्कमथाऽऽनीतं पूर्ववच्च निवेदितम् ॥
देवस्य त्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः । मधुवातास्तृचेनैनं मधुपर्कमवेक्षते ॥ ११ ॥
निदधाति च तत्पात्रं सव्ये पाणावितः परम् । अङ्गुष्ठोपकनिष्ठाभ्यामालोड्य त्रिः प्रदक्षिणम्
वसवस्त्वादिभिर्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् । निमृज्याद्गुल्लिखेत्तु भूतेभ्यस्त्वेति मन्त्रतः
त्रिरुद्धृत्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च । प्राश्नात्यस्यैकदेशं तु विराजो दोह इत्यथ
आचम्य पूर्ववत्प्राश्य विराजो दोहमित्यथ । आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ
विनियोगं च कुर्वीत शिष्टस्यास्योक्तमार्गतः । आचम्यापामृतापीति पिबेदाचमनीयकम् ॥
आचम्याऽऽचमनीयाम्बु पिबेत्सत्यं यशस्त्विति । आचान्तः पुनराचामेदथ गां त्रिर्निवेदयेत्
ततो वरो जपेन्माता रुद्राणां दुहितेत्यृचम् । अथोमुत्सृजतेत्याह प्रेषं गामुत्सृजन्ति थे ॥
गन्धमाल्याम्बरैस्तद्वद्भूषणैः पूजयेद्वरम् ॥ १८ ॥ (१०२) इति मधुपर्कः ।

## २१ कन्यादानम् ।

स्नातालंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः । ईक्षेत तण्डुलैर्धाया वा रतस्य मुखं च सा
मुहूर्ते शोभने सम्यक् स्थिता मुखयोर्मिथः । सगुणान्मीरवान्कन्यां वरयेदथ तां वरः ॥
अमुकामुकगोत्रस्य पुत्रः पौत्रः प्रपौत्रकः । एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्त्रिकाम्
वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् । वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम्

---

१ क. तृतीये । २ क. °न्दवत । ३ क. ते । ४ ख. °स्यानो ब° । ५ ख. °देशमुभयो° ।

पुत्रायास्य च पौत्राय नप्त्रे चामुकगोत्रिणे । इमां अमुकगोत्राय पुत्रीं पौत्रीं प्रपौत्रिकाम् ॥
श्रीरूपां च मया दत्तां तुभ्यं श्रीधररूपिणे । इत्युक्त्वोदकपूर्वां तां दद्यात्स्वस्तिपदं वदेत् ॥
वरोऽथ प्रतिगृह्णीयात्सप्तोक्त इति मन्त्रतः । अस्मिन्नहनि यत्किंचित्कन्यादाता ततः परम्
गोभूहिरण्यदास्यादि तस्मै दद्यात्स्वशक्तितः । सघृतं क्षीरमादाय कराभ्यां कन्यकाञ्जलिम्
द्विरन्मृज्य वरः सिक्तान्शुक्लान्शाल्यक्षतानथ । गृहीत्वाऽञ्जलिना तस्या अञ्जलौ द्विः
सिपेत्ततः ॥ ९ ॥

आदायाञ्जलिमाधत्ते तदञ्जल्युपरि स्वयम् । कन्येत्याद्याशिषः पूर्वमुक्त्वा दाता ततः परम्
कन्यां त्वां प्रतिगृह्णामित्यन्तं क इति मन्त्रतः । उपरिस्थाञ्जलौ पूर्णे हरेत्स्वर्णोदकं ततः
तमेव प्रतिगृह्णामीत्यन्तं मन्त्रमुदीरयेत् । अञ्जलिस्थाक्षतान्कन्यामूर्धनि प्रक्षिपेद्वरः ॥
स्वाञ्जलिस्थाक्षतान्कन्या वरमूर्ध्नि विनिक्षिपेत् । मूर्ध्निक्षेपान्तमेवं स्यात्पुनरुन्मार्जनादिकम्
उन्मार्जनादिकं कुर्यात्पूर्ववत्कन्यका वरे । कन्येत्यादि पिता कुर्याद्वरतन्त्रे वरो वदेत् ॥
कन्याशिरस्थमाल्यस्य गृहीत्वा कौसुमं दलम् । सघृतं क्षीरसंमिश्रं कुर्यात्तिलकमुत्तमम् ॥
वरः कन्याललाटे च कन्या वरशिरस्स्रजः । पुष्पस्य दलमादाय क्षीराज्याक्तं वरस्य तु ॥
ललाटे तिलकं कुर्यादक्षितैव मिथो मुखम् । कण्ठे मिथः शुभे माल्ये दंपती प्रतिमुञ्चतः ॥
बद्ध्वा वस्त्रान्तमुभयोः प्राङ्मुखौ च ततः परम् । देवीं दाक्षायणीं नत्वा सर्वसंपत्प्रदायिनीम्
होमदेशे प्रनेतां तौ परिगृह्य करौ मिथः । तदेतत्सूत्रकृद्वाक्ति सूत्रेणोत्त्वावचोदितम् ॥ १९ ॥

इति कन्यादानम् ( ३२१ ) ।

## २२ विवाहहोमप्रयोगः । +

आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च । उपलेपादि कुर्वीत हविर्भुक्स्थापनान्तकम् ॥
अग्नेः पश्चात्प्रतिष्ठाप्य दृषदं सोपलामथ । उदकुम्भं निधायाग्नेः प्रागुदीच्यामतः परम् ॥
आज्याधिश्रयणान्तं स्यादन्वाधानादि पूर्ववत् । आज्येन सह लाजानां पर्यग्निकरणं भवेत् ॥
त्रिः प्रोक्षणं भवेत्तेषां केवलोत्पवने सति । इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम् ॥

---

+ कन्यां कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥ गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः । कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् इति । शिष्टश्लोकाः । कन्यादानम्—स्नातां नवाम्बरोपेतां कटकादिविभूषिताम् । अवप्रसृतवसनपरिधानां कुमारिकाम् ॥ उक्तस्वस्त्ययनः स्थित्वा प्राङ्मुखं परिगृह्यताम् । इति क. पुस्तकेऽधिकम् ।

---

१ क. सम्पातहवि य° । २ क. वरं । ३ क गौमुदं । ४ ख. ग. °दृदृशि° ।

वधूदक्षिणहस्तेन समन्वारब्ध एव सन् । कुर्यादाघारपर्यन्तं चौळोक्ताज्याहुतित्रयम् ॥
अत्राऽऽज्यभागौ नैवेष्टाविरयुक्तं पूर्वमेव तु । हुत्वा त्वमर्यमेत्यन्यां प्रजापत इतीतराम् ॥
अथोन्नतमुखीं कुर्याल्लज्जयाऽवनताननाम् । प्राङ्मुख्या उपविष्टायास्तिष्ठन्प्रत्यङ्मुखः स्वयम्
उत्तानेनाथवा नीचेनोत्तानस्य करस्य तु । अङ्गुष्ठादि तु गृह्णीयाद्गृभ्णामीत्येतया ततः
उपस्तृणाति भार्याया अञ्जलौ प्रोक्षते वरः । वधूभ्राताऽथवा भ्रातृस्थानो लाजान्द्विरावपेत्
पश्चावत्ती वरः स्याच्चेदञ्जलौ तांस्त्रिरावपेत् । भ्रातृस्थानः पितृव्यस्य मातुलस्य च यः सुत
मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः । वरः शूर्पगताँल्लाजानवत्तांश्चाभिघारयेत् ॥
पठेच्चार्यमणं मन्त्रमथ पत्नी स्थिता सती । कुर्वन्त्यञ्जलिविच्छेदमङ्गुल्यग्रैर्जुहोति तान् ॥
हविर्भुगम्भःकुम्भौ तु दृषद्वर्जं प्रदक्षिणम् । वधूं परिणयेन्मन्त्रममोऽहमिति वै जपेत् ॥
इममश्मानमारोहेत्येतेन प्राङ्मुखीं वधूम् । उभाभ्यामपि पादाभ्यामारोप्य दृषदं पुनः ॥
उपस्तृत्यादि तद्वत्स्यादृषदारोपणान्तकम् । वरुणं त्विति होमोऽञ्जल्युपस्तृत्यादि पूर्ववत्
अश्मारोहणपर्यन्तं हवनं पूषणं त्विति । प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः स्मरेत् ॥
शूर्पकोणेन शिष्टांस्तानभ्यात्मं जुहुयाद्वरः । अथन्तस्त्वाह हवनं चतुर्थं वरकर्तृकम् ॥
यदि बद्धे शिखे बद्धा देशधर्मादिना ततः । प्र त्वा मुञ्चामि मन्त्रेण दक्षिणां तु विमुञ्चति
प्रेतो मुञ्चामि मन्त्रेण तत्तूरामपि मुञ्चति । शिखे वरस्य बद्धे चेत्तूष्णीमेव विमुञ्चति
अभ्युत्क्रमयतीशान्यां वधूं सप्त पदानि च । सा चाभ्युत्क्रमयेत्पूर्वं दक्षिणं पादमात्मनः॥
इष इत्यादिभिर्मन्त्रैरनुपर्कैर्मवादिना । सप्तमे क्रा(क्र)मिते तत्स्थः शिरसी संनिधाय च
अम्भःकुम्भाम्भसा ते च शिरसी अवसिञ्चति । आज्येन स्विष्टकृद्धोमं कृत्वा शेषं समापयेत्
होमादारभ्य यच्छेत्सा वाचं दृष्ट्वा ध्रुवादिकान् । जीवपत्नीति सा वाचं विसृजेच्च ततः परम्
दंपत्योरतआरभ्य गृहवेशीयहोमतः । ऊर्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रतम्॥ १४॥
अक्षारलवणवर्जितं भोजनं भवेत् । + अधश्च शयनं तद्वद्ब्रह्मचर्यं च वै भवेत्॥

॥ २१ ॥ ( ३४९ ) इति विवाहहोमः ।

## २२ गृहप्रवेशनीयहोमविधिः ।

विवाहानन्तरं गच्छेत्सभार्यः स्वस्य मन्दिरम् । यदि ग्रामान्तरे तास्याखच यानेन गम्यते
पूषा त्वेत्यनया यानं वधूमारोपयेद्वरः । दंपत्योरग्रतोऽजस्रं विवाहाग्निं नयन्ति च ॥
गृहाग्निमिच्छतोरेव स्वग्रामेऽपि भवेद्विधिः । ब्राह्मणी जीवपत्नी या जीवापत्या च तद्गृहे
वसेदनन्तरा रात्री स्वग्रामे नेतदिष्यते । यद्यन्तराऽस्ति नद्यादि नावमारुह्य याति चेत्

+ ताम्बूलस्य निषेधस्य(स्तु) प्रसिद्धः शास्त्रयोगतः । इत्यर्धं क. पुस्तकेऽधिकम् ।

१ घ. वधूः । २ क. °भ्युत्क्रम°। ३क. °रता छं°।

अश्मन्वतीत्यृचोऽर्धेन नावमारोहयेद्वधूम् । अर्धेनोत्तरेणैनां जलादुत्तारयेदथ ॥ ९ ॥
नीयमाना वधूर्बन्धुवियोगाद्यदि रोदिति । जपेज्जीवं रुदन्त्येतामेकग्रामेऽप्ययं विधिः ॥
जपेच्छ्मशानदेशादौ मा विदन्परिपन्थिनः । सुमङ्गलीरृचेक्षेत वासे वासे समीक्षकान् ॥
इह प्रियमृचा भार्यां स्वस्य गेहं प्रवेशयेत् । उपलेपादिकं कृत्वा विवाहाग्निं समिध्य च
प्राग्ग्रीवमृध्वलोमाग्नेः प्रत्यगानडुहाजिनम् । आज्यासादनपर्यन्तमन्वाधानादि पूर्ववत् ॥
चर्मण्यथोपविष्टाया समन्वारब्ध एव सन् । कुर्यादाधारपर्यन्तमिध्मानादि पूर्ववत् ॥
अभिश्चतसृभिश्चाऽऽनः प्रजामित्यादिभिस्त्वथ । पठन्नाज्याहुतीर्हुत्वा स्वाहाकारमृगन्ततः
समञ्जन्त्वनया प्राश्य दधि तस्यै प्रयच्छति । साऽपि प्राश्नाति तत्तूष्णीमथ स्विष्टकृदादिकम्
अथवाऽनक्ति हृदय एतयर्चाऽऽज्यशेषतः॥ १३॥(२९९)इति गृहप्रवेशनीयहोमविधिः।

## २४ व्रतोत्सर्गविधिः ।

बध्वा विवाहवेलायां यत्सा परिहिताम्बरम् । सत्येनोत्तभितासूक्तं वेत्ति यः पाठतोऽर्थतः
तस्मै विप्राय तद्दद्याद्व्रतान्ते धौतमम्बरम् । ब्राह्मणान्भोजयित्वैतान्स्वस्तीत्यथ वाचयेत्
ॐ स्वस्तीति प्रतिब्रूयुर्ब्राह्मणास्ते च पूजिताः। स्वस्त्यादि वाचयित्वाऽऽदौ स्त्रियं तामुपगच्छति
मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा॥४॥ (३६३)इति व्रतोत्सर्गविधिः ।

## २५ औपासनहोमः ।

अथ यस्मिन्विवाहाग्निरुत्पन्नोऽहनि तस्य तु । यत्सायं तत आरभ्य गृह्यं परिचरेत्स्वयम्
आत्मनोऽसंभवे पत्नीपुत्राद्य इति स्थितिः । अन्ये तु मन्यते पत्नीकुमार्योस्तदहोमकम्
तन्त्रं नास्त्यत्र भगवद्वृत्तिकारवचो यथा । ज्वलयेदपराह्णेऽग्निमस्तं याते दिवाकरे ॥
पर्युह्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् । पयःप्रभृतिषु त्वेकं संस्कुर्यादग्निहोत्रवत् ॥
अलंकरोति पुण्यार्थैरनलायतनं ततः । द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ॥
जुहुयादग्नये स्वाहा सुसमिद्धे हुताशने । ध्यात्वा शब्दं चतुर्थ्यन्तं प्रजापतय इत्यथ॥
स्वाहाकारेण जुहुयात्ततः परिसमूहनम् । पर्युक्षणं च कुर्वीत प्रातरप्येवमिष्यते ॥ ७॥
व्युष्टाया ज्वलयेदेनं सायं होमः कृतः पुरा । पयसाऽन्येन वा प्रातस्तेनैवेत्याह वृत्तिकृत्
पूर्वमन्त्रस्तु सूर्याय स्वाहेत्यन्यत्समं भवेत् ॥ ९ ॥ ( ३७२ ) इत्यौपासनहोमः ।

## २६ देवयज्ञः ।

गृहस्थो वैश्वदेवाख्यं कर्म प्रारभते दिवा । तन्त्रं नास्त्यत्र भगवद्वृत्तिकारवचो यथा ॥
औपासनाग्निमन्यं वा समिध्याथ हविर्भुजम् । पर्युह्य परिषिच्याग्निमलंकृत्य च पूर्ववत् ॥
हविष्यं पक्वमादद्यादधिश्रित्यानले च तत् । प्रोक्ष्योद्वास्य घृताभ्यक्तं हृदि सव्यं निधाय च

१ घ. गेहे । २ क. कृत्वाऽऽज्यभागम । ३ क. °या चोऽभो परिहिताम्बरः । ४ क. यति ।

हुत्वा हस्तेन सूर्यायेत्यादिभिर्दशभिस्ततः । प्रजापतिपदस्योक्तिर्वैश्वदेवे न तु स्मृतिः ॥
पर्युक्षणोक्षणे कुर्याद्देवयज्ञोऽयमीरितः ॥ ९ ॥ ( ३७७ ) इति देवयज्ञः ।

## २७ भूतयज्ञः ।

भूतयज्ञं प्रकुर्वीत अग्नेरुत्तरदेशतः । एतैर्भुवि बलीन्दत्त्वा प्राक्संस्थांश्च निरन्तरान् ॥ १ ॥
मुक्त्वाऽन्तरालं प्राक्संस्थानद्भ्य इत्यादिभिर्हरेत् । इहापि भवति स्वाहाकारो न पितृयज्ञके
अद्भ्यो हुताद्बलेः प्रत्यगिन्द्रायेति बलिं हरेत् । उदगैन्द्राद्बलेरिन्द्रपुरुषेभ्यो बलिं हरेत् ॥
यमायेत्यन्तरालस्य हरेद्दक्षिणतो बलिम् । याम्यादुदग्वाऽथ यमपुरुषेभ्यो बलिं हरेत् ॥
प्राच्यां ब्रह्मबलेर्हुत्वा वरुणायेति मन्त्रतः । अस्मादुदक्तु वरुणपुरुषेभ्यो बलिं हरेत् ॥
सोमायेत्यन्तरालस्य हरेदुत्तरतो बलिम् । सौम्याद्बलेरुदक्सोमपुरुषेभ्यो बलिं हरेत् ॥
अथान्तरत्वाह् वास्त्वन्तैर्बलीन्दत्त्वा निरन्तरान् । मुक्त्वाऽन्तरालमिन्द्रादिदिग्देवाना बली-
न्हरेत् ॥ ७ ॥

ऐन्द्रादिबलितः प्राच्याः प्राच्यां स्यात्पौरुषो बलिः । अन्तराले बलीन्दत्त्वा शिष्टैर्मन्त्रैरतः
परम् । रक्षोभ्य इति सर्वासा बलिमुत्तरतो हरेत् ॥ ९ ॥ (३८९) इति भूतयज्ञः ।

## २८ पितृयज्ञः ।

भूतयज्ञोऽयमुदितः प्राचीनावीत्यतः परम् । स्वधा पितृभ्य इत्युक्त्वा दक्षिणस्यां तु ॥
निर्वपेत् ॥ १ ॥

पितृयज्ञोऽयमुदितो नक्तं चैतत्रयं भवेत् । इति पितृयज्ञः ॥ सूर्यायेति पदस्थान ईरयेदग्न-
येपदम् ॥ २ ॥

दिवाचारिभ्य इत्यत्र नक्तंचारिभ्य इष्यते । कुर्वीत स्नातकश्चेदं पृथक्पाकी भवेद्यदि ॥
( + एतान्पञ्च महायज्ञान्कुर्यादहरहः शुचिः ॥ ४ ॥ (३९०) इति पञ्चयज्ञाः ।

## २९ ब्रह्मयज्ञः ।

प्रामात्प्राच्यामुदीच्यां वा या वा दिक्स्यादनिन्दिता । अपोऽवगाह्य तु स्नायादुपवीत्येव
स द्विजः ॥ १ ॥

धौतशुक्लाम्बरः कुर्यात्कर्माङ्गाचमनं ततः । दर्भान्महच्छुचौ देशे प्रागग्रांस्तान्स्तृणात्यथ ॥
दर्भेषूपविशेत्कर्मण्यत्र प्राङ्मुख एव सन् । कृत्वोपस्थं करे सव्य उत्ताने प्राग्दिक्स्थिते ॥
पवित्रे स्थापयेदुक्ते प्रागग्रे दक्षिणेन तु । न्यग्यं प्रागङ्गुलि तेन संदध्याद्दक्षिणं करम् ॥
ऊर्ध्वं तिर्यगपरताद्वा नेक्षेत यदि चाऽक्षिणी । संमील्य येन चाऽऽत्मा तु समाहितमना ॥
भवेत् ॥ ९ ॥

---

+ कंसस्थितग्रन्थः क. पुस्तके न ।

---

१ क. 'स्पष्ट न' । २ ख. 'पश्यक' ।

सूक्ताद्यन्यतमं पूर्वमभिसंधाय शक्तितः । ॐपूर्वा व्याहृतीस्तिस्रः समस्तास्तु सकृद्वदेत्
पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेदथ । पूर्वाभिसंहितं यावत्तदधीत्य समाहितः ॥
नमो ब्रह्मण इत्येतां त्रिरुक्त्वा प्रणवं वदेत् । प्रणवाद्येतदन्तं स्यात्मध्यमेन स्वरेण तु॥
अधीते मनसा ग्रामे ब्रह्मयज्ञं करोति चेत् । अपां समीपमागत्य तर्पयेदथ देवताः ॥
त्रिंशद्भिरेकेनोनैस्तु द्वादशैश्च भवेत्तथा । त्रयोविंशतिवाक्यैस्तु देवर्षीश्च पितॄन्क्रमात् ॥
एवमन्तानि तृप्यन्त्वित्यन्तैस्तु प्रतिमन्त्रकम् । सिद्धेत्प्रजापतिस्तृप्यत्वित्यपो देवतर्पितः
यावत्तृप्तिर्यथालिङ्गं मन्त्रान्तेषु प्रयुज्यते । मन्त्रैः शतर्चिनस्तृप्यन्त्वित्यादिभिरतः परम्
प्रतिमन्त्रं निवीती तु तर्पयेद्वपितीर्थतः । प्राचीनावीत्यथेदानीं पितृतीर्थेन तर्पयेत् ॥
सुमन्त्वित्यादिभिर्मन्त्रैः प्रतिमन्त्रं च पूर्ववत् । द्वितीयान्तेषु मन्त्रेषु तर्पयामिपदं वदेत्
अयं तु ब्रह्मयज्ञोऽस्य भिक्षादानादि दक्षिणा । कुर्यात्तिष्ठञ्शयानो वा ब्रह्मयज्ञसमं भवेत्
देशोऽशुचिः स्वयं वा स्यात्तदानध्याय इष्यते । प्रागूर्ध्वं वा भवेदेतद्वैश्वदेवाख्यकर्मणः
॥ १६ ॥ (४०६) इति ब्रह्मयज्ञः ।

## ३० मनुष्ययज्ञः ।

उर्ध्वमेव नृयज्ञः स्यात्स चेष्टोऽतिथिपूजनम् । एतान्पञ्च महायज्ञान्कुर्यादहरहः शुचिः
॥ १ ॥ (४०७) इति मनुष्ययज्ञः ।

## ३१ संध्योपासनम् ।

अन्वचाहरहःकृत्यं संध्योपासनमुच्यते । ग्रामाद्बहिरपां तीरे उपवीत्येव स द्विजः॥ १॥
आचम्य मार्जनाद्यन्यत्स्मृत्युक्तं च करोत्यथ । अर्धास्तमित आदित्ये पश्चिमस्य च उत्तरः
प्रागस्तन्मुख आसीनः सावित्रीं वाग्यतो जपेत् । आतारकोदयादेवं प्रातः कर्मेदमिष्यते
अर्धास्तमितनक्षत्रमन्तरिक्षं यदा ततः । आरभ्य प्राङ्मुखस्तिष्ठञ्जपेदासूर्यदर्शनात्
॥ ४ ॥ (४११) इति संध्योपासनम् ।

## ३२ उपाकर्म ।

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । तन्मासे हस्तयुक्तायां पञ्चम्या वा तदिष्यते
अवृद्ध्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन करोति तत्
(+ कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते) । आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत् ॥
आज्येन दधिसक्तूनां पर्यग्निकरणं भवेत् । उत्पूतमात्रमाज्यं चेत्तेषां त्रिः प्रोक्षणं भवेत्
इध्माभिघारणान्तं स्यादाज्यस्योद्वासनादिकम् । अन्वारब्धोऽधुना शिष्यैः स्वयमेव न सन्ति चेत्

+ कंसस्थितं कारिकार्धं क. पुस्तके नास्ति ।

१ ख. °दन्वय । २ ख. श्रावणे ।

प्रकुर्वीताऽऽज्यभागान्तमिध्माधानादि पूर्ववत् । इहाऽऽज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेऽपि तौ ॥ ६ ॥

हुत्वाऽऽज्यं नवभिर्मन्त्रैः सावित्र्याद्यैरतःपरम् । अथावदानधर्मेण तान्सक्तून्दधिसंयुतान् ॥
हुत्वाऽग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात् । शाकल्यानां समानीव इत्यृचाऽन्त्याऽऽहुतिर्भवेत् ॥ ८ ॥

बाष्कलानां तु तच्छंयोरित्यृचाऽन्त्याऽऽहुतिर्भवेत् । अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च ॥
दधिसक्तूंस्त्वयं शिष्याः प्राश्याऽऽचम्य ततः परम् । परिस्तरणदर्भैस्तैरन्तर्दधानि तेऽञ्जलीन् ॥
अन्येन सेचयित्वाऽप्स्ताभिः कुर्वन्ति मार्जनम् । पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च ॥
आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च । प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ ॥
सव्याहृतिं जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् । त्रिरभ्यसेयुरोंकारं व्याहृतीश्चात्र कर्मणि ॥
अग्निमीळ इदं सूक्तमनुवाकमथापि वा । आरभेरन्नृचं चापि अध्याप्यान्वाचयेद्गुरुः ॥
प्रायश्चित्तादि सकलं होमशेषं समापयेत् । अनध्यायान्स्मृतौ सिद्धान्परिहृत्य त्वधीयते ॥
[3]यैस्त्वपूर्वमधीतेऽसौ प्रारभेत शुभेऽहनि । समावृत्तोऽप्यधीयानो मधुमांसादि वर्जयेत् ॥
ऋतुस्नातोपगमनं समावृत्तस्य मन्वते । अत आरभ्य षण्मासान्नियमेन त्वधीयते ॥
( +पश्चादङ्गानि षण्मासान्शिष्यमध्यापयेद्गुरुः ॥ १८ ॥ ( ४२९ ) इत्युपाकर्म ।

## २२ उत्सर्जनम् ।

अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते । ग्रामाद्बहिर्विविक्ते स्यादुपलेपादि पूर्ववत् ॥
गृह्यवत्कं समीपेऽग्नेर्निधायाऽऽज्यमधिश्रयेत् । संस्कार्य सक्तुवच्चान्नं शान्तिकर्मणि चात्र तु ॥
तत्राऽऽज्याहुतिपर्यन्तमुपाकरणवच्चरेत् । जुहोति गृहसिद्धान्नमुपाकरणवत्ततः ॥ २ ॥
अस्मिन्स्विष्टकृद्धोमो न स्तः प्राशनमार्जने । वेदाद्यारम्भणं कृत्वा कर्म शिष्टं समापयेत् ॥
अथ तीरमपां गत्वा तेऽवगाह्य ततो जलम् । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥
सावित्र्याद्या नवाग्न्याद्या देवतास्तर्पयन्त्यथ । सावित्रीं तर्पयाम्यग्निं तर्पयामीति तर्पयेत् ॥
अथान्तरस्त्वग्निमीळ दिमन्त्रैस्तर्पणमब्रवीत् । ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्यादिहापि तत् ॥
अत आरभ्य षण्मासान्पक्षाणि त्वधीयते । शुक्ले वेदास्त्वधीयीरन्कृष्णेऽङ्गानीति केचन ॥ वर्षद्वयमिदं केचिद्धोविंशमासौ प्रमन्वते ॥ ८ ॥ ( ४३७ ) इत्युत्सर्जनम् ।

इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु प्रथमोऽध्यायः ॥ १ ॥

---

+ ऐतदर्धं ख. पुस्तके नास्ति ।

---

१ क ड । २ ख. आर° । ३ घ. चार° ।

अथ द्वितीयोऽध्यायः ।

---

## १ श्रवणाकर्म ।

ध्रुवेऽथ श्रवणाकर्म सर्पबल्याख्यकर्म च । कुर्वन्ति श्रावणे मासि पौर्णमास्यामिदं द्वयम् पूरयेदह्नि कलशं नवं यावकसक्तुभिः । निधाय तं नवे शिक्ये दर्वीं वैकङ्कतीमपि ॥ प्राच्यां दिशि शुचिं देशं बल्यर्थं परिगृह्य च । यवधाना विभज्यैकं भागमभ्यज्य सर्पिषा आदिश्येऽस्तमिते कुर्यादन्वाधानादि पूर्ववत् । हविर्द्वयस्य तूष्णीं स्तो निर्वापप्रोक्षणे इह पुरोवदवघातादि स्याद्भिमज्य च तण्डुलान् । तमेकेन पुरोडाशमन्येन श्रपयेच्चरुम् ॥ एकस्मिंस्तु पुरोडाशं कपाले श्रपयेदिह । आज्येन सह धानानां पर्यग्निकरणं भवेत् ॥ आज्यस्य केवलोत्पूतौ तासां त्रिः प्रोक्षणं भवेत् । ×(चरुमासादयेत्पूर्वं पुरोडाशमतः परम्) बर्हिष्याज्यान्तरे कृत्स्नं पुरोडाशं निमज्जयेत् । प्रकाशायुष्मयथवा पुरोडाशं निमज्जयेत् अथ कृत्वाऽऽज्यभागान्तं चर्वाहुतिचतुष्टयम् । हुत्वा चतुष्टयेनाग्ने नयेति प्रत्यृचं ततः॥ उपस्तीर्याथ सव्येन दक्षिणे प्रोक्षिते करे । सव्येनैककपालं तमोप्य कृत्स्नमखण्डितम् ॥ उपरिष्टात्तु सव्येन कुर्याद्द्विरभिघारणम् । अच्युताधेति मन्त्रेण दक्षिणेन जुहोत्यथ ॥ यस्मिन्नाज्ये निमग्नोऽयं स्रुवेणैव जुहोति तत् । उपर्येककपालस्य मानो अग्ने इति स्त्रुचा अथोपस्तरणाद्यन्यः करोति गृहिणोऽञ्जलौ । स तेन जुहुयाद्दत्त्वा धानाः शं नो भवन्त्विति याश्तु धाना अनभ्यक्ता पुत्रादिभ्यो ददाति ताः । अथ स्विष्टकृतं हुत्वा चरुधानैकदेशतः परिषेचनपर्यन्तं होमशेषं समापयेत् । इत्युक्तं श्रवणाकर्म सर्पबल्यामुख्यच्यते ॥ १९ ॥

( ४९१ ) इति श्रवणाकर्म ।

## २ सर्पबलिः ।

अथ प्रपूरयेद्दर्वीं सक्तुभिः कलशस्थितैः । गृहात्प्रागुपनिष्क्रम्य शुचौ देशेऽह्नि कल्पिते अथ आसिच्य तानोप्य सर्पदेवेति मन्त्रतः । नान्तरा बलिभारमानं व्यवेयादिह कश्चन ॥ व्यवायस्य निषेधोऽयमुक्त आपरिदानतः । ये सर्पा इति मन्त्रेण नमस्कुर्यात्कृताञ्जलिः ॥ बलिं प्रदक्षिणं कृत्वा पश्चादस्योपविश्य च । सर्पोऽसीत्यादिकं मन्त्रं ददाम्यन्तं सकृद्वदेत् ध्रुवाम् ते परिददाम्येतमुक्त्वा निवेदयेत् । ज्येष्ठानुक्रमतः पुत्रानप्रत्तदुहितॄंस्तथा ॥ ६ ॥ ततः पत्नी ध्रुवामुं त इत्याद्यावर्ततेऽत्र तु । वाच्यं पुत्रादिनामात्र द्वितीयान्तममुं पदे ॥

---

× कंसगतमर्धं क. पुस्तके न दृश्यते ।

ध्रुवमास्मेति चाऽऽस्थानं ततः परिददाति सः। अन्यः कुर्वीत चेदाह गृहिणो नाम मांपदे
सायं प्रातश्च मन्त्रेण तेनाप्रत्यवरोहणात्। बलिमेव हरेन्नेह नमस्कारादिरिष्यते ॥८॥
सायं प्रातश्च यावन्तः काष्ठाः स्युस्तद्दिनादधः। तावतो वा बलींस्तस्मिन्नेवाहनि हरेदथ
॥ ९ ॥ (४११) इति सर्पबलिः।

## ३ आश्वयुजीकर्म।

कुर्वीताऽऽश्वयुजीकर्म तदिदानीं मयोच्यते। स्यादाश्वयुजमासस्य पौर्णमास्यां तु कर्म तत्
निवेशानमलं कुर्यात्कुड्यानां लेपनं भवेत्। उपर्याच्छादनं चैषां समां भूमिं करोत्यथ॥
सर्वे गृह्या विशेषेण स्नान्ति शुक्लाम्बरास्ततः। औपासने हुते प्रातरन्वाधानादि पूर्ववत्
उक्त्वा पशुपतीत्येतच्चतुर्थ्यन्तं ततः परम्। त्वा जुष्टं निर्वपामीति निर्वापप्रोक्षणे तथा
प्रोक्षामीति विशेषस्तु प्रोक्षणेऽन्यत्समं भवेत्। चरुश्रपणपर्यन्तमवघातादि पूर्ववत् ॥
कुर्यात्पृषातकं नाम हविरन्यत्तदुच्यते। पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकम्
अस्यापि च सहाऽऽज्येन पर्यग्निकरणं भवेत्। आज्यस्य केवलोत्पूतौ तस्य त्रिः प्रोक्षणं भवेत्
इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम्। कृत्वाऽऽज्यभागपर्यन्तमन्वारब्धः सुतादिभिः
पशुपतये शिवाय शंकरायेति नामतः। पृषातकाय स्वाहेति मन्त्रेण जुहुयाच्चरुम् ॥
अथोपस्तरणाद्यन्यः करोति गृहिणोऽञ्जलौ। द्रवत्वतः स्रुवेणैव पृषातकमवद्यति ॥१०॥
जुहोत्यञ्जलिनाऽप्येतदूनं मे पूर्यतामिति। हविर्द्व्यंशतः स्विष्टकृतं हुत्वा समापयेत्
॥ ११ ॥ (४७२) इत्याश्वयुजीकर्म।

## ४ आग्रयणम्।

शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते। पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥१॥
निर्वापप्रोक्षणे तूष्णीं भवेतामत्र कर्मणि। कृत्वाऽऽज्यभागपर्यन्तमवघातादि पूर्ववत् ॥
तिस्रश्चर्वाहुतीर्हुत्वा सजूरित्यादिभिस्त्रिभिः। ततः स्विष्टकृतं हुत्वा कुर्वीत प्राशनं त्विति
चरुशेषस्यैकदेशं सव्ये पाणौ निधाय च। प्रजापतादिमन्त्रेण दक्षिणेनाभिमृश्य तम् ॥
भद्रान्न इति तु प्राश्याऽऽचम्याथो नाभिमात्मनः। आलभेतोपविष्टस्तु तत्रैवामोऽसिमन्त्रतः
भक्ष्यं तु हविःशेषं पत्नी प्राश्नात्यमन्त्रकम्। परिषेचनपर्यन्तं होमशेषं समापयेत् ॥
एतदाग्रयणं कुर्यात्रेतायां स्वाहितानलः ॥ ७ ॥ (४७९) इत्याग्रयणम्।

---

१ क. तथा। २ ख. °नले।

५ प्रत्यवरोहणम् ॥

एवमाग्रयणं प्रोक्तं वक्ष्ये प्रत्यवरोहणम् । मार्गशीर्षस्य मासस्य पौर्णमास्यां तदिष्यते॥
पूर्वेद्युर्वा भवेत्तद्वदलंकृतस्य निवेशनम् । मानावसतमिते कुर्यादन्वाधानादि पूर्ववत् ॥२॥
निर्वापप्रोक्षणे तूष्णीं पयसि श्रपयेच्चरुम् । कृत्वाऽऽज्यभागपर्यन्तमन्वारब्धः सुतादिभिः
अपश्वेतेति मन्त्राभ्यां जुहुयात्पायसाहुती । जपेदमयमित्यादि ईक्षमाणो हविर्भुजम् ॥
उक्त्वा शिवोन इत्यादि हेमन्तेति पदं स्मरेत् । स्वस्तरं स्वयमास्तीर्य पश्चादग्नेस्ततः परम्
तत्रोपविशति स्योनापृथिवीति जपेदृचम् । एतत्प्रभृति मन्त्रज्ञा जपेयुः सूनवोऽपि च ॥
शयीत तत्र सामात्यः प्राक्शिरा उदगाननः । गृहिणोऽनन्तरं यो यो ज्येष्ठस्तद्वच्छयीत सः
यथावकाशमथवा शेरते तद्वदेव ते । उत्थायर्चमतो देवाः प्राङ्मुखास्त्रिर्जपन्त्यथ ॥
ऋचोऽस्याः प्रथमं पादं जपेयुर्दक्षिणामुखाः । प्रत्यङ्मुखा द्वितीयं तु तृतीयमुदगाननाः
ततोऽत्र स्विष्टकृद्वर्जं होमशेषं समापयेत् । यथाशय्यं शयित्वा ते संगता उदिते रवौ
जपेयुः सूर्यसूक्तानि तद्वत्स्वस्त्ययनान्यथ । उदुत्यं नव षट् चित्रं देवानामुदगादिति ॥
नमो मित्रस्य सूक्तं च सूर्यो न इति चापरम् । उक्तानि सौरसूक्तानि वक्ष्ये स्वस्त्ययनानि च ॥
आ नो भद्रास्तथा स्वस्ति नो मिमीता परावतः । संस्कृतेन गृहासेन ब्राह्मणान्भोजयेदथ ॥
ॐ स्वस्ति ब्रूत इत्युक्त्वा ॐ स्वस्तीति ब्रुवन्ति ते (४९२) इति प्रत्यवरोहणम् ।

६ पिण्डपितृयज्ञः ।

एकाग्निरपि कुर्वीत पितृयज्ञः स उच्यते । अथ दर्शेऽपराह्णे तु प्रज्वाल्यौपासनं ततः॥
प्राग्दक्षिणाग्रकैर्दर्भैः परिस्तीर्य हविर्भुजम् । कर्मसाधनमत्रेष्टं सर्वं प्राग्दक्षिणामुखम् ॥
दर्भानास्तीर्य वायव्यामैशान्यां वा हविर्भुजः । स्थाल्यादीनेकैकमासाद्य स्थालीशूर्पे प्रगृह्य च
व्रीहिमच्छकटं वह्नेर्दक्षिणस्यामवस्थितम् । आरुह्य व्रीहिभिः पूर्णां स्थालीं शूर्पे प्रगृह्य च॥
शकटारोहणं चेह भवेद्दक्षिणभागतः । शूर्पस्थाञ्छकटे प्रास्य कृष्णाजिन उलूखले ॥
चरुस्थालीस्थितान्व्रीहीनवहन्याद्वधूस्ततः । सकृत्फलीकृतानत्र सकृत्प्रक्षाल्य तण्डुलान्
श्रपयित्वोल्मुकं नीत्वा ये रूपेत्यपरां दिशम् । अतिप्रणीत एषोऽग्निस्तं परिस्तीर्य पूर्ववत्
अथोगस्मालिखेत्स्फ्येन लेखामपहता इति । अभ्युक्ष्य तामवस्तीर्य सकृदाच्छिन्नबर्हिषा॥
अनुत्पूतं विलीनाज्यं ध्रुवाया सिच्यतेऽधुना । तत्पूतं नवनीतं वाऽऽसाद्य दक्षिणतो ध्रुवाम्
अभिधार्य चरुं प्राग्वेणोदगुद्वास्य पश्चिमे । आसाद्य चाञ्जनादीनि दक्षिणस्यां हविर्भुजः

---

१ क °त्यादिमीष्ट । २ क °नानि च । ३ ख. निग्रह ।

प्राचीनावीत्यथेदानीमाधायेध्मं हविर्भुजि । अथावदानधर्मेण गृहीत्वा मेक्षणेन तु ॥
पूर्वाहुतिद्वयं हुत्वा सोमायेति द्वयेन वै । स्वाहाकारेण होमश्चेदुपवीती भवेदिह ॥
मेक्षणानुप्रहरयन्तं मन्त्रयोर्व्यत्ययस्तथा । प्रास्याग्नौ मेक्षणं चापो निनयेत्पितृतीर्थतः ॥
लेखायां पिण्डदेशेषु शुन्धन्तामिति तु त्रिभिः । तत्र पिण्डत्रयं दद्यात्प्राचीनेन पाणिना
पित्रादित्रिभ्य एतत्ते पित्रो ये चेति मन्त्रतः । नामानि चेन्न जानीयात्ततेत्यादि वदेत्क्रमात्
स्वाहान्तेनोक्तमन्त्रेण पिण्डो जीवाय हूयताम् । निवृतानत्र पितर इति ताननुमन्त्र्य तु
अप्रदक्षिणमावृत्य चोदक्प्राणान्नियम्य च । प्रत्यावृत्यानुमन्त्र्यामीमदन्तेत्यादिमन्त्रतः ॥
चरुशेषमवघ्राय निनयेत्पूर्ववज्जलम् । अभ्यङ्क्ष्वाङ्क्ष्वेतिनामादिमन्त्राभ्यां तैलमञ्जनम् ॥
दद्याद्दशामथैतद्वदिति पिण्डेष्वतः परम् । नमो व इत्युपस्थाय मनोन्वेति तृचेन च ।
परेतनेति मन्त्रेण पिण्डांस्तान्वै प्रवाहयेत् । औपासनान्तिकं गत्वा जपेदग्ने तमेत्यृचम्
यदन्तरिक्षमित्येतां तत्रस्थ एव जपेदृचम् । गार्हपत्यपदस्येह लोपं न्यायविदो जगुः ॥
वीरं मे दत्तमन्त्रेण पिण्डमादाय मध्यमम् । तं पिण्डं प्राशयेत्पत्नीमाधत्तेत्यादिमन्त्रतः
अप्सु वाऽतिप्रणीतेऽग्नावितरौ प्रक्षिपेदथ । सादितान्यथ यानीह नवयज्ञायुधानि तु ॥
द्वे द्वे एवोत्सृजेद्यानि शिष्टं सार्धं तृणेन तु ।.२४॥ (११७) इति पिण्डपितृयज्ञः ।

## ७ दर्शश्राद्धम् ।

कुर्वीत पार्वणश्राद्धं दर्शे तदभिधीयते । कामयोगेन चाऽन्यस्यां तिथावित्यपरेऽब्रुवन् ।
ब्राह्मणान्वेदसंपन्नान्दान्ताञ्शान्तानलोलुपान् । अक्रोधनानरोगांश्च पाखण्डकुत्सनैःस्पृहान्
एवंविधद्विजाभावे सतैकेन गुणेन वा । युक्ताश्निमन्त्रयीताहींनसद्गुणविवर्जितान् ॥ १ ॥
विहितानामविद्यातृप्तिपिद्धानां च वर्जकान् । शुचीन्निमन्त्र्य दैवे द्वौ त्रीन्विप्रान्पितृकर्मणि
दैवे पित्र्येऽप्येकैकं सपिण्डीकरणं विना । सायमौपासनं हुत्वा सायं भुक्तवतो द्विजान् ॥
उपगम्य स्वयं शिष्यः सुतो वा श्रद्धयाऽन्वितः । श्राद्धं श्वो भविता तत्र भवद्भिर्दीयतां क्षणः
एवं निमन्त्र्य नियतो मनोवाक्कायकर्मभिः । भोक्तृभोजयितृश्चैव ब्रह्मचर्यमतः परम् ॥
कृताह्निकः परेद्युस्ते(श्च) प्रविश्याग्निवेदमनु । ततः संकल्प्य विधिवत्प्रारभेत्सुसमाहितः॥
कृत्वेध्माधानपर्यन्तं पितृयज्ञमथ द्विजान् । स्नातान्कृतपच्छौचानाचान्तानुपवेशयेत् ॥
द्विराचामन्ति ते विप्राः कर्त्रा प्रक्षालिताङ्घ्रयः। द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रानुदगाननान्
ध्यायन्नमेते पितर इति तानुपवेशयेत् । अर्घ्यविस्तोपविष्टौ तु दैवे स्मृत्युक्तमार्गतः ॥
ये यज्ञाः कथिताः पिण्डयज्ञे जीवत्पितृकान्प्रति । श्राद्धेऽपि वेदितव्यास्ते यज्ञा इत्याह धूर्तिकृत्
प्राचीनावीत्यथो दत्वा पितृकर्माप्रदक्षिणम् । दुर्भान्द्विगुणभुग्नांस्तु दत्त्वैषामासनेष्वथ ॥

---

१ क. विद्रुः । २ क. "पत्नी आप" ।

अपो दत्त्वाऽथ दर्भेषु पात्राण्यासादयेत्क्रमात्। तैजसेऽश्ममये पात्रे मृन्मयेऽन्तर्हिते कुशैः
एकद्रव्येषु चाग्नेयीदिक्संस्थेषु च तेष्वथ। निषिञ्चेदपोऽनुमन्त्र्याः शं नो देवीरभिष्टये ॥
अनुमन्त्रः सकृत्कार्यस्तिलोऽसीत्यावपेत्तिलान्। आवृत्तिः प्रतिपात्रं स्यान्मन्त्रयोर्हस्तु नेष्यते
गन्धपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ। स्वधाऽर्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत् ॥
अन्या आपः प्रदातव्या विप्रपाणिष्वतः परम्। ऊर्ध्वं सशेषमादाय दक्षिणेन तु पाणिना
सव्यहस्तगृहीतेन निनयेत्पितृतीर्थतः। त्रिभिः पितरिदं तेऽर्घ्यमिति पाणिष्वनुक्रमात् ॥
दत्त्वा दत्त्वा निनीतास्ता या दिव्यास्तानु(नि)मन्त्र्य तु। पितृपात्रे प्रसिच्याद्यं शेषं पात्रद्वये
स्थितम् ॥ २० ॥

अनक्ति पुत्रकामस्तैर्मुखमेकीकृतैर्जलैः। न्युब्जं पितृपात्रं स्यादासमाप्तेस्तु कर्मणः
उत्तानं वा तृतीयेन पिहितं तत्र चालयेत्। प्राचीनावीत्यथेदानीं गन्धमाल्यं सधूपकम्
दीपं वस्त्रं यथाशक्ति देयं वार्यन्तराऽन्तरा। पितृयज्ञचरोरन्नमुद्धृत्याभ्यज्य सर्पिषा ॥
अग्नौ करिष्य इत्येतान्पृष्ट्वोक्तः क्रियतामिति। मेक्षणानुप्रहृत्यन्तं पितृयज्ञं करोत्यथ ॥
अन्नेषु परिविष्टेषु हुतशेषं ददात्यथ। उद्दिश्य चान्नं विश्वेभ्यः पितृभ्यः श्रद्धया ततः ॥
भुञ्जानाञ्श्रावयेद्विप्रान्रक्षोघ्नान्पितृलिङ्गकान्। पुराणानि पवित्राणि ऋषिगीतां पितृस्तुतिम्
अन्नं भोजनपर्याप्तं देयं किंचित्ततोऽधिकम्। तृप्तेषु श्रावयेत्तिस्रो मधुवाता ऋतायते ॥
अक्षन्निति च तान्विप्रान्संपन्नमिति पृच्छति। तेऽपि संपन्नमित्येवं प्रतिब्रूयुरतः परम् ॥
यथोद्दिष्टं ततः किंचित्किंचित्पिण्डार्थमुद्धरेत्। पितृयज्ञचरोरन्नमुद्धृतं प्रक्षिपेदथ ॥
अन्नं प्रकिरणार्थं च सर्वस्मादन्नमुद्धरेत्। ब्राह्मणेभ्यस्ततः शिष्टं सर्वमन्नं निवेदयेत् ॥
तेऽपि स्वीकुर्युरिष्टं चेदनुजानन्ति वा पुनः। पिण्डदानमनाचान्तेष्वाचान्तेष्वथवा भवेत् ॥
कुम्भोनिनयनाद्यन्तं पितृयज्ञं समापयेत्। अन्नं प्रकिरणार्थाय तदानीय जलप्लुतम् ॥
आचान्तानां समीपे तु स्वग्रतः प्रकिरेद्भुवि। उत्तानं प्रथमं पात्रं कृत्वा यज्ञोपवीत्यथ ॥
दत्त्वा च दक्षिणां शक्त्या विसृजेद्दो स्वधोच्यताम्। ॐ स्वधेति प्रतिब्रूयुर्याचेतेमान्वरान्पितॄन्
दक्षिणां दिशमाकाङ्क्षन्नितो याचतः शुचिः। दातारो नोऽभिवर्धन्तां वेदाः संततिरेव नः ॥
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति। ब्रह्मचारी भवेत्तस्यां रजन्यां ब्राह्मणैः सह
॥ २१ ॥ ( ५५४ ) इति दर्शश्राद्धम्।

## ८ पूर्वेद्युःश्राद्धम्।

हेमन्तशिशिरर्त्वोः कृष्णपक्षचतुष्टये। अष्टमीष्वथवैकस्यामष्टम्यामष्टका भवेत् ॥
प्रत्यष्टकं च पूर्वेद्युः श्राद्धं कुर्यात्तदुच्यते। कार्यं यत्कर्म सप्तम्यां तत्कुर्यात्पितृयज्ञवत् ॥

---

१ क. °दिव्यश्चा निम° । २ ख. °यार्थे च । ३ क.च।

ओदनं कृसरं चैव पायसं श्रपयेदिह। गृहसिद्धादुपादेया अपूपाञ्जुहुयाद्यदि ॥ ३ ॥
पूर्वाह्णानां यथासंख्यं द्रव्याणां चेति केचन। ओदनास्तिलमिश्रस्तु कृसरः परिकीर्त्यते ॥
तिलकल्कं विनिक्षिप्य शृतो वा कृसरो भवेत्। कृत्वेध्माधानपर्यन्तं पितृयज्ञविधानतः ॥
वासःप्रदानपर्यन्तं श्राद्धं पार्वणवद्भवेत्। ओदनाद्यन्नमुद्धृत्य पृष्ट्वोक्तः पूर्ववद्द्विजैः ॥
सोमायेत्येतयोः स्थाने हुत्वाऽष्टाभिरुदीरताम्। अन्नदानादि तद्वत्स्यादुक्तः संपन्नमित्यथ
उद्धृत्य भुक्तशेषान्नं निदधाति चरुत्रये। स्थाल्यपात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत्
॥ ८ ॥ ( ११२ ) इति सप्तमीश्राद्धम्।

## ९ अष्टमीश्राद्धम्।

पूर्वेद्युः कर्म कथितमष्टकाकर्म कथ्यते। अष्टम्यां पशुना कार्याः स्थालीपाकेन वाऽष्टकाः
स्थालीपाकप्रयोगस्तु तत्र तावन्मयोच्यते। पूर्णपात्रनिधानान्तमन्वाधानादि पूर्ववत् ॥
मन्त्रोक्तदेवताभ्यस्तु तूष्णीमेवाथ निर्वपेत्। चतुरश्चतुरो मुष्टीन्प्रोक्षणं च तथा भवेत् ॥
सहैव श्रपयेदन्नं नास्ति व्युद्धरणं तथा। आदिष्टमन्त्रहोमेषु सर्वत्रैवं प्रतीयताम् ॥४॥
कृत्वाऽऽज्यभागपर्यन्तं जुहुयात्सप्तभिश्चरुम्। अग्ने नयेत्यृचा पञ्च ग्रीष्म इत्यादयस्तथा
अविज्ञातस्वरो मन्त्रः सौत्र एकश्रुतिर्भवेत्। ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत्
अथाऽऽच्छादनपर्यन्तं श्राद्धं पार्वणवद्भवेत्। उद्धृत्य भोजनार्थान्नाद्द्वे द्वे हुत्वाऽर्थ पाणिषु
सोमायेति तु मन्त्राभ्यां मेक्षणेन करेण वा। एकैकामाहुतिं केचिद्द्विगृह्येव प्रजुह्वति ॥
प्राशितेषु हुतेष्वन्नेष्वन्यदन्नं ददात्यथ। उदीच्याः आहुरत्रैवं न प्राश्नीयात्करे हुतम्
निधाय तद्धुतं पात्रेष्वाचम्योपविशेदिति। संपन्नवचनान्तं स्याच्छेषं पिण्डार्थमुद्धरेत् ॥
ब्राह्मणानां समीपे तु पिण्डनिर्वपणं भवेत्। न कार्यमग्नि प्रत्येथादिस्यत्रात्र तु कर्मणि ॥
प्राशयेन्मध्यमं पिण्डं श्राद्धशेषं समापयेत्। अन्वष्टक्यं च पूर्वेद्युर्मासि मासि च पार्वणम्
चतुर्ष्वेष्वग्निहोमः स्यात्पिण्डांश्चाग्निसमीपतः। काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्
चतुर्ष्वेषु करे होमः पिण्डदानं द्विजान्तिके। पिण्डनिर्वपणं केचिदिच्छन्त्यस्मिंश्चतुष्टये
॥ १४ ॥ ( १७६ ) इत्यष्टमीश्राद्धम्।

## १० अन्वष्टक्यश्राद्धम्।

अन्वष्टक्यं भवेत्कर्म नवम्यां पितृयज्ञवत्। दक्षिणाप्रवणे वह्निं निधाय उवलयेज्जलम् ॥
त्रिः परिस्तीर्य तं दर्भैः समूलैरप्रदक्षिणम्। अतिप्रणीतवह्नेश्च भवेदेवं परिस्तृतिः ॥२॥
अकुर्वन्नयमिदं कुर्यात्परिस्तरणमत्र तु। ओदनं कृसरं चैव पायसं श्रपयेत्तथा ॥ ३ ॥
कुर्वीत दधिमन्थाख्यं मधुमन्थाख्यमेव च। श्रपयित्वा चरूनग्नौ दधिमन्थाद्यधिश्रयेत् ॥

सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः। मधुमन्था. प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तवः
कुर्यालेखे अवस्तीर्य सकृच्छिन्नद्वयेन ते। अभिघार्य क्रमेणैतानुद्वासयति पूर्ववत् ॥६॥
मात्राद्यर्थं पृथक्कुर्यात्काशिपुं सोपबर्हणम्। कृत्वेऽमाधानपर्यन्तं ब्राह्मणानुपवेशयेत् ॥
कांश्चिद्विप्रान्पितृश्राद्धे स्त्रीश्राद्धे कांश्चिदेव तु। नोहेन्मात्रर्घ्यपात्रेषु तिलावापे पितृन्पदम्
अर्घ्यप्रदानमन्त्रेषु मात्रादिपदमावपेत्। वासःप्रदानपर्यन्तं प्राग्वत्कृत्वोभयत्र तु ॥ ९ ॥
मधुमन्थहविर्वर्जमुद्धृत्यान्नं चतुष्टयात्। अनुज्ञातो द्विजैस्तद्वज्जुहुयादाहुतिद्वयम् ॥१०॥
हविश्चतुष्टयात्केचिदूचिरेऽष्टाहुतीरिह। संपन्नवचनान्तं स्याद्न्नदानादि पूर्ववत् ॥११॥
उद्धृत्य भुक्तशेषान्नमेकीकृत्य च पञ्चभिः। पूर्वस्यामथ लेखायां पितृणां निनयेज्जलम्
(+पश्चिमायां तु लेखायां मातृणां निनयेज्जलम्)। शुन्धन्तामत्र पित्रादौ मात्रादिपदमावपेत्
दत्त्वा पिण्डान्पितृभ्यस्तु मात्रादिभ्यो ददात्यथ। मातृपिण्डेषु निनयेत्सुरां चाऽऽाममेव च
ओदनाग्रद्रवं प्राहुराचार्यं हि मनीषिणः। स्त्रीद्वित्वे वा बहुत्वे वा तच्छब्दस्योह इष्यते
निर्दिशेन्नामनी द्वित्वे नामान्यपि बहूनि चेत्। नाम द्विवचनान्तं स्यादेवं तच्चेद्द्वयोरपि
नोहेद्या इति येशब्दं वृत्तिकारवचो यथा। जयन्तस्वामिनः शिष्या ऊहं कुर्वन्ति या इति
द्वित्वे युवां बहुत्वे तु युष्मानिति पदं वदेत्। अनूहेनैव पिण्डानां सक्तुस्यादनुमन्त्रणम्
अम्यक्ष्वाथांपदं द्वित्वे बहुत्वेऽभ्यङ्ध्वमित्यथ। द्वित्वेऽञ्जाथां पदं ब्रूयाद्बहुत्वेऽङ्ध्वंपदं वदेत्
दद्याद्दशामनूहेन मन्त्रस्याऽऽवृत्तिरिष्यते। अनूहेनैव षट् पिण्डान्सकृदेवोपतिष्ठते ॥
अनूहेनोभयेषां स्याद्युगपच्च प्रवाहणम्। पिण्डदानमनूहेन मन्त्रस्याऽऽवृत्तिरिष्यते ॥
पिण्डद्वयमनूहेन पत्नीं वै प्राशयेदथ। स्थालीपाकोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत्
॥२२॥(९८) इत्यन्वष्टक्यम्।

## ११ माध्यावर्षम्।

माध्यावर्षं नभस्यस्य कृष्णाष्टम्यां विधीयते। अष्टकाकर्मवत्कार्यं सक्थ्यादिग्रहःसु तत् ॥
माध्यावर्षं नभस्यस्य कृष्णपक्षेति कुत्रचित्। अन्वष्टक्यवदेव स्यात्पार्वणं वेति केचन
॥ २ ॥ ( १०० ) इति माध्यावर्षम्।

## १२ कृष्णपक्षश्राद्धम्।

प्रतिमासं भवेत्कृष्णपक्षे युग्मेऽह्नि कुत्रचित्। पितृभ्य एव तच्छ्राद्धमन्वष्टक्यविधानतः
॥ १ ॥ ( १०१ ) इति कृष्णपक्षश्राद्धम्।

## १३ काम्यश्राद्धम्।

पञ्चम्यां पुत्रकामस्येत्यादि काम्यं तदुच्यते। श्राद्धं यदुक्तमष्टम्यां तद्वदेव तदिष्यते
॥ १ ॥ ( १०२ ) इति काम्यश्राद्धम्।

---

+ कंसस्थयर्थं क. पुस्तके नास्ति।

## १४ मासिमासिश्राद्धम् ।

विकल्पः पार्वणात्वस्य मासिश्राद्धस्य चेष्यते । काम्यश्राद्धे कृते नैव कार्यं मासिकपार्वणे अष्टमीश्राद्धवत्कुर्यादाहिताग्निस्तु पार्वणम् ।।२।।(१०४) इति मासिमासिश्राद्धम् ।

## १५ नान्दीश्राद्धम् ।

स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु । स्यात्पुंसवनसीमन्तचौलोपनयनेष्विह ।। १ ।। विवाहे नामधेयप्रभृतिश्रौतकर्मसु । इदं श्राद्धं प्रकुर्वीत द्विजो वृद्धिनिमित्तकम् ।।२।। अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकम् प्राङ्मुखोऽत्रोपवीती स्यादुपचारः प्रदक्षिणम् ।तिलकार्ये यवैः कुर्याद्युग्मान्विप्रान्निमन्त्र्य तु ऋजुदर्भानमूलांस्तु दद्यादेषामासनेष्वथ । प्राक्संस्थपात्रेष्वासिच्य प्राग्वच्चापो निमन्त्र्य तु तिलोऽसीतिपदस्थाने यवोऽसीति पदं वदेत् । स्वधयेतिपदस्थाने पुष्ट्याशब्दं वदेदिह ।। पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति । स्वधानमःपदस्थाने स्वाहाशब्दं वदेदिह ।।७।। संबन्धनामरूपाणि वर्जयेदत्र कर्मणि । अतोऽन्यत्तु यथापाठमुक्त्वाऽर्घ्यांश्चावपेद्यवान् ।। नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः । पित्रर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ।। इममेव वदेन्मन्त्रं पितामहपदान्वितम् । तदर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ।। १० ।। प्रपितामहसंयुक्तं मन्त्रमुक्त्वैवमेव तु । तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तत् ।। ११ ।। नान्दीमुखास्तु पितर इदं वोऽर्घ्यमिति त्वथ । दत्त्वाऽर्घ्यस्यैकदेशं स्यादर्घ्यदानं प्रतिद्विजम् आवृत्तिरपि मन्त्रस्य प्रतिप्र छगामिष्यते । प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमन्त्रणम् ।। यवोऽसीत्यूहमन्त्रः स्यादर्घ्ये इत्यपरे जगुः । द्विर्द्विर्गन्धादि दातव्यं पाणिहोमो भवेदिह अग्नये कव्यवाहादिमन्त्रेण प्रथमाऽऽहुतिः । सोमायेति द्वितीया स्यात्तथाऽन्येषां च पाणिषु आभ्यामेव तु मन्त्राभ्यां द्वे द्वे हुत्वाऽऽहुती इह । एकैकामाहुतिं केचिद्विगृह्यैव प्रजुह्वति ।। स्वधानमःपदस्थाने स्वाहाकारो भवेदिह । अथ तृप्तिपरिज्ञानपर्यन्तं पूर्ववद्भवेत् ।।१७।। मधुवाताइतिस्थाने उपास्मै गायता नरः । पञ्चर्चः श्रावयित्वाऽक्षन्निति च श्रावयेदथ ।। संपन्नवचनादि स्यादाचान्तेषु द्विजेषु तु । अथ भुक्ताशयात्सम्यग्गोमयेनोपलेपयेत् ।। तत्र प्रागग्रकान्दर्भानास्तृणाति ततः परम् । पृषदाज्यं च कुर्वीत दध्यानयति सर्पिषि ।। पृषदाज्येन संमिश्रं भुक्तशेषोद्धृतं भवेत् । एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत् अथानुमन्त्रणादि स्यात्तत्तु नेच्छन्ति केचन । अथो संपन्नमन्त्रेण विप्राणां स्याद्विसर्जनम् ।। २२ ।। ( १२१ ) इति नान्दीश्राद्धम् ।।

## १६ रथारोहणम् ।

आरोहयन्त्राप यादीनि वनस्पते इति स्वरेत् । स्थिरावितिं रथरोहान्वाणदक्षभीषां युगं तथा सुत्रामाणमृचा नावमारोहेदुत्तरामवीम् ।। २ ।। ( १२८ ) इति रथाद्यारोहणम् ।

१ क. पूर्वेषु । २ क. र्घ्यस्तः सामनशे ।

## १७ वास्तुपरीक्षा शान्तिश्च ।

कार्या वास्तुपरीक्षाऽथ बाह्यैर्लिङ्गैस्तथाऽऽन्तरैः। इरिणं च विवादश्च न स्तो यस्मिन्स्थले सदा
यस्मिन्नोपधयो वृक्षाः प्रभूतं कुशवीरिणम् । सन्ति तत्र गृहं कुर्यात्स्याच्चेदान्तरलक्षणम्
कण्टकिक्षीरिणश्च स्युरपामार्गादयश्च ये। अन्ये च वास्तुविद्यायां निषिद्धा येऽत्र तानपि
उत्पाट्य सह मूलेन बहिरुद्वासयेदथ । आन्तरं लक्षणं वक्ष्ये यद्बुधैः प्रचक्षते ॥
जानुमात्रं चतुष्कोणं गर्तं खात्वोद्धृतैस्तु तैः। पांसुभिः पूरयेद्गर्तं पांसुराशौ ततोऽधिके
प्रशस्तं पांसुराशौ तु समे गर्ते तु वृत्तिमत्। न्यूने तु कुत्सितं विद्यात्तस्मात्तत्र न कारयेत्
अथास्तमित आदित्ये गर्तं तं पूरयेज्जलैः । व्युष्टायां तं परीक्षेत प्रशस्तः सजलो यदि
आर्द्रो यदि भवेद्गर्तो वृत्तिमद्वास्तु तद्भवेत्। स्याच्चेच्छुष्को गृहं तत्र न कुर्यात्कुत्सितं यतः
प्रशस्तलक्षणैरेभिर्लक्षितो यस्तमेव तु । भूभागं मधुरास्वादं सिकताबहुलं तथा ॥ १ ॥
ततः स्वीकृत्य तं विप्रो बहुशः सीतया कृषेत् । कुर्यात्समचतुष्कोणं दिक्षु सर्वास्वतः परम्
प्रागायतं चतुष्कोणं स्थलं तत्तु स्तेऽथवा । सर्वतश्चोन्नतं मध्ये निम्नं प्राक्प्रवणं भवेत्
सूक्तेन शंनइन्द्राग्नी मन्त्रान्ते त्रिः परिव्रजन्। प्रोक्षत्यद्भिः शमीशाखयोदुम्बर्या च शाखया
प्राचीमारभ्य तद्वास्तु त्रनेः प्रोक्षन्प्रदक्षिणम् । अथ तां दिशमारभ्य त्वापोहिष्ठातृचेन च
अम्बुधारां त्रिरच्छिन्नां मुञ्चन्नेव प्रदक्षिणम् । प्रोक्षणव्रजने स्यातां तृचान्तेऽन्यत्समं भवेत्
प्राच्यां दिशि गृहस्थस्य शयनीयं गृहं भवेत् । ततस्तु शयनीयस्य गृहस्योत्तरदेशतः
अपां शनैस्तु निर्गत्यै कुर्यात्स्यन्दनिकामृजुम् । महानसं भवेत्तत्र यत्र स्यन्दनिका कृता
वास्तुमध्ये सभां कुर्याद्यत्राऽऽस्ते स्वजनैर्वृतः। यावन्तः संभवन्त्यत्र वंशास्तत्र द्वयोर्द्वयोः
अन्तरेषु पृथक्कृत्य कुड्येनान्येन वा ततः । अवान्तरगृहाण्यत्र कारयेद्वास्तुशास्त्रवित्
स्थूणावटेषु स्वयकां शीपालं चावधापयेत्। आसां या मध्यमा स्थूणा तस्या गर्ते स्वतः परम्
प्रागग्रानुदगग्रांश्च कुशानुप्यास्तृणास्यथ । आसिञ्चेदच्युतायेति तस्मिन्नौषधादिमज्जलम्
गर्तेऽवधाप्यमाना तां मध्यस्थूणामुपस्पृशन् । इहैव तिष्ठ मन्त्राभ्यामनुमन्त्रयते ततः ॥
वंशमाधीयमानं तु मध्यमाया उपर्यथ । ऋतेनेत्यनुमन्त्र्यान्ये प्रतिवंशं वदन्ति तत् ॥
समाप्य च गृहं तस्मिन्बीजादि स्थापयेद्गृहे । गृहप्रवेशनं कुर्यान्मुहूर्ते शोभने ततः ॥
प्रविश्य बीजवद्गेहं चतस्रः स्थापयेच्छिलाः । दूर्वास्तासु निधायात्र मणिकं स्थापयेदथ
पृथिव्या अधिमन्त्रेण यद्वाराङ्कर इत्यथ । एतु राजेति मन्त्रेण मणिकं पूरयेज्जलैः ॥
मणिकादप आदाय व्रीहीनोप्य यवानपि। हिरण्यं चावधायाद्भिः प्रोक्षति त्रिः परिव्रजन्
सूक्तेन शंनइन्द्राग्नी इति पूर्ववदेव तु । अम्बुधारामवच्छिन्ना हरति त्रिः परिव्रजन् ॥

१ क. समग° । २ ख °ने न । ३ क. प्रोक्षेन्त्र° । ४ क °सुपस्पृशन्दे । ५ क. गृहम् ।

अपोहिष्ठेत्यनेनैव तृचेनान्यत्तु पूर्ववत् । अन्यस्मात्पचनात्पूर्वं गृहमध्ये चरुं पचेत् ॥
पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । निर्वापप्रोक्षणे तूष्णीं मन्त्रो वास्तोष्पते प्रति ॥
हुत्वा चतसृभिः कुर्वन्स्वाहाकारमृगन्ततः । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत्
चरुणा गृहसिद्धेन ब्राह्मणान्भोजयेत्ततः । शिवं वास्तु शिवं वास्त्वित्यथ भुक्तवतो द्विजान्
वाचयत्तेच तद्वाक्यं तथा ब्रूयुः सुपूजिताः । शास्त्रान्तरेण संस्कृत्य विशीर्णे यो गृहं विशेत्
शिवं वास्त्विति मन्त्रः स्याद्वीजस्थापनपूर्वकम् ॥ २१ ॥ (६६१) इति वास्तुशान्तिः ।

## १८ गृहे प्रवासप्रत्यागमनम् ।

अभयं वोऽभयं मेऽस्तु मन्त्रेणोपासनं गृही । प्रवत्स्यन्नुपतिष्ठेत ततो ग्रामान्तरं व्रजेत् ॥
आगत्य ज्वलयित्वाऽग्निमनेनैवोपतिष्ठते । गृहानेत्यादिमन्त्रेण गृहानीक्षेत वै ततः ॥ २
गृहानहं सुमनस इत्यनेन प्रपद्यते । जपेन्निर्वीक्षमाणस्तु शिवं शग्ममिति त्वथ ॥ ३ ॥
प्रवासादेत्य पुत्रस्य परिगृह्य शिरस्ततः । अङ्गादङ्गादिति जपन्मूर्ध्नि त्रिरवजिघ्रति ॥
प्रवासादेत्य कर्तव्यं कुमार्या अप्यमन्त्रकम् साग्निः प्रयाति चेत्पाणी प्रतपेद्यात इत्यथ ।
जिघ्रेत्पाणी ततः काले व्याहृत्याऽग्निं समुच्छ्वसेत् । प्रादुष्करणकालो यः स काल इति कीर्तितः
कृते पाणिसमारोपे नियमांस्तु निबोधत । जलेऽनिमज्जनः स्नायान्नोपेयाच्च स्त्रियं तथा
कृत्वा मूत्रपुरीषे तु चिरं नाऽऽसीत चाशुचिः । समिधं प्रतपेद्वाऽयावयं ते योनिरित्यृचा
अग्नौ प्रत्यवरोहेति काले तामादधात्यथ । अनेनैव च पूर्वस्मिन्पक्षेऽप्यग्निं समुच्छ्वसेत् ॥
॥ ९ ॥ (६७०) इति गृहप्रवासप्रत्यागमनम् ।

## १९ क्षेत्रकर्षणादि ।

द्रव्यार्थमुत्तरैः प्रोष्ठपदैः क्षेत्रं प्रकर्षयेत् । रोहिण्यां वा तदिष्यते फल्गुनीपूत्तरासु वा ॥
स्वक्षेत्रस्यानु वा तं तु देशं गच्छेत्ससाधनः । कृत्वाऽऽज्यभागपर्यन्तमुपलेपादि पूर्ववत्
तत एतेन सूक्तेन क्षेत्रस्य पतिना वयम् । ऋगन्ततः पठन्स्वाहाकारमाज्याहुतीर्दिशेत्
(+प्रारभेत ततः कर्तुं कुर्यात्स्विष्टकृदादिकम्) । एतत्सूक्तं जपित्वा वा ततः क्षेत्रं प्रकर्षयेत्
॥ ४ ॥ (६७४) इति क्षेत्रकर्षणादि ।

## २० क्षेत्रे नित्यं गवानुमन्त्रणम् ।

गच्छन्तीरटवीं गन्तुमनुमन्त्रयते स्वगाः । अन्या वा नियमो द्वाभ्यां मयोभूर्वात इत्यथ
आगच्छन्तीरिमास्तृचा अनुमन्त्रयते पुनः । यासामूधश्चतुर्बिलं तद्वा देवेषु द्वयेन च ॥
आगावः सूक्तमेवान्ये आयान्तीनां तु मन्त्रणे । अपो गुरुगवां संघान्मृतास्थेत्युपतिष्ठते ॥
मायं घं मयि जानीध्वं मन्त्रान्ते सकृदेव तु । कुर्यादहरहश्चेदं शुचौ देशे समाहितः

---

+ कंसस्यमर्धं क. ख. पुस्तकद्वयेऽपिकम् ।

---

१ क. °रैन छ° २ क. °णोपासनं । ३ क. °या माप्य° । ४ क. ख. °ऽप्यग्नि स° ।

मध्येषु गुरुमध्यं चेत्कर्म वै नैतदिष्यते ॥ ९ ॥ ( ६७२ ) इति गवानुमन्त्रणम् ।
इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु द्वितीयोऽध्यायः॥२॥

---

अथ तृतीयोऽध्यायः ।

---

## १ काम्यचरुहोमः ।

अनाहिताग्निरेवेमान्कुर्यात्काम्यांश्चरूनथ । परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥ १ ॥
अग्नये पुत्रिणे त्वेति पुत्रकामस्तु निर्वपेत् । अग्नये पुत्रिणे स्वाहेत्येतेन जुहुयाच्चरुम् ॥
आयुःकामादिकश्चरूनेवमेव करोत्यथ । सूत्रोक्तदेवता ज्ञेयास्तत्र तत्र तु कर्मणि ॥ ३ ॥
(६८२) इति काम्यचरुहोमः ।

## २ व्याधिनिमित्तचरुहोमः ।

व्याध्यादिषु निमित्तेषु षडाहुतिचरुर्भवेत् । परिषेचनपर्यन्तमन्वाधानादि पूर्ववत् ॥१॥
निर्वापप्रोक्षणे तूष्णीं भवेतामत्र कर्मणि । मुञ्चामि त्वेति सूक्तेन प्रत्यृचं जुहुयाच्चरुम् ॥
षष्ठं स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥३॥ (६८५) इति व्याधिनिमित्तचरुहोमः ।

## ३ दुःस्वप्नादिपरिहारः ।

स्वप्नं दृष्ट्वाऽशुभं सूर्यमुपतिष्ठेत सप्तभिः । अद्यान इति तु द्वाभ्यां यश्च गोष्विति पञ्चभिः,
यो मे राजन्नृचा वाऽर्कमेकयैवोपतिष्ठते ॥२॥ (६८७) इति दुःस्वप्नपरिहारः ।

## ४ जृम्भादौ प्रायश्चित्तम् ।

जृम्भित्वा यदि वा क्षुत्वा दृष्ट्वा प्रत्यक्षमप्रियम् । पापकं गन्धमाघ्राय तथाऽक्षिस्पन्दनेऽथवा
(+उत्पन्ने कर्णयोः शब्दे षण्णामेकं भवेद्यदि । जपेत्तत्र इमं मन्त्रं सुचक्षा अहमित्यथ ॥
गत्वा रजस्वलां भार्यां निषिद्धदिवसेऽथवा ) ।
अयाज्यं याजयित्वा चाहविष्यादि प्रगृह्य च । अप्रतिग्राह्यपुरुषद्रव्यं वा प्रतिगृह्य च ॥
स्पृष्ट्वाऽग्निचयनार्थं च यूपं चाभोज्यभोजने । षट्स्वेषु निमित्तेषु भवेदन्यतमं यदि ॥
पर्युक्ष्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् । पुनर्मामैत्विमन्त्राभ्यां जुहुयात्संस्कृतं घृतम्॥
एताभ्यामेव मन्त्राभ्यां समिधावादधाति वा । पर्युक्षणे स्यातामन्यदत्रान्नं तु नेष्यते ॥
स्वाहाकारविनिर्मुक्तं व्द्वा मन्त्रं जपेदिह ॥६॥ (६९३) इति जृम्भादौ प्रायश्चित्तम् ।

## ५ निद्रितेऽस्तमने प्रायश्चित्तम् ।

स्वपन्तं सन्तमगमदादित्योऽस्तमियाद्यदि । तिष्ठन्नेव नयेद्रात्रिशेषं वाग्यत एव सन् ॥

---

+ कंसस्थो ग्रन्थः क. पुस्तकेऽधिकः ।

उदिते येन सूर्येति पञ्चभिरुपतिष्ठते । अविध्युक्तक्रियाश्रान्तमपि निद्रावशं गतम् ॥
अर्कोऽभ्युदेति चेदह्न शेषं स्थित्वा तु वाग्यतः । उदिते यस्य ते विश्वेत्यृग्भिश्चतसृभी रविम्
उपतिष्ठेत विहितकर्मश्रान्तस्य नेष्यते॥ ४॥(६९७)इति निद्रितेऽस्तमने प्रायश्चित्तम् ।

## ६ कपोताद्युपघाते प्रायश्चित्तम् ।

रक्तपादः कपोताख्य अरण्यौका, शुकच्छवि.। स चेच्छालां विशेच्छालासमीपं वा व्रजेद्यदि
परिषेचनपर्यन्तमन्वाधानादि पूर्ववत्। देवाः कपोतसूक्तेन प्रत्यृचं जुहुयाद्धुतम् ॥ २ ॥
पृष्ठं स्वाहेति जुहुयात्प्रत्यृचं च वनेष्विह । इदं सूक्तं जपेद्यद्वा विकल्पो जपहोमयोः ॥ ३॥
( ७०० ) इति कपोताद्युपघातप्रायश्चित्तम् ।

## ७ धनार्थगमने विधिः ।

गच्छन्धनार्थी सूक्तेन वयमुत्वा पथस्पते। पूर्ववत्प्रत्यृचं होमं कुर्यात्सूक्तस्य वा जपम् ॥
प्रज्ञाहीनोऽथवा नष्टं लब्धुमिच्छञ्जुहोत्यथ । संपूषन्सूक्ततस्तद्वत्प्रत्यृचं यदि वा जपेत् ॥
गमिष्यन्महदध्वानमल्पं वाऽपि भयानकम् । संपूषन्नध्वसूक्तेन प्रत्यृचं यदि वा जपेत् ।
॥ ३ ॥ ( ७०३ ) इति धनार्थगमने विधिः ।

## ८ औपासनाग्निनाशे प्रायश्चित्तम् ।

औपासनाग्निर्गच्छेच्चेदुपलेपादि पूर्ववत् । आहृतं श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ॥
अन्यस्माद्धोमवाञ्छार्थी नाश्नीयाद्यदि वा गृही।पर्यूहनादिकं कृत्वा संस्कृत्याऽऽज्यं च पूर्ववत्
अयाश्चेत्यनया हुत्वा यथापूर्वं जुहोत्यथ॥३॥(७०६) इत्यौपासनाग्निनाशप्रायश्चित्तम्

## ९ अन्वाधानोत्तरमग्निनाशे प्रायश्चित्तम् ।

अन्वाधाने कृते यागात्प्राक्चेदनुगतिर्भवेत् । प्रायश्चित्तमिदं कृत्वा पुनरन्वादधात्यथ ॥
अन्वाधाने कृते यागात्प्रागेवाऽऽरोपयेद्यदि । तुभ्यं ता इत्यृचा हुत्वा वह्निमारोपयेत्ततः॥
॥ २ ॥ ( ७०९ ) इत्यन्वाधानोत्तरमग्निनाशे प्रायश्चित्तम् ।

## १० नित्यहोमातिक्रमे प्रायश्चित्तम् ।

नित्यहोमे स्वतिक्रान्ते संस्कृत्याग्निं च पूर्ववत्। चतुष्कृत्वो गृहीत्वाऽऽज्यं मनस्वत्या जुहोत्यथ
आद्वादशदिनाद्येवमूर्ध्वं विच्छिद्यतेऽनलः । प्रायश्चितं तु मत्प्रोक्तमग्नित्यागोपपातके ॥
मनुना तत्प्रकुर्वीत तत्तत्कालानुसारतः। त्रैमासिकं गोवधोक्तं त्यक्तेऽग्नौ निष्कृतिर्भवेत्॥
चान्द्रायणं वा होम्यस्य दानं वाऽपि समाचरेत् । अन्यत्र पुनराधानं दानमेव तथैव च ॥
उपलेपादिकं कुर्यादाधारान्तं विवाहवत् । विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदिह ॥
गृहप्रवेशनीयाश्च हुत्वा स्यादुदयाजनम् । परिणीत्यादि नास्त्यत्र लाजानावपति स्वयम्
समानतन्त्रकं चेह होमद्वयमिदं भवेत् । ७॥(७१६)इति नित्यहोमातिक्रमे प्रायश्चित्तम्

## ११ उभयातिक्रमे ।

उभयातिक्रमे कार्य एकः पथिकृतो भवेत् । तृतीयप्रभृतीनां तु पर्वणामतिपातने ॥१॥
पुनराधेयमिच्छन्ति केचिद्ब्रह्मविदो द्विजाः । समारूढसमिन्नाशे पुनराधेयमिष्यते ॥२॥
( ७१८ ) इत्युभयातिक्रमप्रायश्चित्तम् ।

## १२ पुनराधानम् ।

वक्ष्यामि पुनराधेयं भगवत्स्वामितो मतम् । अग्न्याधेयीयसंभारान्यथासंभवमाहरेत् ॥
उपलेपादिकं कृत्वा संभारानिदधाति तान् । संभारेष्वादधात्यग्निं श्रोत्रियादिगृहाद्धृतम्
पर्युहनादिकं कृत्वा संस्कृत्याऽऽज्यं च पूर्ववत् । स्रुवेण जुहुयादाज्यमथाश्वेत्यनयैकया
स्थालीपाके त्वतिक्रान्ते यद्यन्यात्रौ स्वयं यजेत् । स्वाग्नावन्यो यजेद्वा कार्यः पथिकृतश्चरुः
आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम् । तथा चाऽऽज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते
स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः । प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ॥
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥७॥ (७२५) इति पुनराधानविधिः ।

## १३ अग्नेरायतनाद्बहिर्गमने ।

अर्वाक्शम्यापरासात्तु बहिरायतनाद्गतम् । प्रायश्चित्तसमाप्त्यन्तं समर्थो जीवितुं यदि ॥
इदं त इत्यृचा तस्य स्थानेऽग्निं प्रक्षिपेत्पुनः । आज्याहुतीश्च जुहुयाद्व्याहृत्याऽन्यैश्च पूर्ववत्
अतिक्रान्तो यदा शम्यापरासमनलो भवेत् । चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा
॥ ३ ॥ ( ७२८ ) इत्यायतनादग्नेर्बहिर्गमने प्रायश्चित्तम् ।

## १४ इध्माधानोत्तरं हविषि दुष्टे ।

इध्माधाने कृते दुष्टं प्रधानहविरत्र चेत् । तत्स्थाने जुहुयादाज्यमदुष्टं च जुहोत्यथ ॥
एवं समाप्य यद्दुष्टं तदप्स्वप्सु क्षिपेत्पुनः । अन्वाधानादिको यागः पुनः कर्तव्य एव तु
॥ २ ॥ ( ७३० ) इति दुष्टे हविषि प्रायश्चित्तम् ।

## १५ इध्माधानतः पूर्वदुष्टे ।

प्रागिध्माधानतो दुष्टे प्रधानहविषि त्वथ । तद्धविः पुनरुत्पाद्य पूर्ववत्तत्समापयेत् ॥
अङ्गानां चेद्धविर्दुष्टं तदप्स्वप्सु क्षिपेत्पुनः । स्विष्टकृद्धविषो दोष आज्येनैव समापयेत्
॥ २ ॥ ( ७३२ ) इतीध्माधानात्पूर्वदुष्टहविःप्रायश्चित्तम् ।

## १६ नखाद्यमेध्यप्रक्षेपे ।

प्रच्युतैश्च नखैः केशैः कीटैर्वाऽमेध्यसेविभिः । वसासृक्शुक्रमज्जास्थिमूत्रविण्मेदद्दूषिकैः
श्लेष्माद्यैरपि बीभत्सैर्दुष्टानि स्युर्हवींषि तु । भिन्नानि चैव सिक्तानि दुष्टानि स्युः क्षिपेज्जले

१ क. °चेथिकर्म° । २ क. पाथिकृतः । ३ क. हविः ।

॥ २॥ ( ७३४ ) इति नखाद्यमेध्यप्रक्षेपे प्रायश्चित्तम् ।

## १७ स्रुगादिनाशे ।

स्रुवश्चेद्भिद्येत तद्वन्याम़ाहृत्य जुहुयाद्धविः। वानस्पत्यानि भिन्नानि प्राग्दण्डान्यग्निके क्षिपेत्
॥ १ ॥ ( ७३५ ) इति स्रुगादिनाशे ।

## १८ अग्निसंसर्गे ।

संसृष्टो यस्य गृह्याग्निरन्यगृह्याग्निना यदि । चरुर्विविचये कार्यो यद्वा पूर्णाहुतिर्भवेत् ॥
अग्निर्गुणी भवेदेषु विविचिल्वादिको गुणः । चरुः क्षामाय कर्तव्यो गृहदाहेषु वै भवेत्
( ७३७ ) इत्यग्निसंसर्गे ।

## १९ शवाग्न्यादिसंसर्गेषु ।

शवाग्निना तु संसर्गे कुर्वीत शुचये चरुम् । पचनाग्नेस्तु संसर्गे संसर्गाय चरुर्भवेत् ॥
वैद्युतेन तु संसर्गे कुर्यादप्सुमते चरुम् । प्रायश्चित्तचरुस्थाने पूर्णाहुतिरिहेष्यते॥ २ ॥
पर्वव्यार्ताश्रुपातेन कुर्याद्व्रतभृते चरुम् । समानतन्त्रं कुर्वन्ति पार्वणेन तु कर्मणा ॥
स्याच्चेत्पवित्रयोर्नाशः स्यात्पवित्रवते चरम् ॥४॥ (७४१) इति शवाग्न्यादिसंसर्गेषु।

## २० अनादिष्टप्रायश्चित्तम् ।

प्रायश्चित्तविशेषस्य यत्र नोक्तो भवेद्विधिः। होतव्याऽऽज्याहुतिस्तत्र भूर्भुवःस्वरितीह तु
स्वयं ज्वलित उद्दीप्यस्वेति द्वाभ्या समिद्द्वयम् । आधेयमुपघाते तु पुनस्त्वेत्यनया समित्
अकृताग्रयणोऽश्नीयान्नवान्नं यस्तु वै ततः । वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा॥
द्विपदन्नं यदा भुङ्क्ते तत्राप्येष चरुर्भवेत् ॥ ४ ॥ (७४६) इत्यनादिष्टप्रायश्चित्तम् ।

## २१ कपालनाशादौ ।

कपालनाशोऽप्येव स्याच्छ्रपणाकर्मनामनि । कपालं तद्भवेद्भिन्नं प्रागेव श्रपणाद्यदि ॥१॥
तदा तत्रोक्तमन्त्रेण कपालं संदधात्यथ । अभिन्नो घर्म इत्याभ्यामप्सु तत्प्रक्षिपेदथ ॥
तच्चेदशुचिसंबद्धमाभ्यामेव क्षिपेज्जले । अन्यथाशुचि संबद्धं मृन्मयं भिन्नमेव वा ॥
भूमिर्भूमि तु मन्त्रेण प्रक्षिपेदेव तज्जले ॥ ४ ॥ ( ७४८) इति कपालनाशादौ ।

## २२ पुरोडाशभेदे ।

भिद्येयदि पुरोडाश उद्वच्छेदथवा यदि । किमुत्पतसिमन्त्रेण बर्हिष्येनं निधाय तु ॥
अभिमन्त्रयते तं च मा हिंसीरिति मन्त्रतः । श्रूयते मृतशब्दश्चेद्यजमाने तु जीवति ॥
अग्नये सुरभिमते चरुः पूर्णाहुतिस्तु वा ॥ ३ ॥ (७५१) इति पुरोडाशभेदे ।

## २३ यमलजनने ।

अथ यस्य वधूर्गौर्वा जनयेच्चेद्यमौ ततः । स मरुद्भ्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वा॥१॥
(७५२) इति यमलजनने ।

## २४ आयतनाद्बहिराहुतिपतने ।

आहुतिर्हूयमाना तु बहिः स्कन्देत चेद्यदि । देवाञ्जनमगन्यज्ञ इत्यनेनाभिमृश्य ताम् ॥
द्रप्सश्चस्कन्देत्याहुतिं तां च प्रक्षिपेदग्नौ पुनः । देवाञ्जनेति सर्वत्र स्कन्नं स्वाभिमृशेद्धविः ॥
निमित्तानन्तरं सर्वप्रायश्चित्तं भवेदिह ॥३॥ (७२५) इत्यायतनाद्बहिराहुतिपतने ।

## २५ मन्त्रदेवतादिविपर्यासे ।

प्रागेवोत्पद्यते दोष आज्यसंस्कारतो यदि । प्रायश्चित्तं भवेदाज्यसंस्कारानन्तरं ततः ॥
व्युत्क्रमो देवतानां तु संकल्पादौ भवेद्यदि । (×मन्त्राणां व्युत्क्रमस्तद्वद्धोमादौ तु भवेद्यदि
मध्यात्पूर्वार्धतश्चेति व्युत्क्रमोऽस्य भवेद्यदि) । द्रव्याणां व्युत्क्रमः स्याच्चेत्तथा निर्वपणादिषु
यद्वोद्देशात्तथा मत्वा जुहुयात्तु स्रुवाहुतिम् । यन्मुख्यं स्वगृहे द्रव्यं होमकर्त्रे ददाति तत्
यजमानस्तु जुहुयाद्बह्माभावे स्रुवाहुतिम् । कस्मैचद्ब्राह्मणायास्मिन्पक्षे द्रव्यं ददाति तत्
होतव्यैकाऽऽहुतिस्तत्र व्याहृत्याज्यैः समुच्चयात् । यागानां व्युत्क्रमं ज्ञात्वा इदं कृत्वा
यजेत्ततः ॥
अविज्ञाते विपर्यासे विहिता देवताः स्मरन् । इष्टवांस्तत ऊर्ध्वं तु व्युत्क्रमेऽवगते सति
प्रायश्चित्तमिदं कृत्वा यागानाऽऽवर्तयेत्तदा । यदा त्वविहितां देवतां स्मरन्निष्टवांस्तदा ॥
प्रायश्चित्तमिदं कृत्वा यागं स्वावर्तयेत्कृतम् ॥८॥ (७६२) इति मन्त्रदेवतादिविपर्यासे ।

## २६ अपक्वहविरादौ ।

यदा हविरपक्वं स्यात्तेनैव हविषा यजेत् । चतुःशरावमात्रैस्तु पचेद्व्रीहिभिरोदनम् ॥
भोजयेत्तेन चान्नेन चतुरो ब्राह्मणानथ । बहुदग्धमदग्धं वा किंचिदेव यदा हविः ॥
शिष्टेनेष्ट्वा पुनर्यागः स्यादारभ्याऽऽदितस्तदा । कृत्स्नं दग्धं यदा तस्यात्पुनरुत्पादयेद्धविः
स एव यागः कर्तव्यः पुनर्यागस्तु नेष्यते । मध्यात्पूर्वार्धतोऽवत्तं यदि दुष्टं हविर्भवेत् ॥
तस्यैव हविषोऽवद्येन्मध्यात्पूर्वार्धतः पुनः । समारूढसमिन्नाशे पुनराधेय इष्यते ॥९॥
श्रौतोक्तमविरोध्यन्यत्स्मार्तं तु ह्यतशास्त्रविदन् । बौधायन इदं प्राह लोपे पञ्चमखेषु च ॥
एतेभ्यः पञ्चयज्ञेभ्यो यद्येकोऽपि च हीयते । मनस्वत्याहुतिस्तत्र प्रायश्चित्तं विधीयते ॥
एवं द्व्यहं त्र्यहं वाऽपि प्रमादाद्दृष्टेषु तु । तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीर्भवेत्
दशाहं द्वादशाहं वा निवृत्तेषु च सर्वतः । चतस्रो वारुणीर्हुत्वा कार्यस्तन्तुमतश्चरुः ॥
अकृत्वा पञ्चमं यज्ञं पञ्चानां वाऽष्टकादिषु । उपवासेन शुद्धिः स्यात्सुमन्तोर्मतमीदृशम्

× कंसस्था कारिका केऽधिका ।

१ क. 'लानि' । २ क. 'बौधा' ।

स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् ॥ ११ ॥ (७७४) इत्यपक्वहविरादिप्रायश्चित्तम् ।

इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ।

### १ दाहविधिः ।

अनाहिताग्निदेहस्य संस्कारविधिरुच्यते । आग्नेय्यां दाहदेशः स्यान्नैर्ऋत्यामथवा दिशि ॥
मवेदमित आकाशः स देशो बहुलौषधिः । उन्नतो मध्यतस्तद्वत्सर्वतो निम्न एव च ॥
उद्धार्याणि समूलानि कण्टकप्रभृतीनि षट् । ऊर्ध्वबाहुनरायामं खातं प्राग्दक्षिणायतम् ॥
पञ्चारत्निमितं तिर्यगधस्ताद्द्वादशाङ्गुलम् । याम्यप्रवणमाग्नेयीप्रवणं वा करोति तत् ॥
स्नापयित्वाऽथ तं प्रेतं नलदेनानुलिप्य च । प्रतिमुञ्चति तन्मालामलंकुर्युः कलेवरम् ॥
जपां प्रतिनिधिं केचिदूचिरे नलदस्य तु । कुर्युः प्राक्शिरसं प्रेतं यस्मिन्नेव नयन्ति तु ।
पादमात्रमवच्छिद्य मूलतोऽहतवाससः । आविष्पादं समासाद्य प्रत्यगग्रेण वाससा ॥
अङ्गुल्यग्राद्वेद्यावत्पार्ष्णिप्रभृतितस्य तु । तत्पादशब्दवाच्यं स्याज्जयन्तवचनं यथा ॥
तस्याधस्तादथ भवेदन्यद्वासस्तु लौकिकम् । तस्य पुत्रा अवच्छेदं संगृह्णीयुस्ततः परम् ॥
प्रभूतं बर्हिराज्यं च कर्मण्यत्रोपकल्पयेत् । गृहे तु मरणे सम्यगजस्रं नीयते यदा ॥
गृहात्प्राच्यामुदीच्यां वा नद्यादौ नीयते तदा । जीवने चद्रा तस्य वह्निमारोपयेत्सुधीः ॥
सहैव नीयते तत्र ज्वालयेद्विधिपूर्वकम् । प्राणोत्क्रमणदेशात्तु म्रियमाणं तु तां दिशि
औपासनं नयेत्पूर्वं बर्हिराज्यं स्रुवं तथा । कृष्णाजिनं च चमसं तिलानुदकमण्डलुम् ॥
नयन्त्यमिथुना वृद्धा अयुजस्तत्कलेवरम् । गोयुक्तशकटेनैके प्राहुः प्रेतं नयेदिति ॥ १४ ॥
अन्वयश्चेम नयनमेतेषामिह कर्मणि । अधःकृतोपवीतास्तु प्रविमुक्तशिरोरुहाः ॥ १५ ॥
अकृत्वोपरि वस्त्रं च गच्छन्तीह सुतादयः । यो ज्येष्ठः स स पूर्वो यः कनिष्ठः स स पृष्ठतः
एवंभूतास्तु गच्छेयुरमात्याः प्रेतपृष्ठतः । तद्देशं प्राप्य तत्सर्वमर्वागेव निधाय च ॥
कर्ताऽऽत्मन्य शमीशाखयोदकेनाप्रदक्षिणम् । प्रोक्षत्यपेत वीत त्रिर्मन्त्रान्ते त्रिः परिव्रजन्
केचिद्धृतोदकेनेति सूत्रमन्यदधीयते । खातं प्रोक्ष्यानलं तस्य चितायोत्तरपश्चिमे ॥ १९ ॥
प्रणयेच्चमसेनापो वह्नेरुत्तरदेशतः । तन्त्रं नास्त्यत्र भगवन्नारायणवचो यथा ॥ २० ॥
प्राचीनावीतिना कार्यं बौधायनवचो यथा । खाते हिरण्यशकलं निधायाऽऽस्ये तिलानपि
चिनुयाद्दहनायालमिध्ममूर्ध्नां चितिं ततः । आस्तृणाति चितौ बर्हिरूर्ध्वलोमाजिनं च तत्

---

१ ग. ०तिरस्य । २ क. ०सुतः । ३ क. सदा । ४ क. गदा ।

उत्तरेण निर्मलं हृत्वा चितौ संवेशयन्ति तम् । प्रेतस्योत्तरतः पत्नीं चितौ संवेशयन्त्यथ
तां देवर उदीर्ष्वेति शिष्यो वोत्थापयेद्द्वचा । छिद्राणि शीर्षकस्थानि सप्त प्रेतस्य सांप्रतम्
हिरण्यशकलैरास्यप्रमुखान्यपिधाय च । अवकीर्य घृताभ्यक्तांस्तिलान्प्रेतकलेवरे । ३९॥
पात्राणां योजनं नास्ति बौधायनवचो यथा । नेहं स्विष्टकृदाद्यत्र शेषं कार्यमिति स्थितिः
अथेमम्मे चमसं पूर्णपात्रानुमन्त्रणम् । आज्यस्योत्पवनं तूष्णीं कुर्वतीह तु कर्माणि ॥
सव्यं जान्वाच्य जुहुयात्स्रुवेणाऽऽज्याहुतीरिमाः । अग्नये स्वाहा कामाय स्वाहेत्यौपासने ततः
अथ लोकाय स्वाहेति तृतीयाहुतिरिष्यते । अथानुमतये स्वाहा चतुर्थ्याहुतिरिष्यते ॥
जान्वाच्य स्वेव जुहुयात्पञ्चमीं हृदि तस्य तु । अस्माद्वै त्वमजायेथा अयं त्वदधिजायताम्
देवदत्त स्वर्गाय लोकाय स्वाहेति चाऽऽहुतिम् । सिवानाद्यपरे कुर्युस्तथार्धप्रान्तसावितम्
ततः प्रज्वालयेदग्निं दक्षमांगानुमन्त्रणम् । प्रेहि प्रेहीति पश्चाना तृतीयमुद्धरेदथ ॥
यथैनमग्ने विदहः पूषा वेति चतुष्टयम् । चतस्र उपसर्पेति सोम एकेभ्य इत्यृचा ॥
पञ्चार्योरूणसारित्यैका तस्यानुमन्त्रणे । इमे जीवा इति जपेत्कर्ता सव्यावृतस्तु ते
तूष्णीमेवेतरऽमात्याः कर्ता साध्यमतः परम् । पृष्ठतोऽनीक्षमाणस्तु गच्छेयुरुदकस्थिरम्
जपन्तस्त्वाह सर्वेषामयं मन्त्रो भवेदिति । सकृन्निमज्य ते सर्व एकैकमुदकाञ्जलिम् ॥
स्त्रियोऽश्रोदका दद्युरयुग्मा दक्षिणामुखाः । गोत्रं नाम च निर्दिश्य स्वैतत्त उदकं त्विति
उत्तीर्य परिधायान्यान्याद्राण्यपीडयेत्सकृत् । उदगग्राणि वासांसि शोषणाय वितन्वते
आतारकोदयात्तत्र देशेऽमी सर्व आसते । दृश्यमानेष्वनक्षेषु सूर्ये वा रश्मिवर्जिते ॥
कनिष्ठप्रथमा ज्येष्ठजघन्या यान्ति मन्दिरम् । अश्मानमनलं चैव गोमयं चाक्षतानथ ।
तिलांश्चाप उपस्पृश्य प्रविशेयुर्गृहं ततः । निर्दयात्या न पचेदन्नं क्रीताद्यन्नं तु भुञ्जते॥
नाधीयत इदं सूत्रं वेचिदूद्यन्ति द्विजाः । पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि ॥
अनाग्निकां दहेदेवं कपालजरर्मुजा । अग्निवर्णं कपालं तु तप्त्वा तत्र विनिक्षिपेत् ॥
करीषादि ततो योऽग्निर्जातः स तु कपालजः । पुरोपवनवात्प्रेतं दहेस्त्समृत्युक्तमार्गतः॥
यस्मिन्देशे स्थितो वाहितानोऽन्यत्र मृतो यदि । चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा
अन्यदीयेन वत्सेन या गौः स्नुतपयोधरा । आ शरीराहृतेस्तस्याः पयसा होम इष्यते
अन्यस्या अपि होतव्यं पयसा तदसंभवे ॥ ४७ ॥ ( ८२१ ) इति दाहविधिः ।

## २ पालाशविधिः ।

शरीराणि न विन्देरन्देशान्तरमृतस्य चेत् । पलाशपर्णवृन्तैस्तु कुर्युस्तत्प्रतिरूपकम् ॥

---

१ क. ख. 'दृस्याग्नं पञ्चैव श्री' ।

दद्याच्छिरस्यशीत्यर्धं ग्रीवायां तु दशैव च। उरसि त्रिशतं दद्याद्विंशतिं जठरे तथा॥
बाह्वोर्द्वयोः शतं दद्याद्दश बाह्वङ्गुलीषु च। द्वादशार्धं वृषणयोरर्धं शिश्न एव च॥
ऊर्वोर्द्वयोः शतं देयं पञ्चार्धं जानुजङ्घयोः। दश पादाङ्गुलीषु स्युरूर्णासूत्रेण बन्धनम्
आप्याल्यालंकृत्य तद्रूपं कुर्यात्तस्याभिमर्शनम्। अयं स देवदत्तस्तस्यायमौपासनस्त्विति॥
पूर्वोक्तेन प्रकारेण तद्रूपं संकरोत्यथ। कृष्णपक्षे प्रमीयेत यद्यह्न प्रातराहुतीः॥ ५॥
शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत्। तदानीमेव जुहुयात्सायंकालाहुतीरपि॥६॥
सायं म्रियेत चेत्सायमाहुतीर्जुहुयादथ। तदानीमेव जुहुयात्प्रातःकालाहुतीरपि। ७॥
रुद्रगृहीतमेवेदं मिश्रं तन्त्रं च होमयोः। दर्शे चापि प्रकुर्वीत स्थालीपाकं तदैव तु॥
होमदर्वी न कर्तव्यौ पुनर्यदि स जीवति॥ १०॥ (८३१) इति पालाशविधिः।

## ३ आशौचसंक्षेपः।

म्रियेतोपवसथ्येऽह्नि नैवैनं याजयेत्तदा। म्रियेताग्निश्रिते नित्ये होमद्रव्ये हविष्षु वा॥
यथा निःशेषदग्धानि तथा तानि दहेत्तदा। बर्हिष्यासादितेष्वेव हविष्षु म्रियते यदा॥
यासां परिगृहीतानि देवताना हवींषि तु। चतुर्थ्यन्तानि नामानि तावतीनां वदेदथ॥
स्वाहाकारेण युगपत्सर्वाणि जुहुयादथ। नेष्टं स्विष्टकृदायत्र शेषकार्यमिति स्थितिः॥
त्रिरात्रं मरणेऽमात्यास्त्वक्षारलवणाशिनः। महागुरुमृतौ वर्ज्यं दानमध्ययनं तथा॥
द्वादशाहं दशाहं वा सपिण्डेषु मृतेष्वपि। माता पिता तथा तद्वदाचार्यश्च महागुरुः॥
दशाहमेव ते वर्ज्यं यद्यप्रत्ता मृताः स्त्रियः एकदेशं तु योऽधीते तस्मिन्विप्रे मृते सति
यः समानोदकस्तस्य मरणेऽपि तथैव च। प्रत्तानां मरणे तद्वदजातदशने मृते। ८॥
असंपूर्णमृते गर्भे त्रिरात्रं वर्जयेदथ। सहाध्यायिमृतौ चैकमाह्निक श्रोत्रिये मृते॥९॥
एकाहं वर्जयेदत्र नाऽऽशौचं तु विधीयते। स्मृत्युक्तं तद्विजानीयाद्द्वयाहं शावमित्यथ॥
वर्ज्यमध्ययनं स्वेव नाऽऽशौचं यत्र वै मृतौ॥ ११। (८४२) इत्याशौचसंक्षेपः।

## ४ अस्थिसंचयनम्।

अस्थिसंचयनं कृष्णदशम्यां ऊर्ध्वमाचरेत्। एकादश्यां त्रयोदश्यां पञ्चदश्यामथापि वा
फल्गुनीद्वयमाषाढाद्वयं प्रोष्ठपदाद्वयम् पञ्चम्यास्त्वन्यत्र नक्षत्रे कर्मास्थिचयनं भवेत्॥
कृष्णपक्षादिने स्यादेव सपिण्डीकरणादिह। स्मृत्युक्तकाले कर्तव्यमस्थिसंचयनं तदा
पुंसामस्थीनि चिनुयुः कुम्भे लक्षणवर्जिते। स्त्रीणामस्थीनि चिनुयुर्लक्षकुम्भ इति स्थितिः

१ क. प्रेतानां। २ क. °पाद्द्व°।

ऋचाऽप्रदक्षिणं शीतिकेशीति त्रिः परिव्रजन् । तत्प्रोक्षति शमीशाखयाऽम्भोभिः क्षीरमिश्रितैः
अयुजोऽमिथुना वृद्धाः पादतःप्रभृति क्रमात् । अङ्गुष्ठोपकनिष्ठाभ्यां गृहीत्वैकैकमस्थि तत्
तथा कुम्भे च दधति शब्दस्तु न भवेद्यथा । शूर्पेण भस्म संशोध्य सूक्ष्मास्थीन्यवधाय च
य उक्तो दाहदेशोऽत्र तल्लक्षणवति त्वथ । यत्राऽऽपो नाभिस्यन्देरन्वर्षाभ्योऽन्यास्तथाविधे
गर्ते खात्वाऽस्थिकुम्भं तमवदध्युरुपैत्यृचा । कर्ता ब्रूयादिमं मन्त्रं स एवात्रोत्तरानपि ॥
उच्छ्वञ्चस्वेत्यृचा पांसून्प्रक्षिपेदवटे ततः । उच्छ्वञ्चमाना पृथिवी सुतिष्ठत्वित्यृचं जपेत्
उत्ते स्तभ्नाम्यृचा कुम्भमपिधाय कपालतः । यथा कुम्भो न दृश्येत पांसुभिः पूरयेत्तथा
ततोऽनवेक्षमागत्य स्नात्वैकोद्दिष्टमाचरेत् ॥ १२ ॥ (८९४) इत्यस्थिसंचयनम् ।

## ५ एकोद्दिष्टम् ।

एकोद्दिष्टे भवेदेक उद्देश्यो ब्राह्मणोऽपि च । अर्घ्यपात्रं भवेदेकं पाणावेकाऽऽहुतिर्भवेत्
एकः पिण्डो भवेत्तस्मिन्नहन्येव निमन्त्रणम् । दैवं धूपं च दीपं च स्वधाशब्दं च वर्जयेत्
पितृशब्दो नमःशब्दः सूक्तादिश्रावणं न च । कर्षूपूर्वमर्हणान्तं स्याद्ब्राह्मणसमीपतः
प्राचीनावीतिना कार्यं पच्छौचादि च पूर्ववत् । तिलोऽसिमन्त्रस्योहः स्यात्तूष्णीमर्घ्यनिवेदनम्
अथाऽऽच्छादनदानान्तमर्घ्यदानादि पूर्ववत् । उद्धृत्य भोजनार्थान्नादन्नमक्तं घृतेन तु ॥
देवदत्ताय स्वाहेति जुहोत्येकाहुतिं करे । अम्भोनिनयने मन्त्रस्योह इत्यादि वृत्तिकृत्
भुक्तशेषान्नमात्रेण पिण्डमेकं तु निर्वपेत् । गोत्रं नाम वदेत्प्रेतस्यायं ते पिण्ड इत्यथ
अनुमन्त्रादि सर्वं स्यादमन्त्रमिति स्थितिः । पूर्ववद्दक्षिणान्तं स्यात्संविसर्ज्योऽभिरम्यताम्
एकोद्दिष्टं नवश्राद्धवर्जितेऽयं विधिः स्मृतः । नवश्राद्धेषु सर्वं स्यादेकोद्दिष्टममन्त्रकम्
॥ ९ ॥ (८६३) इत्येकोद्दिष्टम् ।

## ६ सपिण्डीकरणम् ।

वत्सरे द्वादशाहे वा सपिण्डीकरणं भवेत् । एकः प्रेते नियोज्योऽत्र द्वौ दैवे नियमेन तु
त्रयो नियोज्याः प्रेतस्य त्रिषु पित्रादिषु द्विजाः । पितामहादिभिः सार्धं मातरं तु सपिण्डयेत्
कुर्यात्पार्वणवत्सर्वं विशेषस्त्वेष उच्यते । अर्घ्यपात्राणि चत्वारि प्रेतस्य त्वेकमिष्यते ॥
तत्पितृप्रभृतीनां तु त्रीणि पात्राणि कल्पयेत् । उपविष्टं द्विजं प्रेतमेकोद्दिष्टवदर्चयेत् ॥
प्रेतपात्रे तिलांस्तूष्णीं प्रक्षिपेन्मन्त्रतस्त्रिषु । चत्वार्यर्घ्यपात्राणि गन्धमाल्यैस्तथाऽर्चयेत्
समानीव ऋचा प्रेतपात्रं त्रिषु निनीय तत् । कृत्वाऽऽच्छादनदानान्तं भोजनार्थान्नमुद्धरेत्
करेषु पूर्ववद्धुत्वा शेषं दद्याच्च पाणिषु । शेषं पाणिगते दत्तं नाश्नीयाद्भोजनादधः ॥
अम्भोनिनयनान्तं स्यादन्नदानादि पूर्ववत् प्रेतोद्देशेन पिण्डैकं त्रीन्पिण्डानमन्त्रतस्ततः

---

१ क. अवर्णं । २ ख. पूर्वे यत् । ३ क. °न्नवत्। क्र° ।

निदध्यात्त्रिषु पिण्डेषु प्रेतपिण्डं विभज्य च। तृचेन मधुवातेति संगच्छध्वं द्वयृचेन च॥
पिण्डाननुमन्त्रणादि स्यादो स्वस्तीति विसर्जयेत्। यद्वा ग्रृह्यक्तमार्गेण सपिण्डीकरणं भवेत्
॥ १० ॥ (८८३) इति सापिण्डीकरणम्।

७ अथ शान्तिः।

गुरुर्येषां मृतास्ते वै शान्तिकर्म प्रकुर्वते। हिरण्यश्मश्रुत्रादिक्षौरमाशाश्च कुर्वते ॥ १ ॥
क्रियां मन्त्रवतीं ज्येष्ठः कुर्यादन्ये तदिष्यते। उदयात्प्राक्कृतस्नानः पचनाग्निं समेखलम्
क्रव्यादमग्निमर्धर्चेनाऽऽहरेद् याम्यां नरस्त्वथ निशि मस्मान्तमनलं प्रक्षिपन्ति चतुष्पथे
कृत्यानुरूपकरैः सव्यैरात्मानो अप्रदक्षिणम्। त्रिः परिव्रज्य तं वह्निमनवेक्ष्याऽऽगताः पुनः
स्नान्ति सर्वे ततः केशश्मश्रृप्रभृतिवापयन्त्यथ। स्नातास्ते कुम्भपात्रिकं कमण्डल्वादिकान्नवान्
कल्पयेयुस्तथा सर्वे शमीकुसुममालिनः। इध्मं च परिधींश्चापि कल्पयेयुः शमीमयान्
अरणी च शमीमय्यावनडुद्रोमयं तथा। नवनीतं स्याऽश्मान कल्पयेयुरतः परम् ॥
यावत्यः स्युर्युवतयस्तत्र वै स्वीयमन्दिरे। तावन्ति कुशपिञ्जूलान्युपकल्प्य ततः परम्
अपराह्न इहैवायमित्यर्धर्चेन मन्थयेत्। स वह्निः पचनस्तं च ज्वलयन्तः समासते ॥
वदन्तः कुलवृद्धानां कथा आशान्तरात्रतः। शान्तरात्रे गृहं प्राप्य दक्षिणद्वारपक्षतः ॥
आरम्य सिञ्चेदव्धारामोत्तरद्वारपक्षतः। तन्तुं तन्वन्नृचा धारां तां हुत्वा संततामथ ॥
प्रज्वल्यौपासनं तस्य पश्चादास्तीर्य चर्म च। प्राग्ग्रीवमूर्ध्वलोम स्यादृग्वेदानडुहं च तत्
आरोहतेत्यृचाऽमात्यांश्चर्मण्यारोहयेदथ। आज्यसंस्कारपर्यन्तमन्वाधानादि पूर्ववत् ॥
प्रथमं परिधिं प्रत्यग्निमं जीवेभ्य इत्यृचा। आदध्यादितरौ तूष्णीं दक्षिणोत्तरदेशतः ॥
स्थापयित्वोदगश्मानमन्तर्मृत्युमिति त्वथ। मन्त्रोऽथ पादमात्रः स्यादिध्माधानादि पूर्ववत्
परं मृत्यो अनुपरेत्याभिश्चतसृभिस्ततः। जुहोत्याज्याहुतीः कुर्वन्स्वाहाकारमृगन्ततः॥
यथाहानीत्यृचाऽमात्यानीक्षेतैतामतः परम्। याः स्युर्युवतयस्तास्तैः कुशपिञ्जूलकैरथ ॥
नवनीतमुपादाय पाणिभ्यामञ्जतेऽक्षिणी। अङ्गुष्ठोपकनिष्ठाभ्यामक्ष्णोर्युगपदञ्जनम् ॥
पिञ्जूलान्यनवेक्षं तु ताः क्षिपेयुः स्वपृष्ठतः। अञ्जाना युवतीरीक्षेतेमा नारीरिति त्वृचा ॥
अश्मन्वतीत्यृचाऽश्मानं कर्ताऽभिमृशति त्वथ। पश्चादभिमृशेयुस्तं तूष्णीमथेतरे पुनः ॥
अग्निनाऽनडुहा सार्धं गोमयेनाम्बुधारया। आपोहिष्ठे-त्यृ(ष्ठा तृ)चेनाविच्छिन्नया सिच्य-
मानया ॥ २१ ॥
औपासनममात्येषु नवत्सु परितस्तदा। कर्ताऽन्त्यां दिशि स्थित्वा परीमे ग मृचं जपेत्
अनड्वान्परिणेतव्यः पिङ्गलो योऽत्र वर्णतः। अथ स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥
आच्छाद्याहतवस्त्रेण रम्ये तूपविशन्ति ते। अर्कोदयेऽस्वपन्तस्ते सर्वे तत्र समासते ॥

---

१ ख. ग. स्वृचा। २ ख. ग. "श तत्र च"।

आदित्य उदिते सर्वे सौर्यादीनि जपन्ति ते। प्रकुर्वीताऽऽज्यभागान्तं संस्कृत्यान्नं जुहोत्यथ
अप नः शोशुचेत्याभिरष्टाभि प्रत्यृचं ततः। हुत्वा स्विष्टकृतं चाथ होमशेषं समापयेत्
ब्राह्मणान्भोजयित्वैतान्स्वस्त्यृद्ध्यादि च वाचयेत्। गौः कांस्यं चाहतं वासस्त्रीणि तेभ्यो
दद्यात्यथ ॥ २७ ॥ (९००) इति शान्तिकर्म।

## ८ ग्रन्थोपसंहारः।

ऋक्शाखाऽध्यायिने विप्रे तपोज्ञानक्रियान्विते। दातव्यं हितकामाय इति वेदविदो विदुः
विलोक्य सर्वसूत्राणि नानाऋषिमतानि च। ज्ञानार्थं याज्ञिकानां तु मयोक्ता गृह्यकारिकाः
उक्तान्यत्रैव कर्माणि शाकल्यवचनोऽब्रवीत् ॥३॥ (९०३) इत्युपसंहारः।

इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु चतुर्थोऽध्यायः ॥४॥

=====

समाप्ता इमा भट्टकुमारिलविरचिता आश्वलायन-
गृह्यकारिकाः।

=====

# अथाऽऽश्वलायनीयगृह्यसूत्रप्रतीकानामकारादिवर्णक्रमः ।

३

इत्याश्वलायनीयगृह्यसूत्राणामकारादिवर्णानुक्रमः समाप्तः ॥

# १ प्रथमं परिशिष्टम् ।

एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चार-
यित्वा व्रतमनुयुञ्ज्यादनुक्रोशिने ब्रूयादुत्तरमहः ।

यान्येतानि महाव्रतवर्ज्यान्यनुक्रान्तान्यहानि तानि मन्त्रब्राह्मणसूत्राध्ययनेन तदर्थ-ज्ञानेन च विदित्वा तेषामह्नामेकाहाहीनसत्रपात्वं च यो वेद स एवैतद्विद् उच्यते । ब्रह्मचारिग्रहणं यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्तुं न शक्नोति, द्वादश वर्षाण्य-ध्ययनं कुर्वन्नपि न किंचिद्ग्रहीतुं शक्नोति, तमपि ब्रह्मचारिणमनेतद्विदमप्येतानि व्रतानि ग्राहयित्वैतान्वेदभागानध्याप्याऽऽश्रमं स्वसामर्थ्यानुगुणं प्रवेष्टुं शिक्षेतेत्येवमर्थम् । अनिराकृतिनमननुस्मृताध्ययनम् । एवंविधं ब्रह्मचारिणं व्रतं ग्राहयित्वा संवत्सरावमं कालं चारयित्वा ततस्तस्मै ब्रह्मचारिणेऽनुक्रोशिने आत्मगुणयुक्तायोत्तरमहर्महाव्रतं ब्रूयात्प्रथमं ब्रूयादित्यर्थः । अहरधिकारे पुनरहर्ग्रहणस्येदं प्रयोजनं तदहर्विधायकं वेदभागमपर्वागमनपर्यन्तमनुष्ठानयोग्यं ग्राहयितव्यमिति ।

महानाम्नीरग्रे ।

महाव्रतानुवचनात्पूर्वं महानाम्नीभ्यो व्रतादेशनादिशरणान्तं कृत्वाऽनन्तरे संवत्सरे महाव्रतं ग्राहयित्वा ततोऽनन्तरे संवत्सर उपनिषद् इति क्रमः ।

उदगयने पूर्वपक्षे श्रोष्यन्बहिर्ग्रामात्स्थालीपाकं
तिलमिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ।

आचार्येणानुक्तं श्रोष्यन्ब्रह्मचार्युदगयन आपूर्यमाणपक्षे ग्रामाद्बहिर्निष्क्रम्य शुचौ देशे होष्यन्धर्मेण पार्वणवत्तिलमिश्रं स्थालीपाकं नवकृत्वो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत्, तत आचार्याय वेदयीत विज्ञापयेदित्यर्थः ।

विदिते ग्रन्थसंशयाः पृष्टा लघुमात्रा वेदपारका-
रिणः स्युरन्वारब्धे जुहुयादग्नावामिश्रयति यावि-
ष्ट ऋषीणां पुत्रो अधिराज एषः । तस्मै
जुहोमि हविषा घृतेन मा देवानां योयुवद्-
भागधेयं मो अस्माकं योयुवद्भागधेयं स्वाहा
या तिरश्ची निपद्यतेऽहं विधरणी, इति । तां
त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा ।

---

१ ख 'वर्जन्य' । २ ख. 'द्विदेहुच्य' । ३ ख विश्रयति' । ४ क. ख. 'जो वै मा' । ख. 'र्ण तद्ध्याह' । ५ घ. 'धारेणा' ।

यस्मै त्वा कामकामाय वयं सम्राड्यजामहे ।
तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब
स्वाहा । अयं नो अग्निर्वरिवः कृणोत्वयं
मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्ज-
यतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ
स्वाहा । अग्नये चानुमत्यै च स्वाहा ।
प्रदात्रे स्वाहा । व्याहृतिभिश्च पृथक् ।

विदिते श्वः स्थालीपाक इत्यवगते व्रतसंशयाद्व्रतापराधान्पृच्छेत् । ते यदि पृष्टा लघुमात्रात्कारणात्प्रवृत्तिनिमित्तादापत्कारिताश्चेत्त्वमग्ने व्रतपा असीत्यादिभिर्जुहुयान्न प्रायश्चित्तान्तरं कर्तव्यम् [ +लघुमात्राश्चेदिति पाठं लघुमात्राश्चेद्भवन्ति व्रतापराधा इत्यर्थः । अथ चेत्कामकृता महान्तश्च व्रतापराधा ] गुरुप्रमाणकं प्रकृतिकारणं बुद्धिपूर्वं वा करोत्यपराधांस्तत्तदनुरूपं प्रायश्चित्तं कारयित्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्णे एवं श्रावयेत् । विदित इति वचनं श्वः स्थालीपाक इति विदित एव व्रतसंशयप्रश्नप्रवृत्त्यर्थम् । अन्वारब्धे ब्रह्मचारिण्याचार्यो जुहुयादग्नावग्निरित्येवमादिभिरत्रैव पठितैर्मन्त्रैर्व्याहृतिभिश्च । पृथगिति समस्तव्याहृतिनिवृत्त्यर्थम् ।

हुत्वाऽऽहैतं स्थालीपाकं सर्वमशानेति ।

हुत्वेति वचनमेतैर्मन्त्रैर्हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैव निधाय श्रपणात्संपेषितव्यमित्येवमर्थम् । एतं स्थालीपाकं सर्वमशानेत्यत्र संप्रैषः । ततश्चरुशेषं ब्रह्मचारी सर्वमश्नीयात् ।

मुक्त्वा[illegible]पामञ्जलिपूर्णमादित्यमुपस्थापयेत्त्वं
व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छ
केयं तन्न शकेयं तन्न राध्यतामिति ।

मुक्त्वान्नमिति वचनं न केवलमशने संप्रैष एवाशनमपि कर्तव्यमेवेत्येवमर्थम् । उ[illegible] [ पू[illegible] [illegible]ऽऽ[illegible]मिति [illegible]त्येवमर्थम् । ततो ब्रह्मचार्यञ्जलिः पूर्णो[illegible]ऽऽ[illegible] मन्त्रे [illegible]पनिष्ठेत् ।

समाप्य संमील्य वाचं यच्छेदस्तकालमभिसमी-
क्षमाणो यदा समापिप्यादाचार्येण ।

---

+ चतुश्चिह्नान्तर्गतो ग्रन्थो घ पुस्तकस्थः।

---

१ ख. ग. ड च छ. °म् । अथ चेद्गुरु° । २ घ. संपेषि° । ३ ग °च हुतपे° । ४ घ. °सिर्मन्त्रैराऽऽदित्यमुप° ।

समाप्यवचनमुपस्थानमन्त्रं समाप्यानन्तरं संमील्य वाचं यच्छेत्न कालविक्षेपं कुर्या-दित्येवमर्थम् । वाग्यमनं कुर्वन्यस्मिन्काल आचार्येण× सह समवायो भवेत्तं काल मनसा ध्यायन्वाग्यमनं कुर्यात् ।

अयं स काल इत्याह—

एकरात्रमध्यायोपपादनात् ।

एकरात्रं कालमेवाऽऽसित्वाऽनन्तरे दिवस आचार्येण सह समवायं गमिष्यामीति ध्यायेत् । कुतः । अध्यायोपपादनात् । अध्यायः स्वाध्यायो महानाम्नीमन्त्र इत्यर्थः । तस्योपपादनात् । उपपादनमन्यमुपेत्य तस्याध्ययनस्य वादनं शिष्यमुपादायाध्यापन-मित्यर्थः । एतदुक्तं भवति—य एकरात्राध्ययनेन महानाम्नीरध्येतुं शक्नोति स एक-रात्रं ध्यायन्वाग्यमनं कुर्यादिति ।

त्रिरात्रं वा नित्याध्यायेन ।

त्रिरात्रं चैवमासीत यो नित्याध्यायेनाध्येतुं शक्नोति स त्रिरात्रमेवाऽऽसित्वा चतु-र्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः ।

तमेव कालमभिसमीक्षमाण आचार्योऽहतेन
वाससा त्रिः प्रदक्षिणं शिरः समुखं वेष्ट-
यित्वाऽऽहैतं कालमेवंभूतोऽस्वपन्भवेति ।

तमेव कालं प्रतिपद्यमान आचार्यो यः कालो ब्रह्मचारिणा संकल्पित इत्यर्थः । अह-तेनानिर्वासितेन धौतेन वाससा ब्रह्मचारिणः शिरो मुखेन सहितं त्रिः प्रदक्षिणं वेष्ट-यित्वा यथा न तद्वासः पतेत्तथोपायं कृत्वा ब्रूयादाचार्यः । एतं कालमिति संकल्पित-प्रदर्शनार्थत्वादेकरात्रं कालमेवंभूतोऽस्वपन्भवेति त्रिरात्रं कालमिति वा ।

तं कालमस्वपन्नासीत ।

यः संकल्पितः कालस्तस्मिन्काले सर्वदाऽस्वपन्भवेद्ब्रह्मचारी ततो गुरुः स्विष्टकृदा-दिहोमशेषं समापयेत् ।

अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रति-
ष्ठाप्याऽसिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः

× ग. सह संवास. ।

१ च. °पवाद° । २ घ. ङ. च. छ. °पवाद° । ३ घ. ङ. च. छ. °पवाद° । ४ घ. ङ. च. छ. °पवाद° । ५ ग. घ. ङ. च. छ. °ति । अध्ययनमध्यायः, नित्यमध्यायः, नित्यं संतत-मित्यर्थः । एतदुक्तं भवति—यो बहुभिरेवाहोभिरध्येतुं शक्नोति स । ६ क. ग. ङ. च. छ. तत्र स्वि° ।

कृत्वा वत्सतरीं प्रत्यगुदगसंश्रवणे बद्ध्वा ।

आचार्याय वेदयीतेति शेषः । द्वितीये चतुर्थे वा दिवसे प्राप्त आचार्योऽनुवर्त्स्यति । तस्मिन्ननुवक्ष्यमाणे सत्यपराजितायां दिशि बहिर्ग्रामाच्छुचौ देश उल्लेखनादि कृत्वाऽग्निं प्रतिष्ठाप्य तस्योत्तरतोऽग्न्यादीनिवाय तस्यैव च प्रत्युगुदग्यो देशास्तस्मिन्वत्सतरीं बध्नाति । यथाऽग्निसमीप उच्यमानः शब्दो वत्सतर्या न संश्रूयते तथा बध्नीयात् । एतावत्कर्म ब्रह्मचारिणः स्वयं कश्चित्करोति । एतावति कृत आचार्याय वेदयीत ।

पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः ।

एवं प्रागग्रेषु तृणेषूपविशेत् ।

ब्रह्मचारी लेपान्परिमृज्य प्रदक्षिणमग्निमाचार्यं च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रत्यग्दक्षिणाभिसमीक्षमाणः ।

मुखगतांल्लेपाञ्शरीरगतांश्च शोधयित्वाऽग्निमाचार्यं च प्रदक्षिणं कृत्वाऽऽचार्यं विधिवदुपसंगृह्य पश्चादाचार्यस्योपविशेत्तृणेष्वेव प्रागग्रेषु प्रत्यग्दक्षिणां दिशमभिसमीक्षमाणः।

पृष्ठेन पृष्ठं संधाय ब्रूयान्मनसा महानाम्नीर्भो ३ अनुब्रूहीति ।

पृष्ठं नाम शरीरस्य बहिःप्रदेशः । ब्रह्मचारी स्वपृष्ठदेशेनाऽऽचार्यस्य पृष्ठदेशं संनिधायाऽऽसित्वा मनसैवं ब्रूयान्महानाम्नीर्भो अनुब्रूहीति ।

पुनः पृष्ट्वाऽनुक्रोशिने संमीलयेवानुब्रूयात्सपुरीषपदाःस्त्रिः ।

अस्मिन्नपि काले मनसैवायान्पृष्ट्वा पूर्ववच्चेद्ब्रूयात्स्वयमपि संमील्यैव ताः पुनर्नवर्चः, नव च पुरीषपदानि ताः सर्वास्त्रिरनुब्रूयात् । [* ' विदा मघवन् ' इत्याद्या नवर्चः । ' एवाह्येवा॥हि ' इत्यादीनि नव पुरीषपदानि च त्रिर्ब्रूयात् ]।

अनुक्त्वोन्मुच्योष्णीषमादित्यमीक्षयेन्मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे ।

इतिकारा(न्)ध्याहारेण सूत्रच्छेदः । सर्वत्र शिष्यस्ययोगे ' आदित्यमुपतिष्ठस्व ' ' आदित्यमीक्षस्व ' ' पिण्डमश्नान ' इत्येवमादिसैषं ब्रूयात् ।

मित्रस्य चक्षुषाऽनुवीक्ष इति दिशः संभाराः । पुनरादित्यं मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं चक्षुर्हेतुर्च्छत्विति ।

भूमिमुपस्पृशेदप इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वति । मा ते

* चतुर्थिक्रम्तर्गतोऽयं ग्रन्थपुस्तकस्य एव ।

१ ग. 'घृणि

स्योन संदृशि । भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः स्तुषे जनं सुव्रतं नव्यसीभिः कया नश्चित्र आभुवदिति तिस्रः स्योना पृथिवि भवेति । समाप्य समानं संभारवर्जम् ।

यदिदं महानाम्न्यध्ययनमुक्तं तत्समाप्योत्तरयोरपि महाव्रतोपनिषदारण्यकयोर्व्रतमनुयुज्य श्रवणान्तं महानाम्नीव्रतेन समानरूपं कर्तव्यम् । अयमेव तयोर्विशेषः पूर्वस्मात् । संभारवर्जमिति । संभारो नाम ' श्रोष्यन्नहिर्ग्रामात् ' इत्यारभ्य ' पुनरादित्यं मित्रस्य त्वा चक्षुषा ' इत्येवमन्तं वर्जयित्वेत्यर्थः । एतदुक्तं भवति—महाव्रतोपनिषदारण्यकयोर्व्रतमनुयुज्य श्रवणान्तं संवत्सरादूर्ध्वमुदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा श्रवणमेव कर्तव्यं नान्यद्धोमादीनि ।

एष द्वयोः स्वाध्यायधर्मः ।

एष एव महाव्रतोपनिषदोर्वेदभागयोरध्ययनविधिः । यो महानाम्नीनामध्ययनविधिरुक्तो व्रतमनुयुज्य संवत्सरावमं चारयित्वोदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वाऽऽचार्यसकाशात्त्रिः श्रावाऽनुप्रवचनीयं कृत्वा ततोऽध्ययनं [ +कर्तव्यमिति । एतदनयोरप्यध्ययने ] संपादनीयमित्यर्थः ।

आचार्यवदेकः ।

अयमपि विशेषो महाव्रतोपनिषदोरध्ययने भवति । यद्येकोऽधीयीत । यथाऽऽचार्योऽपराजितां दिशमभिसमीक्षमाणो ब्रूयादेवमेकश्चेच्छिष्यस्तामेव दिशमभिमुखोऽधीयीत । यदि द्वौ बहवो वा तदा नायं नियम आदरणीयः । अत एव ज्ञायते—एको द्वौ बहवो वाऽधीयीरन्निति । अध्ययन एवायं नियमः श्रावणे त्वेक एव , व्रतादेशनादेरनुप्रवचनीयान्तसंस्कारस्य तन्त्रसिद्धौ प्रमाणाभावात् ।

फाल्गुनाद्याश्रवणाया अनधीतपूर्वाणामध्यायः ।

एष महानाम्न्यादीनामध्ययनकाल उच्यते । श्रवणमात्रमेवं कृत्वा पूर्वमनधीतवन्तो ये तेषामयं कालः । फाल्गुनमासमारभ्य श्रावण्याः पौर्णमास्या यः कालः स तेषामध्ययनकालः ।

तेष्वाध्यायोऽधीतपूर्वाणामधीतपूर्वाणामधीतपूर्वाणाम् ॥ १४ ॥

इत्याश्वलायनश्रौतसूत्रोत्तरषट्के द्वितीयोऽध्यायः ॥ २ ॥

येऽधीतपूर्वास्तेऽस्मिन्कालेऽधीयीरन् । श्रावणी पौर्णमासी परावधिस्तैषी पौर्णमासी पूर्वावधिर्यस्य कालस्य स काल इति । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ १४ ॥

+ धनुश्चिह्नान्तर्गतोऽयं ग्रन्थो घ. च. पुस्तकस्थः ।

१ च. °ज्य धाव° । २ क. ग. घ. ङ. ञ. °र्वेनमि° । ३ क. °ज्य श्राव° । ४ घ. ङ. च. ञ. °र्ये च कृ° । ५ क. °त ।तथाऽऽ ।

## २ द्वितीयं परिशिष्टम् ।

### आश्वलायनसूत्रस्थवृत्तिस्थविषमशब्दानामर्थकोशः ।

---

अग्निहोत्रम्—( १ । २ । २ ) अग्निहोत्रं नाम होमस्य नामधेयम् । अग्नये होमो यस्मिन्कर्मणि तदग्निहोत्रम् । व्यधिकरणबहुव्रीहिः । द्रव्ये च ।

अतिदेशः—( १ । ३ । १ वृ० ) एकत्र श्रुतस्यान्यत्र संबन्धः । 'यथा-गुरुवद्गुरुपुत्रे वर्तितव्यम् ।' 'प्रकृतिवद्विकृतिः करणीया' । इत्यादि । 'अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंहतेः । अन्यत्र कार्यतः प्राप्तिरतिदेशः स उच्यते ॥' अथवा—'प्रकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु । धर्मप्रवेशो येन स्यादतिदेशः स उच्यते ॥' ( न्या० को० )

अनमीवः—( १ । १६ । ९ ) आरोग्यकारकः ।

अपवरकादि—( २ । ८ । १५ ) देवगृहमहानसाद्यन्तर्गृहादि । 'दीपोऽपवरकस्यान्तर्वर्तते तत्प्रभा बहिः' ।

अपसलैः—( २ । ९ । २ ) अपसव्यम् । अपसलैरित्यार्षः प्रयोगः । कोशे तु 'अपसलवि' इतिशब्दो दृश्यते । अव्ययमिदम् । अपपूर्वात्सलतेरविप्रत्ययः । 'प्रदेशिन्यङ्गुष्ठयोरन्तराऽपसलवि, अपसव्यं वा तेन पितृभ्यो ददाति' इति श्राद्धतत्त्वे माट्टमाष्यधृतगृह्यम् । पारस्करगृह्यसूत्रे—'आसिञ्चत्यपसलवि त्रिः' ( का० ३ ख० ७ ) इत्यत्र वर्ततेऽयं शब्दः ।

अपार्थकम्—( १ । २ । १ वृ० ) अपगतोऽर्थो यस्मात्तदपार्थकम् । निष्प्रयोजनं व्यर्थमित्यर्थः ।

अभिनिष्ठानः—( १ । १९ । ९ वृ० ) वर्णः । अत्र विसर्जनीयः । अभिनिपूर्वस्य स्तनेर्घञ् । 'अभिनिसः०' ( पा० सू० ८ । ३ । ८६ ) इति षत्वम् । अभिनिष्ठान इति वैदिकानां पाठः ।

अभिमारुकः—( ४ । ९ । ११ ) नाशकः ।

अभ्यात्मम्—( १ । १ । १ वृ० ) आत्मनोऽभि नामामत इति अभ्यात्मम् ।

अवार्याः—( २ । १ । ८ ) कर्तुः कौटुम्बिवर्गः पुत्रादिः ।

अवका—( २ । ८ । १४ ) शैवालम् । ( शा० प० भाष्य० ) वनस्पतिविशेष इति केचित् । मातृदत्तस्तु 'अवका तृणवन्तीति, अनर्थान्तरमिति स्थितम्' । ( स० गृ० सू० २० । १ वृ० ) ।

**अवभृथः**—( १ । १० । २४ ) अवभ्रियतेऽनेनेत्यवभृथः । प्रधानयज्ञसमाप्त्यङ्गविशेषः । यज्ञाङ्गभूतं यज्ञान्तस्नानं च ।

**अविदासी**—( २ । १ । ९ ) शाश्वत्, अविशुष्यत् । विदस्यति-उपक्षिणोतीति विदासी । तथा न भवतीत्यविदासी । दसु उपक्षये इत्यस्माद्विपूर्वकाण्णिनिः ।

**अहीनः**—( १ । २१ । १४ ) अहर्गणसाध्यसुत्याको यज्ञविशेषः । ' अह्नः खः क्रतौ ' पा० ४ । २ । ४३ पा० सू० ) ।

**आकूतम्**—( १ । २ । २ वृ० ) अभिप्रायः, हेतुः, आशयः ।

**आञ्च्य**—( १ । २१ । ४ । ) ससंकोचं निपात्य । आङ्पूर्वाद्गत्यर्थकादञ्चतेर्ल्यप् । अञ्चु ' गतौ याचने चेत्यस्माद्धा ।

**उच्चावचः**—( १ । ७ । १ ) उदक्च अवाक्च उच्चावचः । मयूरव्यंसकादित्वात्साधुः । अनेकप्रकारकः, उत्कृष्टापकृष्टो वा । यथा मनुः—' उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ( ६ । ७३ ) ' उत्कृष्टापकृष्टेषु देवपश्वादिषु ' इति कुल्लूकः ।

**उद्दालकव्रतम्**—( १ । १९ । ६ वृ० ) उपनयनकालातिक्रमे सति प्रायश्चित्तरूपः कर्मविशेषः । तत्स्वरूपं यथा—मासद्वयं यावकपानं, मासं पयः, मासार्धमामिक्षा, अष्टरात्रं घृतं, षड्रात्रमयाचितं, त्रिरात्रमब्भक्षता, अहोरात्रमुपवासः ।

**उपनयेत्-उपनयनम्**—(१।१९।१) योगरूढोऽयं शब्दः । त्रिधा हि शब्दप्रवृत्तिः । यौगिको रूढो योगरूढश्चेति । यो हि शब्दः केवलमवयवार्थमनुसृत्य वर्तमानार्थस्य बोधको भवति स यौगिकः शब्दः । यथा—पाचकः । शब्दोऽयं पचतीति पाचक इत्येवमवयवार्थमनुसृत्य ये ये पाककर्तारस्तेषां सर्वेषामपि वाचको भवति । अतः स शब्दो यौगिक इत्युच्यते । यो हि पुनः केवलं लौकिकमेवार्थं बोधयति स रूढ इति व्याह्रियते । यथा—कुशल. । ' कुशान् लाति-छिनत्ति ' इत्यवयवार्थमनुसृत्यैव लोकप्रथितं ' प्रवीणः, कृती ' इत्यर्थमवगमयति, अतः स शब्दो कुशले रूढः । यश्चावयवार्थमनुसृत्य वर्तमानस्य लौकिकार्थस्य बोधको भवति स योगरूढ इति निगद्यते । यथा—पङ्कजम् । पङ्काज्जातमित्यवयवार्थबोधको भूत्वाऽयं पङ्कजशब्दो लौकिकं कमलशब्दार्थमभिधत्तेऽतः स योगरूढ इति ज्ञेयः । प्रकृते तु उपनयनशब्दो योगरूढ इति गायत्र्युपदेशार्थमाचार्यसमीपनयनमित्यर्थेनैव स वाचको भवति ।

**उपनिषदि-गर्भलम्भनम्**—( १ । १४ । १ ) अत्रेदमवगन्तव्यम्-वृत्तिकृतोपनिषदुल्लेखो न व्यधायि । ' एतानि कस्यांचिदुपनिषद्याम्नातानि ' इत्यादि वृत्तिकृदुल्लिखेन बृहदारण्यकोपनिषदि षष्ठाध्याये चतुर्थे ब्राह्मणेऽयं विषयो महीयसा विस्तरेण विवृत. । स तु मूलत एवावसेयः । अन्यत्रापि विषयोऽयमुपनिषत्सु दृष्टि-

प्रथमवतरति । यथा—ऐतरेयोपनिषदि द्वितीयाध्याये प्रथमे खण्डे ' ॐ पुरुषे ह वा अयमादितो गर्भो० ' इत्यादिना ग्रन्थेन । मूल एव द्रष्टव्यः ।

उपस्थः—( ३ । ८ । १ ) उत्सङ्गः, अङ्कः । यद्यपि ' उपस्थो वक्ष्यमाणयोः ' इति नामलिङ्गानुशासनादुपस्थशब्दो वराङ्गार्थत्वेन प्रसिद्धस्तथाऽप्यस्मिन्ग्रन्थे तु स शब्द उत्सङ्गाद्यर्थवाचक इति ज्ञेयम् । अत एव ' उपस्थे शम्याम् ' ( ४।१ १२ ) इत्यस्य व्याख्याने ' ऊर्वोरूर्ध्वप्रदेश उपस्थः ' इति वृत्तिकृतोक्तम् । ' पश्चात्कारयिष्यमाणो मातुरुपस्थ० ' इत्यस्य वृत्तावपि ' मातुरुपस्थ उत्सङ्ग इत्यर्थः कृतः । ' सीदन्तु पुत्रा अदितेरुपस्थम् । स्तीर्णं बर्हिर्हविरद्याय देवाः ( तैत्ति० ब्राह्म० अ० २ प्र० ८ अनु० २ द० २ ) 'उपस्थम्' इत्यस्यार्थः श्रीसायणाचार्यैः समीपे स्थातुं योग्यम् ' इतिप्रकारकः कृतः । 'रथोपस्थ उपाविशत्' ( भ० गी० १ । ४७ ) इत्यत्रोपस्थशब्द उपर्यर्थवाचकः ।

ऊवध्यम्—(४।९।२१) उदरस्थमर्धजीर्णमशनम् । ( वृ० भा० १ । १ । १) ' यदूवध्यमुदरस्यापवाति ' ( ऋ० सं० २ । १ । ९ ) इत्यत्र ऊवध्यपदस्य विद्यारण्यस्वामिभिः ' ईषज्जीर्णं तृणं पुरीषमित्युक्तम् । अर्धजीर्णमन्नमपरिपक्वपुरीषशब्दवाच्यम् ( तै० ब्रा० भाष्यम् १ । ४ । २ )।

ऊवध्यगोहम्—( ४ । ९ । २१ वृ० ) पुरीषगूहनस्थानम् । ( ऐ० ब्रा०-प० २ ख०-६ ' ऊवध्यगोहं पार्थिवम् ' इत्यत्र सायणभाष्ये ।

एकव्रतः—( १ । २१ । ७ ) एकसंकल्पः । एकमनस्कः ।

कसम्—( २ । ४ । ९ वृ० ) शुष्कतृणम् ।

काश्मर्यमयी—( १ । ११ । ८ ० ) काश्मर्यस्य विकारो काश्मर्यमयी । काश्मर्यः ' शिवणी, ' शिवण ' इत्याख्यो वृक्षः । ' श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः' इत्यमरः ।

कुशसूना—( ४ । ९ । २० ) दर्भैः परिवीय निर्मितमास्तरणम् ।

गोदानम्—( १ । १८ । १ ) ब्राह्मणादीनां षोडशादिवर्षेषु कर्तव्यः केशान्ताख्यः संस्कारविशेषः । गावो लोमानि दीयन्ते खण्ड्यन्तेऽस्मिन्निति गोदानम् । ' पुंस्त्रियोः स्वर्गरजःश्मश्रुरश्मिदृग्बाणलोमसु ' इति केशवः ।

गौणी—( २ । ४ । १२ वृ० ) लक्षणाभेदः । सादृश्यादिगुणागता गौणी । यथा—अग्निर्माणवक इत्यादौ, अग्निसादृश्यादिनाऽग्न्यादिपदस्य गौणी वृत्तिः' । शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिरिति मीमांसकाः । सा च तदतिरिक्ता नेति नैयायिकाः ।

चमसः—( १ । १ । १ पृ० ) यज्ञियपात्रविशेषः । मध्याकुञ्चात्मकश्चतुरस्रः ।
'स्रुक्तुण्ड आसीत् स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे' ( भागव० ३ । १३ । ३६ )

चैत्ययज्ञः—( १ । १२ । १ ) कस्मैचिद्देवतायै चित्तेन प्रतिज्ञातो यज्ञश्चैत्य-यज्ञः । पशुरथाटीनाकारैः । 'नवनकेळेळा' इति भाषा । देवपूजादिर्वा ।

चौलम्—( १ । १७ । १ ) चूडा—चूला—प्रयोजनकम् । चूडाकरणम् । संस्कार-विशेषः ।

जपादि—( १ । १९ । ११ ) 'जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु' 'मन्त्रान्ताः कर्मकरणाः' ( आ० श्रौ० सू० १ । १ । २०-२१ ) इत्यत्र वृत्तिकृता जपादीनां षण्णां लक्षणमुक्तं तदेवात्र लिख्यते ।

जपमुच्चारणं विद्यात्करणार्थमपि तद्भवेत् ।
अर्थतः कार्यलाभश्चेदर्थ एव क्रतोर्भवेत् ॥
मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
द्रोपिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ।
अद्भिः संस्पर्शनाधिक्यात्तदेवाऽऽप्यायनं स्मृतम् ॥
उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम् ।
ग्राह्यं कार्यं यदेतेषु मन्त्रकाले क्रियेत तत् ॥
कर्मणः करणास्ते स्युर्विहितार्थप्रकाशनात् ।
मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥
इदं कार्यमनेनेति न कश्चिद्दृश्यते विधिः ।
लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः ॥
जपादीनामुदाहरणानि—

जपस्य—शिरः परिगृह्य जपति अङ्गाद० ( १।१९।११ )
अनुमन्त्रणस्य—शं नो देवी० ( ४।७।८ )
केवलमन्त्रस्य—कस्य ब्रह्मचार्यसि—( १।२०।७ )
उपस्थानस्य—मयि मेधां० ( १।२१।४ )
अभिमन्त्रणस्य—अन्नमये ( ३।५।९ )
कर्मकरणमन्त्रस्य—आनः प्रजां० ( १।८।९ )

आध्यायनस्य—चरौ श्रप्यमाणे तापादुत्सिक्ते तमुत्सिक्तं चरुमाज्येनाऽऽप्याय- यत्याप्याय० इति ।

ततः—(२।९।८) पिता । 'स होवाच पितरं तत कस्मै मां दास्यतीति' (कठोपनि० १।४)

'तत्कालाश्चैव तद्गुणाः' इति न्यायात्—(२।३।१ वृ०) न्यायस्वरूपं तु तद्गुणास्तत्काला एव भवन्ति । तस्य प्रधानस्य गुणा अप्रधानभूतकर्माणि, तत्काला नाम तस्य प्रधानस्यैव कालो येषां ते तत्काला भवन्ति । तेषामप्रधानानां स्वतन्त्रः कालो नास्ति । किंतु यः प्रधानकालः स एव गौणानां काल इत्यर्थः । प्रकृते तु अस्तमिते सूर्ये होमो विधीयते । तदङ्गभूतानि उपलेपनादीन्यपि अस्तमित आदित्य एव कर्तव्यानि न तु अहनीत्यर्थः ।

तन्त्रम्—(१।१।२ वृ०) अङ्गसमुदायः । अयं भावः—यत्र प्रधानकर्मणां युगपद्भावः (सह प्रयोगः) तत्राऽऽरादुपकारकाणामङ्गानां तन्त्रं सकृदनुष्ठानं भवति । न तु प्रतिप्रधानं पृथक्पृथक् । यद्धि सकृत्कृतं बहूनामुपकरोति तत्तन्त्र- मित्यर्थः ।

तिल्वकः—(१।७।९) लोध्रवृक्षः । 'तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरी- टकः' इति राजनिघण्टु ।

द्रप्सम्—(१।१७।७) श्लथं दधि । दृप्यन्ति अनेनेति । दृप—हर्षमोहनयोः । बाहुलकात् सः ।

द्वार्याभिमर्शनवत्—(१।१९।३ वृ०) द्वार्ये यज्ञमण्डपद्वारस्य पार्श्वस्थितौ स्तम्भौ । तयोः अभिमर्शनं स्पर्शस्तद्वत् । द्वारि भवे द्वार्ये । 'द्वार्ये संमृश्यैवमपरावुप- तिष्ठन्ते' (श्रौ० सू० ९।३) 'द्वार्ये पूर्वद्वारस्थूणे' इति वृत्तिः ।

पारिव्याधः—(२।७।९) 'पागारा' इत्याख्यो वृक्षः । 'कर्णिकारः पारिव्याधः' इत्यमरः ।

पाकयज्ञः—(१।१।२) पाकसाध्यो यज्ञः । शाकपार्थिववत्समासः । पाकयज्ञस्य स्वरूपं त्वेवम्—औपासनहोमो वैश्वदेवं पार्वणमष्टका मासिश्राद्धं सर्प- बलिरीशानबलिरिति सप्त पाकयज्ञसंस्था । बौधायनोऽप्याह हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकसंस्थाः । अन्ये त्वाहुः— अल्पयज्ञाः पाकयज्ञा इति ।

पिञ्जूलम्—(१।१७।८) कुशावर्तिः, मृदुकुश इत्यर्थः ।

पुरोडाशः—( ३ । १ । २ वृ० ) पुरो दाश्यते दीयत इति पुरोडाशः। निपातनाद्दस्य डः। तण्डुलादिचूर्णनिर्मितकूर्माकृतिहविर्विशेष.।

पृषदाज्यम्—( ४ । १ । १७ ) पृषद्भिर्दधिबिन्दुभिः सहितमाज्यम्। यथा पुरुषसूक्ते—'तस्माद्यज्ञात्सर्वहुत. संभृतं पृषदाज्यम्'. । पृषदाज्यं दधिमिश्रमाज्यमिति भाष्ये सायनः।

प्रतिप्रसवः—( ४ । १ । ७ वृ० ) प्रतिषिद्धैकदेशस्य पुनर्विधानम्। निषिद्धस्य पुनः प्राप्तिसंभावना वा। यथा—'न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्'। भक्ष्येष्वपि समुद्दिष्टान्सर्वान्पञ्चनखांस्तथा॥ श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ( म० स्मृ० ५। १७-१८ ) अत्र निषिद्धस्य सर्वपञ्चनखमांसभक्षणस्यैकदेशस्य पञ्चनखमांसभक्षणस्य विधानम्। यथा वा—स्मार्तानां मते एकादश्यां निषिद्धस्य भोजनस्य एकादशीश्राद्धादौ प्राप्तिः संभाव्यते, इति। 'भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः। शशश्च'. (या० स्मृ० १। १७७ ) 'श्वाविच्छल्यकशशकच्छपगोधाः' ( वसिष्ठः ) 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव। शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः ( वा० रा० कि० का० १७। ३९ ) अत्रायं विशेषः- मनुमते पञ्चनखानां षट्कं भवति'। याज्ञवल्क्य—वसिष्ठ—वाल्मीकिमते तु पञ्चसंख्यैव भवति।

प्रमायुकः— ( २।७।१० ) अल्पायुष्कः। 'न हास्य प्रियं प्रमायुकं भवति'। ( बृ. १.४।८ ) प्रमायुकं प्रमरणशीलमिति तद्भाष्यम्।

प्रासनम्—( १ ३।३ वृ. ) प्रक्षेपः।

ब्रह्माञ्जलिकृतः—( ३।१।११ ) ब्रह्मणे वेदपाठार्थं कृतोऽञ्जलिर्ब्रह्माञ्जलिः। कृतो ब्रह्माञ्जलिर्येन स ब्रह्माञ्जलिकृतः। 'वाहिताग्न्यादिषु' ( पा० सू० २।२।३७) इत्यनेन कृतशब्दस्य परनिपातः। यथाऽऽह मनुः—' अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुख.। ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः॥ ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा। संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥' (२। ७०, ७१ )

भक्तशरणम्—( २ ७।७ ) भक्तस्य तण्डुलसितसूपशाकादिभक्ष्यभोज्यपदार्थजातस्य शरणं गृहम्। पाकस्थानमित्यर्थः।

भक्तिमात्रत्वात्—(१ २।२ वृ०) भक्तिरेव भक्तिमात्रम्। तस्य भावो भक्तिमात्रत्वम्। भक्तिर्नाम गौणी वृत्तिरुपचारो वा। उपचारो नाम शब्दार्थस्त्यागेन लक्षणयाऽन्यार्थबोधनम्। यथा मञ्चाः क्रोशन्ति, अग्निर्माणवक इत्यादौ।

**मधुपर्कः**— ( १।२४।१ ) मधुना पर्कः संपर्को यस्य सः (पृची घञ्) पूजान्तर्गत एकः प्रकारः। ऋत्विग्वरादिपूजनेऽवश्यं प्रयोक्तव्यः। 'आज्यं दधिमधुमिश्रं मधुपर्कं विदुर्बुधाः।' (तन्त्रसारः) तद्दाने मुद्रा यथा-'संयुक्तानामिकाङ्गुष्ठा त्रिकोऽन्याः संप्रसारिताः। मधुपर्के च सा मुद्रा विद्वद्भिः परिकीर्तिता। (हरिभक्तिविलासः)।

**मृगतीर्थसंज्ञावत्**—( १।१।३ सू. ) मृगतीर्थमिति संज्ञा मृ० ती० संज्ञा। तया तुल्यं मृ. ती. संज्ञावत्। मृगतीर्थलक्षणं तु 'मृगतीर्थमित्येतदाचक्षते' (आ. श्रौ. सू. अ. ९ ख. ११ सू. १) इत्यत्र सूत्रकारैरेवोक्तम्। अयं भावः—सवनेषु समाप्तेषु, ऋत्विजः स्वकीयधिष्ण्यस्याऽऽग्नेयेन गत्वाऽपरया द्वारा निष्क्रम्योत्तरां वेदिश्रोणिमभिनिःसर्पन्ति। येन देशेन तेऽभिनिःसर्पन्ति स देशो मृगतीर्थमित्यर्थः।

**मेधाजननम्**—( १।२२।१८ ) मेधते संगच्छतेऽस्यां सा मेधा। धारणावती बुद्धिः। तस्या जननं प्रादुर्भावो यस्मात्तन्मेधाजननम्। उपनीतस्य मेधाधारणोत्पादनार्थं क्रियमाणं कर्म। 'पळसुवा' इति लोके।

**योगः**—( २।४।१२ सू० ) समुदायशब्दस्यावयवशक्तिर्योगः। विस्तरस्तूपनयनशकरे द्रष्टव्यः।

**लक्षणा**—( २।४।१२ सू० ) शक्यसंबन्धः। यथा-गङ्गायां घोष इत्यादौ गङ्गापदस्य प्रवाहसमीपे तीरे लक्षणा। 'मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वाऽसौ लक्षणाशक्तिरर्पिता' (सा० द० प० २ श्लो० १३) इति वचनेन सा द्विधा। प्रयोजननिरपेक्षा प्रयोजनसापेक्षा चेति। तत्राऽऽद्या यथा—मञ्चाः क्रोशन्तीति। इयं प्रयोजनाभावेऽपि प्रवर्तमानत्वाद्रूढलक्षणा। द्वितीया यथा—गङ्गायां घोष इति। इयं च पावित्र्यादिप्रयोजनापेक्षया प्रवर्तमानत्वात्केवललक्षणा। मुख्यार्थानुपपत्तिर्लक्षणाबीजम्।

**वङ्कुष्या-की**–( १।८।१० सू० ) 'शांक' संज्ञकं धान्यम्।

**वीप्सा**—( १।८।७ सू० ) क्रियागुणद्रव्यैर्युगपद्व्याप्तुमिच्छा।

**वीरणम्**—( २।७।४ ) तृणभेदः। 'काळा वाळा' इति प्रथितः 'स्याद्वीरणं वीरतरम्' इत्यमरः।

**वीवधम्**–( १।१२।१ ) उभयतोनिबद्धशिक्यं स्कन्धवाह्यं काष्ठम्। 'कावड' इति भाषा।

**वृकः**—( ४।३।२० ) कुत्सितो मांसभक्षकविशेषः। 'पार्व्हिम' इत्यन्यो भागो वा।

व्यञ्जनत्वम्—( १।११।१ वृ० ) विशेषेण अज्यते इति व्यञ्जनम् ( वि+अ-ञ्ज+ ल्युट् ) तस्य भावो व्यञ्जनत्वम् । ओदनभोजनोपकरणं व्यञ्जनम् । यथा सूप-शाकादि ।

व्युद्धारः—( १।१०।११ ) भिन्नभिन्नपात्रे ग्रहणम् ।

शम्या—( ४।२।१२ ) खदिरवृक्षनिर्मिता षट्त्रिंशदङ्गुला ।

शाकः—( २।७।१ ) 'साग' इत्याख्यो वृक्षविशेषः ।

शामित्रः—( १।११।७ ) शमितुरयं शामित्रः । पशुश्रपाचकोऽग्निः । अयमग्नि-र्यस्मिन्मण्डपे निधीयते तं मण्डपं शामित्रायतनमिति ब्रुवन्ति ।

शीपालम्—( २।८।१४ ) 'नीळ' इत्याख्यः शैवालसदृशो वस्तुविशेषः ।

'सकृदेव कृते कृतः शास्त्रार्थः' इति न्यायात्—( २।३।२ वृ० ) न्याय-स्वरूपं त्वित्थम् । कस्मिन्नपि शास्त्रार्थे शास्त्रेण कथिते विधौ सकृदेकदैव विहिते सति पुनस्तस्य विधानमशास्त्रीयम् । प्रकृतस्थले पौर्णमासीसाहचर्यादित्यवरोहणकर्मणि प्रथमशुक्लचतुर्दश्यां कृते सति प्रागुक्तन्यायेन कृष्णचतुर्दश्यां वा पुनस्तत्करणमशा-स्त्रीयम् । यत्र तु वीप्सादिना कथनं तत्र पौनःपुन्येन विधानं त्वावश्यकमेव । सत्या-मपि वृद्ध्यां द्वितीयशुक्लचतुर्दश्याम् ।

समवत्तधानचमसः—( ४।५।११ ) इडापात्रम् । इडा नाम यागावशेषभूत-पुरोडाशादिः । स यस्यां स्थाप्यते सा इडा । पात्रविशेषः ।

समाख्या—(२।१।२ वृ०) समाख्यायतेऽनया समाख्या । यौगिकी संज्ञा । यथा—अध्वर्युकाण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशादध्वर्योः कर्तृत्वेनाङ्गत्वम् । तथा—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशात् "उभावामिन्द्राग्नी" इत्यादीनां याज्यानुवाक्यात्वेन विनियोगः ( मी. प. )

सांनाय्यम्—( १।१०।४ ) सम्यक् नीयते होमार्थमग्निं प्रतीति सांनाय्यम् । ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहितो दधिपयोरूपो हविर्विशेषः । 'पाय्यसांनाय्य०' ( पा० सू० ३।१।१२९ ) इति निपातनात्साधु ।

सांव्यावहारिकम्—( १।१६।९ वृ० ) व्यवहारोपयोगि । संव्यवह्रियतेऽने-नेति संव्यवहारः । तेन चरतीति सांव्यावहारिकम् ।

सिग्वातः—( ४।४।१ ) सिचो वातः सिग्वातः । सिग्वस्त्रं जीर्णवस्त्रं वा ।

सुश्लोक्य—( १।१७।१२ ) शोभनकीर्तिमान् ।

स्वप्नः—( २।१।१ ) संवेशः । 'स्वपो नन्' ( पा० सू० ३।३।९१ ) इति

न्न् । स्वप्नस्वरूपं तु जाग्रद्दशायामदृष्टवशादात्मा सुखदुःखभोगमुपभुङ्क्ते । तथा स्वप्नावस्थायामपि पूर्वकर्मवशादात्मा नाडीतो निर्गत्य तत्र देशे नवं देहं निर्माय पूर्वं शरीरं तत्रैव देशे प्राणवायुना रक्षन् स्वप्नभोगान् भुक्त्वा पुनरपि पूर्वशरीरे प्रविशति । एतदर्थे शातातपी श्रुतिः ' प्राणेन रक्षन्नपरं कुलायं बहिः कुलायादमृतश्चरित्वा । स ईयते अमृतो यत्र कामो हिरण्मयः पुरुष एकहंसः । स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ' ।

स्वस्तरः—( २।२।६ वृ० ) शय्या ।

स्फ्यम्—( ४।६।४ ) खादिरं बाहुमात्रप्रमाणकं खड्गाकारं काष्ठम् ।

स्वस्त्ययनवाचनम्—( १।८।१९ ) स्वस्ति नाम आशीः, क्षेमं वा । तस्यायनं स्थानम् । स्वस्तीति यासु ऋक्षु ताः सर्वाः स्वस्त्ययनसंज्ञकाः । तासां वाचनं ब्राह्मणद्वारा पाठनम् । मङ्गल्यकर्मारम्भकालिकमन्त्रोच्चारणपूर्वकं तण्डुलविकिरणम् ।

स्रुक्—( १।७।१३ ) स्रवति घृतादिकमस्या इति स्रुक् । होमार्थं यस्यामवदानानि गृह्यन्ते सा ।

हैडम्बिकः—( १८।१० वृ० ) कोद्रुमंज्ञकधान्यविशेषः । ' हरीक ' इति भाषा ।

इति विषमशब्दार्थकोशः ।